२.५

# श्रीउदयनग्रन्थावलिः

(चतुर्थो भागः)



उदयनाचार्यप्रणीतः

# न्यायकुसुमाञ्जलिः

(आमोद-प्रकाश-मकरन्द-बोधनी व्याख्याभिः संवलितः)

## उदयनग्रन्थावलिः

(उत्तरार्ध-भागः)

## उदयनग्रन्थावलिः

(चतुर्थोभागः)

सम्पादकः

**किशोरनाथ झा**

पूर्व प्रवाचकः

प्रयागस्थ-गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठस्य

२००९ ई०

श्रीवल्लभविद्यापीठ श्रीविट्ठलेशप्रभुचरण आ०हो० ट्रस्ट
वैभव को-औपरेटिव्ह सोसाइटी, पूना बेंगलोर रोड,
कोल्हापुर, महाराष्ट्र- ४१६००८
*के सम्पूर्ण अनुदान से प्रकाशित*

प्रकाशक :
**किशोरनाथ झा**
ग्रा० बिट्ठो, पो० सरिसब-पाही
जि० मधुबनी - ८४७४२४ (बिहार)

५०० प्रतियाँ (२००९ ई०)

मुद्रक :
**रमा आर्ट्स**
४, चुनावाला इण्डस्ट्रियल एस्टेट,
कोंडिविटा, अन्धेरी (पूर्व)
मुम्बई ४०००५९

मूल्य -

टाइप सेटिङ -
**एकेडेमी प्रेस**, दारागञ्ज, इलाहाबाद २११००६

# प्रकाशकीय

इष्टदेवता की कृपा तथा गुरुजनों के आशीर्वाद से चार व्याख्याओं के साथ–शङ्करमिश्रकृत आमोद, वर्धमानउपाध्यायकृत प्रकाश, रुचिदत्त कृत मकरन्द तथा वरदराजमिश्रकृत बोधनी के साथ न्यायकुसुमाञ्जलि का उत्तरार्ध भाग सुधीजनों के कर कमलों में अर्पित करते हुए मुझे अत्यधिक मनस्तोष एवं प्रसन्नता का अनुभव हो रहा है। स्मरण होता है कविकुल गुरु कालिदास का श्लोक –

सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम्।

वातव्याधि से अधिक पीड़ित हो जाने पर जब मेरा मनोबल टूट रहा था, आत्म विश्वास लड़खड़ाने लगा था कि संकल्पित अनुष्ठान मैं पूरा कर सकूँगा या नहीं, वैसे ही क्षण में उक्त श्लोक की स्मृति मुझे पथारूढ कर आश्वासन देता रहा। अतः ईश्वर के चरणों में सतत मेरा प्रणामाञ्जलि अर्पित होता रहा। इस ग्रन्थ के सम्पादन–प्रकाशन में अनावश्यक विलम्ब का कारण मेरा अस्वास्थ्य ही है।

उदयन ग्रन्थावली के सम्पादन एवं प्रकाशन का सम्पूर्ण श्रेय भारतीय एवं पाश्चात्य दर्शनों के अधिकारी विद्वान, सम्मान्य मित्रमणि श्रीमान् गोस्वामी श्याम मनोहर जी का (बम्बई) है। इनका सर्वविध साहाय्य तथा उत्साहवर्धक उद्बोधन ही यहाँ मेरा सम्बल रहा है। सम्मान्य गोस्वामी जी का हृदय विशाल एवं उदार है। अपने वल्लभ सम्प्रदाय के प्रति अधिक निष्ठा रहने पर भी अन्य सम्प्रदायों तथा शास्त्रों की प्रतिष्ठा हेतु इनकी जागरूकता एवं औदार्य आकलनीय एवं अनुकरणीय है। पाँच भागों में प्रकाशनीय उदयनग्रन्थावली के सम्पादन तथा प्रकाशन का प्रस्ताव देते हुए इन्होंने मुझ से कहा था कि इनके प्रकाशन से अपने पूर्वज विद्वानों का ऋण शोध होगा। हम लोगों का पवित्र कर्तव्य है कि

इन ग्रन्थों का सम्पादन, प्रकाशन तथा विद्वानों के मध्य वितरण हो। शङ्कर मिश्र की कल्पलता व्याख्या के साथ आत्मतत्त्वविवेक के प्रकाशन के पश्चात् प्रसन्न होकर इन्होंने कहा था कि इस आत्मतत्त्वविवेक की रघुनाथ शिरोमणि प्रणीत दीधिति व्याख्या तथा मेघ प्रसिद्ध भगीरथ ठक्कुर कृत प्रकाश व्याख्या भी प्रकाशनीय है। उसी समय इन्होंने अपने वैयक्तिक पुस्तकालय से लाकर दोनों ही व्याख्याएँ मुझे हस्तगत कराई, जो इस ग्रन्थावली के द्वितीय भाग के रूप में प्रकाशित होना है। उसी समय न्यायकुसुमाञ्जलि की बोधनी तथा लक्षणावली की दो व्याख्याएँ शेषशार्ङ्गधर तथा विश्वनाथ झा प्रणीत भी इन्होंने मुझे दी! जो इस ग्रन्थावली के पञ्चम भाग के रूप में प्रकाशनीय है। चार व्याख्याओं के साथ न्यायकुसुमाञ्जलि का पूर्वार्ध (द्वितीय स्तबक पर्यन्त) इस ग्रन्थावली के तृतीय भाग के रूप में प्रकाशित होकर सुधीजनों का हस्तगत हो चुका है।

वल्लभ वेदान्त के प्रति श्रद्धालु वैष्णवजनों के द्वारा कोल्हापुर, महाराष्ट्र में स्थापित जिस ट्रस्ट से अनेक भागों में प्रकाशनीय इस उदयन ग्रन्थावली को सम्पूर्ण रूप से आर्थिक साहाय्य उपलब्ध हुआ है वह ट्रस्ट वस्तुतः श्लाघनीय तथा धन्य है। इस ट्रस्ट ने न केवल इस ग्रन्थावली के प्रकाशन का व्ययभार उठाया है अपितु न्यायदर्शन के प्रति रुचिसंपन्न, भारतभर के विद्वानों के कर कमलों में अपने व्यय से प्रेषित कर उपहार रूप में इसका वितरण भी किया है। मैं इस प्रकाशन तथा वितरण कार्य से सन्तुष्ट एवं प्रसन्न होकर ट्रस्ट के अधिकारी तथा सदस्यों के प्रति अपनी ओर से कृतज्ञता ज्ञापित करता हूँ।

यद्यपि उदयनाचार्य की कृतियों के सम्पादन की योग्यता मैं अपने में नहीं देखता तथापि ट्रस्ट के प्रस्ताव को टालना मेरे लिए संभव नहीं हुआ। न्याय दर्शन के साधारण विद्यार्थी होने के कारण न्याय दर्शन के ग्रन्थों के प्रचार प्रसार को मैं अपना पवित्र कर्तव्य मानकर यहाँ प्रवृत्त हुआ। हृदय के किसी कोने में स्वार्थ भी पनपने लगा कि इससे अपनी बुद्धि की शुद्धि भी संभव है। अतएव हृदय से मैं इस ट्रस्ट का आभार मानता हूँ।

यहाँ ग्रन्थ में भूमिका नहीं दी जा रही है। इसके पूर्वार्ध के प्रकाशन में यथामति अपेक्षित भूमिका दी जा चुकी है। यद्यपि यथामति साध्यानुसार अवधान पूर्वक मूल एवं व्याख्याओं का परिशुद्ध पाठ प्रस्तुत करने का प्रयास किया गया है। तथापि इसकी सफलता का आकलन तो सुधी-पाठकों पर ही निर्भर है। मैं

मानता हूँ कि मेरी अज्ञानता तथा अनवधानता से इसमें पर्याप्त मात्रा में सम्पादकीय त्रुटियाँ हुई होंगी। भगवान् श्री कृष्ण ने भगवद्गीता में कहा है –

**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृता:।**

नवीन वाचस्पति मिश्र ने न्यायतत्त्वालोक में स्पष्ट कहा है कि वचन के पथ पर चलता हुआ सावधान विद्वान् का भी मोहवश स्खलन हो जाता है–**'को न मुह्यति वचः पथे चरन्'**। अतः सुधी पाठकों से भट्टकुमारिल के शब्दों में ही मेरी विनम्र प्रार्थना है –

**तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः।**
**सन्तः प्रणयिवाक्यानि गृह्णन्तिह्यनसूयवः**

अन्त में मैं एकेडेमी प्रेस इलाहाबाद के व्यवस्थापक श्रीमान् सुरेन्द्रमणि त्रिपाठी एवं उनके सहयोगियों को विशेष रूप से चिरञ्जीवी श्री ब्रह्मानन्द मिश्र को धन्यवाद तथा शुभाशीर्वाद देता हूँ। इन्होंने धैर्यपूर्वक लगन से इस ग्रन्थ का कम्पोजिङ कराया/किया तथा प्रूफ संशोधन के समय मेरे निर्देशों का अनुपालन किया है। जिस प्रेस से इसका मुद्रण हो रहा है तथा जिसने इसका आवरण प्रस्तुत किया है उस प्रेस तथा आवरण शिल्पी से यद्यपि मेरा साक्षात् परिचय नहीं है तथापि उन सभी सहयोगियों के प्रति मेरी अजस्र शुभ कामना समर्पित है। जिन लोगों से मुझे इस कार्य में यत्किञ्चित् भी साहाय्य मिला है, उन सब के प्रति भगवान् राम की उक्ति ही मेरी शरण है–

**मय्यवे जीर्णतां यातु यत्त्वयोपकृतं प्रधीः।**

*सुधीजनों का आश्रव*

**किशोर नाथ झा**

बिट्ठो, (मधुबनी–बिहार)

कृष्णाष्टमी १४/८/२००९ ई०

# विषयसूची

**विषयः** **पृष्ठसंख्या**

**तृतीयस्तबके**

चतुर्थस्तबके



पञ्चमस्तबके

# तृतीयः स्तबकः

**नन्वेतदपि कथम्? तत्र बाधकसम्भवात्। तथा हि – यदि स्यादुपलभ्येत। अयोग्यत्वात् सन्नपि नोपलभ्यते इति चेत्, एवं तर्हि शशशृङ्गमप्ययोग्यत्वान्नोपलभ्यते इति स्यात्। नैतदेवं, शृङ्गस्य योग्यतयैव व्याप्तत्वादिति चेत्, चेतनस्यापि योग्योपाधिमत्तयैव व्याप्तत्वात्। तद्बाधे**

---

**आमोदः–** तदभावावेदकेत्यादि (न्या.कु.I.4) तृतीयां विप्रतिपत्तिं दूषयितुमुपन्यस्यति **नन्विति। एतदपीति।** अन्यथासिद्धिनिराकरणमपीत्यर्थः। प्रकृते बलवद्बाधकसत्त्वात् साधकमप्यप्रयोजकमिति भावः। अत्र योग्यानुपलम्भसहायं प्रत्यक्षमेव बाधकं शङ्कते **यदीति।** यदि क्षित्यादि सकर्तृकं स्यात्तद्वत्तयोपलभ्येतेत्यर्थः। तथा च योग्यानुपलब्ध्या यदि ईश्वरात्यन्ताभावान्योन्याभावौ साध्येते तदा सिद्धसाधनम्। प्रागभावप्रध्वंससाधने तु *परस्या*पसिद्धान्त इति निरस्तम्। अयोग्ये योग्यानुपलब्धिर्न बाधिकेत्याशङ्कते **अयोग्यत्वादिति।** तर्हि पशुत्वाच्छशे शृङ्गमपि सिद्ध्येदित्याह **तर्हीति।** शृङ्गं योग्यानुपलब्ध्या बाधितुं शक्यते तस्य योग्यतयैव व्याप्तत्वात्, न त्वीश्वर इत्याह **नैतदिति।** शरीरविशिष्ट एव कर्ता, स च योग्य एवेति तत्रापि योग्यानुपलब्धिर्बाधिकेत्याह **चेतनस्यापीति। तद्बाध इति।** विशेषणस्य बाधे

---

**प्रकाशः–** तृतीयां विप्रतिपत्तिं दूषयितुमुपन्यस्यति **नन्वेतदपीति।** अन्यथा-सिद्धिनिराकरणमपि कथमीश्वरसाधनाय, तत्र प्रत्यक्षबाधादित्यर्थः। तत्र स्वरूपसदनुपलब्धि-सहकृतप्रत्यक्षबाधमाह **तथा हीति।** यद्यप्यनुपलम्भेनेश्वरान्योन्याभावात्यन्ताभावसाधने इष्टापत्तिः, प्रागभावप्रध्वंससाधने चापसिद्धान्तः। तथापि क्षित्यादिकं यदि सकर्तृकं, *वेदश्च* यदि सकर्तृकः स्यात्तदा तद्वत्तयोपलभ्येत इत्यर्थः। अनुपलब्धिमात्रस्य बाधकतायामयोग्योच्छेद इति योग्यानुपलब्धिर्बाधिका वाच्येत्याह **अयोग्यत्वादिति।** एवं शशः शृङ्गी पशुत्वादित्यत्रापि तद्बाधो न स्यादयोग्यत्वाच्छृङ्गस्येत्याह **एवमिति।** शृङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यतया योग्यव्यक्तिवृत्तित्वनियमान्नायोग्यं शृङ्गमित्याह **शृङ्गस्येति।** एवं शरीरविशिष्टात्मनि कर्तृत्वेन कर्तृयोग्यतानियमाद्विशेषणबाधेन विशिष्टबाध एवेत्याह **चेतनस्यापीति।**

---

**मकरन्दः**

अनुपलब्धेः स्वातन्त्र्येण प्रामाण्यानभ्युपगमान्न बाधकत्वमत आह **तत्रेति। विशेषणबाधेनेति।** शरीरबाधेन कर्त्तुर्बाध एवेत्यर्थः। प्रत्यक्षबाधस्येत्युपलक्षणम्,

***सोऽपि बाधित एवेति तुल्यम्। व्यापकस्वार्थाद्यनुपलम्भेनाप्यनुमीयते नास्तीति। को हि प्रयोजनमन्तरेण किञ्चित्कुर्यादिति। उच्यते –***

***योग्याऽदृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम्।***
***क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम्।।१।।***

***आमोदः***– विशिष्टमपि बाधितमिति। तथा प्रत्यक्षत एव बाधः सिद्ध इत्यर्थः। यद्वा, शरीररूपव्यापकानुपलब्धिबाधपरोऽयं ग्रन्थोऽग्रे च व्यापकानुपलब्धिबाधपरः। अत एव व्यापकश्चार्थादित्यग्रे। व्यापकं विशिनष्टि *स्वार्थादीति*। स्वप्रयोजना-दिव्यापकश्चासौ स्वार्थादिश्चेति कर्मधारयः। स्वेष्टसाधनताया व्यापकत्वमेव दर्शयति – *को हीति*।

***योग्याऽदृष्टिः*** योग्यानुपलब्धिः। ***अयोग्ये*** परमात्मनि। योग्यविशेष-गुणोपधानाभावात् परमात्मा अयोग्यः। तत्र योग्यानुपलब्धिर्नाभावग्राहिकेत्यर्थः। शृङ्गं यदि योग्यसंस्थाननियतं न भवति तदा तदप्ययोग्यं न बाधते। अथ तन्मात्रनियतं तदा बाध्यत एवेत्याह *प्रतिबन्धिरिति*। एतदेवाह *क्वायोग्यमिति*। ईश्वरो न कर्ता अशरीरित्वादित्यादिव्यापकानुपलब्धिलिङ्गकमनुमानं वाच्यं, तच्च सिद्ध्यसिद्धिपराहतमित्याह –*क्वानुमानमनाश्रयमिति*। ननु योग्यविशेष-गुणोपहितस्यात्मनो ग्रहे चरमलिङ्गपरामर्शोपहितं स्यात्तथा च नानुमितिः काऽपि

***प्रकाशः***– न तु कर्तृव्यापकशरीरबाधाद् व्याप्यकर्तृबाधपरोऽयं ग्रन्थः प्रत्यक्षबाधस्योपक्रान्तत्वात्। व्यापकानुपलब्धिलिङ्गकानुमानं बाधकमाह *व्यापकेति*। व्यापकश्चासौ स्वार्थादिश्चेति कर्मधारयः। आदिपदाच्छरीरादि। चेतनप्रवृत्तेः स्वेष्टसाधनताज्ञानव्याप्तत्वात् तद्बाधनेन सापि बाधितैवेत्यर्थः।

***योग्यादृष्टिरिति***। योग्यानुपलब्धिः। ***क्वायोग्ये*** परमात्मनि बाधिका, शृङ्गस्यापि तथात्वे तत्रापि योग्यानुपलब्धिर्न बाधिका। न हि शशशृङ्गमयोग्यं योग्यानुपलब्ध्या निषिद्ध्यते येन प्रतिबन्धिः स्यात्। अथ शृङ्गं योग्यमेव नायोग्यं, तदा अतितरां न प्रतिबन्धिः। व्यापकानुपलब्धिलिङ्गकञ्चानुमानमीश्वरासिद्धावाश्रयासिद्धम्, तत्सिद्धौ वा धर्मिग्राहकप्रमाणबाधितमित्यर्थः।

***मकरन्दः***– अग्रिमेण पौनरुक्त्यापातादित्यपि द्रष्टव्यम्। ***स्वेष्टेति***। यद्यपि जगत एव तदिच्छाविषयत्वात् स्वेष्टसाधनताज्ञानं तस्यापि, तथापि स्वप्रयोजनव्याप्यत्वादिति मूलोक्त एव तात्पर्य्यम्। स्वप्रयोजनप्रयोजकताज्ञानव्याप्यत्वादित्यर्थः। ***तथात्वे***–अयोग्यत्वे। प्रतिबन्धिसामान्यनिषेधे कृते अतितरां न प्रतिबन्धिरिति युज्यते

**स्वात्मैव तावत् योग्यानुपलब्ध्या प्रतिषेद्धुं न शक्यते, कुतस्त्वयोग्यः परमात्मा। तथा हि – सुषुप्त्यवस्थायामात्मानमनुपलभमानो नास्तीत्यवधारयेत्। कस्यापराधेन पुनर्योग्योऽप्यात्मा तदानीं नोपलभ्यते? सामग्रीवैगुण्यात्। ज्ञानादिक्षणिकगुणोपधानो ह्यात्मा गृह्यते इत्यस्य स्वभावः। ज्ञानमेव कुतो न जायते इति चिन्त्यते। पश्चाद्वा कथमुत्पत्स्यते इति चेत्, मनसोऽनिन्द्रियप्रत्यासन्नतया अजननात् तत्प्रत्यासत्तौ च पश्चाज्जननात्।**

---

**आमोदः**– भवेदिति चेन्न। तृतीयलिङ्गपरामर्शस्यानुद्भूतत्वेनायोग्यत्वात् आद्यन्तशब्दवत्। यद्वात्ममनःसंयोगविशेषस्यात्मग्राहकत्वात्तदानीमभावान्नात्मग्रहः। स च फलबलकल्पनाय एव। योग्यविशेषगुणोपधानमात्मग्रहे नियामकमिति व्यवस्थापयितुमाह **स्वात्मैवेति**। अन्यथा सुषुप्त्यवस्थायामनुपलम्भात्तद्व्यतिरेको गृह्येतेत्यत आह **सुषुप्तीति**। एतदेव स्पष्टयितुं पृच्छति **कस्येति**। **क्षणिकगुणोपधानः** क्षणिकगुणविशिष्टः, क्षणिकेति च परममहत्त्वव्यावृत्तये। ननु यत एव ज्ञानाग्रहस्तत एव नात्मग्रह इत्याह **ज्ञानमेवेति**। द्रव्यसाक्षात्कारे सामान्ययोग्यतायां विशेषगुणोपधानस्य तन्त्रत्वेन क्लृप्तत्वात्। अत्रापि तथैव

---

**प्रकाशः**– **सामग्रीति**। यथा योग्योऽपि घटादिरालोकाभावान्नोपलभ्यते, तथाऽऽत्मा क्षणिकज्ञानादियोग्यविशेषगुणाद्युपधानसहकार्यभावाद् नोपलभ्यत इत्यर्थः। यद्यप्येवमुपधायकतृतीयलिङ्गपरामर्शसत्त्वादात्मबुद्धिरेव स्यान्नानुमितिः। न चानुमितिसामग्र्येव प्रतिबन्धिका, कारणमेलकरूपायां सामग्र्यामितरकारणानां व्यभिचारात् तृतीयलिङ्गपरामर्श एव प्रतिबन्धको वाच्यः, तस्य च योग्यविशेष गुणत्वेनात्मोपलम्भकस्यातथात्वम्। तथापि रूपवत्प्रत्यक्षविशेषणगुणत्वा ज्ज्ञानेऽप्युद्भवत्वजातिसत्त्वादनुद्भूतज्ञानस्य नात्मोपलम्भकत्वमिति तदुपधानेऽपि नात्मग्रहः। अत एवाद्यन्तशब्दयोरुद्भवत्वाभावान्न प्रत्यक्षत्वमित्येके। आत्ममनः संयोगविशेषस्यात्मग्राहकत्वमनेनोक्तमित्यन्ये। **मनस इति**। यद्यपि सुषुप्तौ यत एव न ज्ञानं तत एवात्माऽग्रहोपपत्तौ योग्यविशेषगुणोपधानमतन्त्रं, तथापि द्रव्यसाक्षात्कारे सामान्यत एव योग्यविशेषगुणस्य प्रयोजकत्वावधारणादेतदुक्तम्।

---

**मकरन्दः**– इति तदर्थपरतया प्रथमं तृतीयमेव पादं व्याख्याय द्वितीयपादं व्याचष्टे **अथेति**। **व्यभिचारादिति**। तेषु सत्स्वप्यात्मप्रत्यक्षप्रतिबन्धाभावादित्यर्थः। **अतथात्वमिति**। एकस्य कारकत्वप्रतिबन्धकत्वविरोधादित्यर्थः। **तथापीति**। तथा च परामर्शेऽप्यनुद्भवान्न तथात्वमिति भावः। ननु हेत्वन्तरवत् परामर्शोऽपि व्यभिचारी,

**मनोवैभववादिनामिदमसम्मतम्। तथा हि – मनो विभु, सर्वदा स्पर्शरहितद्रव्यत्वात्, सर्वदा विशेषगुणशून्यद्रव्यत्वात्, नित्यत्वे सत्यनारम्भकद्रव्यत्वात्, ज्ञानासमवायिकारणसंयोगाधारत्वादित्यादेरिति चेन्न। सर्वेषामापाततः स्वरूपासिद्धत्वात्। तथा हि – यदि रूपाद्युपलब्धीनां**

**आमोदः**– कल्पयितुमुचितम्। अतस्तदनुत्पादमेव समर्थप्रतिमनस इति। **इदमिति।** इन्द्रियाप्रत्यासन्नत्वमित्यर्थः। आद्यक्षणे घटादेरपि स्पर्शरहितत्वाद् व्यभिचारः स्यादत उक्तम् **सर्वदेति।** गुणादौ व्यभिचारादाह **द्रव्यत्वादिति।** एवमग्रेऽपि। **अनारम्भकत्वं** द्रव्यानारम्भकत्वम्। अन्त्यावयविनि व्यभिचारवारणाय **नित्यत्वे सतीति।** हेतुत्रये कालादिश्चतुर्थे त्वात्मा दृष्टान्तः। सुखादिकम् मूर्तसंयोगा-समवायिकारणकगुणवृत्तिगुणत्वव्याप्यजातिमत्, अनित्यत्वे सति नित्य-वृत्तिविशेषगुणत्वात्, शब्दवदिति प्रतिरोध इति चेत्, न। मूर्तत्वस्याप्रयोजकत्वात्। व्यापकभावेऽपि विशेषणानर्थस्योक्तत्वात्। **आपातत इति।** मनोद्रव्यत्व-सिद्धिपर्यन्तमित्यर्थः। क्रमेण तु धर्मिग्राहकमानबाधोऽनुमानानामिति भावः। स्वरूपासिद्धिं तावत् स्पष्टयति **तथा हीति। यदेति।** सुखाद्युपलब्धिः सकरणिका

**प्रकाशः– असम्मतमिति।** विभुनो मनस इन्द्रियाप्रत्यासत्तेरभावादित्यर्थः। **सर्वदेति।** द्रव्यत्वं परमाणुभिः, स्पर्शरहितत्वं च गुणादिभिर्व्यभिचारीति विशिष्टं लिङ्गम्। तस्याप्युत्पत्तिक्षणे घटे सत्त्वाद् व्यभिचार इत्यत उक्तं, **सर्वदेति। अनारम्भकद्रव्यत्वं** = द्रव्यानारम्भकद्रव्यत्वमत्र विविक्षितम्। अतो न कर्मसंयोगाद्यारम्भके मनसि स्वरूपासिद्धिः। तथापि घटेऽनैकान्तिक इत्यत उक्तं, **नित्यत्व इति।** कालादिर्दृष्टान्तः। चतुर्थहेतावात्मा दृष्टान्तः। न च महत्त्वमुपाधिः, साधनव्यापकत्वात्। न च सुखादिकं मूर्त्तसंयोगासमवायिकारणकगुणवृत्ति गुणत्वव्याप्यजातिमत्, नित्यवृत्त्यनित्यविशेषगुणत्वाच्छब्दवत् पाकजवच्चेति प्रतिरोधः। मूर्त्तत्वस्याप्रयोजकत्वात्, अनात्मवृत्तित्वस्योपाधित्वाच्चेति भावः। **आपातत इति।** यावन्मनो न सिद्ध्यतीत्यर्थः। स्वरूपासिद्धिमेवाह **तथाहीति।**

**मकरन्दः**

सत्यपि तस्मिन् बाधादिना अनुमितिप्रतिबन्धे परामर्शोपहितात्मप्रत्यक्षसत्त्वात्। अन्यथा वह्निव्याप्यवन्तं जानामीत्यनुव्यवसायानभ्युपगमे अनुभवविरोधात्। तस्मात् प्रत्येकमप्रतिबन्धकत्वेऽप्यनुमितिसामग्रीत्वेन तद्धेतूनां फलबलात् प्रतिबन्धकत्वम्। परामर्शस्य च रूपान्तरेण तदुपलम्भकत्वमिति नोक्तविरोधः। यदि च सकलहेत्वधिकरणक्षणः सामग्री, तदा तस्य परामर्शभिन्नत्वाद्विरोधशङ्कैव नास्ति।

**क्रियात्वेन करणतया मनोऽनुमितिर्न तदा द्रव्यत्वसिद्धिः, अद्रव्यस्यापि करणत्वात्। अथाऽऽसामेव साक्षात्कारितयेन्द्रियत्वेन तदनुमातव्यम्, तथापि**

**मकरन्दः**– एवञ्चोपपत्तौ न ज्ञानादावुद्भूतत्वं, मानाभावात्। आद्यशब्दाग्रहश्च श्रोत्रेणासम्बन्धात्। सम्बन्धे वा तद्ग्रहस्येष्टत्वात्। क्षणिकान्तशब्दस्य च स्वासमयवर्त्तितया विशिष्य हेतुत्वपक्ष एवाप्रत्यक्षत्वात्। न च कर्तृत्वादिनिर्विकल्पकापेक्षायां पक्षान्तरेऽप्यसम्भवः, सुतरां तर्हि नोद्भूतत्वम्। स्मरणरूपविशेषणज्ञानमादाय तत्सम्भवाच्चेत्यनुशयमाविष्करोति *इत्येके इति*। उक्तेनैवोपपत्तौ मनःसंयोगविशेषत्वेन हेतुत्वे गौरवं, संयोगे विशेषश्च जातिरूपः प्रत्यक्षखण्डोक्तसङ्करापत्त्या निरस्तः। अन्यश्च दुर्वच इत्यस्वरसमाविष्करोति *इत्यन्ये इति*। *कर्मेति* न्यायमते। **संयोगादीति** *भट्टमते*। स्वमतावष्टम्भेनाह **साधनेति**। अन्यथा पक्ष एव साधनाव्यापकत्वात्। अजसंयोगेन सिद्धसाधनादाह **मूर्त्तेति**। चन्दनसंयोगेन सिद्धसाधनादाह **असमवायीति**। शब्दजशब्दे व्यभिचार–वारणाय जातिगर्भत्वम्। तत्र च गुणपदं स्पष्टार्थम्। गुणत्वावान्तरपदं तादृशशब्दवृत्ति सत्तायोगित्वेनार्थान्तरवारणाय। शब्दसुखान्यतरत्वादिकमादायार्थान्तरादाह **जातिपदम्**। जलावयविस्नेहे व्यभिचारादाह **नित्यवृत्तीति**। परमाणुस्नेहे व्यभिचारादाह **अनित्येति**। आत्मवृत्तिद्वित्वे व्यभिचारादाह **विशेषेति**। *भट्टमते* शब्दस्य द्रव्यत्वादुभयसिद्धं दृष्टान्तान्तरमाह **पाकजवच्चेति**। **अनात्मेति**। साधनावच्छिन्नसाध्यव्यापकोऽयमुपाधिः, अन्यथा प्रचयजन्यपरिमाणवृत्ति–जातियोगिन्यात्मपरिमाणे साध्याव्यापकत्वात्। **ज्ञानेति**। जन्यत्वमपि पक्षविशेषणमतो नेश्वरप्रत्यक्षभागे बाधः। **इन्द्रियजन्यः**= विषयप्रत्यासन्नसंयोगिकरणजन्य इत्यर्थः। तेनेन्द्रियत्वस्य मनोगर्भत्वादिदानीं न साध्याप्रसिद्धिः। **यथेति**। यद्यप्यतिप्रसङ्गभिया श्रोत्रस्योपाधिकल्पनेऽप्यत्र तदभावान्न तत्कल्पनमर्हं बहिरिन्द्रियत्वञ्चाप्रयोजकम्,

**आमोदः**– क्रियात्वात् छिदिक्रियावदित्यनुमानं न द्रव्यत्वपर्यवसन्नमित्यर्थः। **अद्रव्यस्यापीति**। अनुमितौ ज्ञानस्यापि करणत्वादिति भावः। द्रव्यत्वपर्यवसान शङ्कते **अथेति**। **आसां** सुखाद्युपलब्धीनाम्। सुखसाक्षात्कारः इन्द्रियकरणकः

**प्रकाशः**– **अद्रव्यस्यापीति**। लिङ्गज्ञानादेरित्यर्थः। द्रव्यत्वविनाकृतञ्च रूपादिभिर्व्यभिचारीति भावः। **अथेति**। ज्ञानकरणाजन्यः सुखाद्यनुभव इन्द्रियजन्यः जन्यप्रत्यक्षत्वात्, रूपप्रत्यक्षवत्। स्पर्शाद्यविषयत्वेन विशेषणान्न त्वगादिना अर्थान्तरम्। गन्धादिष्वेकैकमात्रप्रत्यक्षजनकत्वेन पृथिव्यादिभेदसिद्धौ निःस्पर्शं, लाघवाच्च निरवयवमित्यर्थः। **तथापीति**। यथा श्रोत्रस्य विभ्विन्द्रियतया

**व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। तत्र यदि कर्णशष्कुलीवन्नियतशरीरावयवस्योपाधित्वं, तदा तावन्मात्रे वृत्तिलाभः। तद्दोषे च वृत्तिरोधः श्रोत्रवत् प्रसज्येत। ततः शरीरमात्रमुपाधिरवसेयः। तथा च तदवच्छेदेन वृत्तिलाभे 'शिरसि मे वेदना, पादे मे सुखमि'त्याद्यव्याप्यवृत्तित्वप्रतीतिविरोधः। असमवायिकारणानुरोधेन विभुकार्याणां प्रादेशिकत्वनियमात्। शरीरतदवयवादिपरमाणु**

---

**आमोदः**- साक्षात्कारत्वात् रूपसाक्षात्कारवदित्यनुमानेन करणमिन्द्रियं सिध्यति। इन्द्रियत्वञ्च स्मृत्यजनकवृत्तिज्ञानकारणमनः संयोगाश्रयत्वमिति सिद्धं मनोद्रव्यत्वमिति न हेतवः स्वरूपासिद्धा इत्यर्थः। **इन्द्रियत्वेनेति।** मनःसंयोगाश्रयत्वघटितत्वादिन्द्रिय-त्वस्येति भावः। परिहरति **तथापीत्यादिना धर्मिग्राहकमानबाध** इत्यन्तेन। ननु शरीरमात्रस्योपाधित्वे को दोष इत्यत आह **तथा चेति।** शरीरावच्छेदेनैव सुखोत्पत्तिरिति किमियं राजाज्ञेत्यत आह - **असमवायीति। विभुकार्याणां** विभुविशेषगुणानामित्यर्थः। तेन परमाणुवृत्त्यैकत्वासमवायिकारणकाणुत्वादिना

---

**प्रकाशः**-कर्णशष्कुल्यवच्छिन्नस्यैवेन्द्रियत्वात्तदनवच्छेदेनोत्पन्नोऽपि शब्दो न गृह्यते, तदवच्छेदेनोत्पन्नस्यापि तस्य तदुपघातान्न ग्रहः। तथा मनोऽनवच्छेदकशरीरावय-वावच्छेदेनोत्पन्नं सुखाद्यपि तदवच्छेदेनोत्पन्नञ्च तदुपधानान्न गृह्येतेत्यर्थः। **असमवायीति।** कार्यविभुविशेषगुणे चायन्नियमोऽतो न व्याप्यवृत्तिकर्मजन्य-विभुपरमाणुसंयोगेन व्यभिचारः।

ननु किमसमवायिकारणं स्वावच्छिन्ने विभुकार्यं जनयतीति नियमः, स्वावच्छिन्ने जनयत्येवेति वा, स्वावच्छिन्न एव जनयतीति वा?। आद्ये सुखादेरधिक-देशतायामापादकाभावः। द्वितीये चाणुमनः संयोगोऽपि स्वावच्छिन्नेऽधिकदेशे च जनयेत्, नियामकाभावात्। अन्त्ये तवापि सुखादेरणुदेशतापत्तिः, मनोवैभवेऽपि तदविरोधश्च। अथ निमित्तचन्दनाद्यनुरोधेन सुखादौ न्यूनाधिकदेशता निमित्तवायुसंयोगादिव शब्दे, न त्वसमवाय्यनुरोधात्। तर्हि मनोवैभवेऽपि तथाऽस्तु। न च विभुकार्यासमवायिकारणं स्वावच्छिन्ने करोत्येव, भेर्याकाशसंयोग इव शब्दमिति चन्दनाद्यनवच्छिन्नेऽपि सुखादि स्यादिति वाच्यम्। तद्देशावच्छिन्नचन्दनसुखे हि तद्देशचन्दनसापेक्षोऽसमवायीति कथं तन्निरपेक्षस्तत् कुर्यात्। तथा च शरीरमात्रस्योपाधित्वेऽपि निमित्तवशात् सुखादेर्नियतदेशत्वं स्यात्।

*पर्यन्तोपाधिकल्पनायां कल्पनागौरवप्रसङ्गो नियमानुपपत्तिश्चेति। ततोऽन्यदेवैकं सूक्ष्ममुपाधित्वेनातीन्द्रियं कल्पनीयम्। तथा च तस्यैवेन्द्रियत्वे स्वाभाविकेऽधिककल्पनायां प्रमाणाभावाद्धर्मिग्राहकप्रमाणबाधः। अथ ज्ञानक्रमेणेन्द्रियसहकारितया तदनुमानं ततः सुतरां प्रागुक्तदोषः। यदि च मनसो वैभवेऽप्यदृष्टवशात् क्रम उपपाद्येत तदा मनसोऽसिद्धेराश्रया-सिद्धिरेव वैभवहेतूनामिति।*

*आमोदः*– न व्यभिचारः। तेन संयोगादिना न व्यभिचारः। विभुकार्यविशेषगुणस्य स्वासमवायिकारणान्यूनदेशत्वं च साध्यते। न मनोवैभववादिनां शरीरावच्छेदेनैव सुखादि न पादादिमात्रावच्छेदेनेति भावः। ननु कश्चिदेवावयवः उपाधिः स्यादिति कुतो गौरवमत आह *नियमेति।* पाणिः पादो वेति नियमो न स्यादित्यर्थः। सुखाद्युत्पत्तिनियतदेशत्वेन स्यादित्यर्थ इत्येके। *धर्मिग्राहकेति।* यद्यपि इन्द्रियत्वेन मनःसिद्धिर्न वैभवव्यतिरेकपर्यवसन्ना, तथाप्युक्ततर्कसाचिव्येनाणुत्व-सिद्धिपर्यवसन्नैवेति धर्मिग्राहकमानबाध इत्यर्थः। ज्ञानानां क्रमः क्रमिकसहकारिसापेक्ष इति। तच्च सहकारि मन एव स्यादित्याशङ्क्य निराकरोति *अथेति। प्रागुक्तदोषः* स्वरूपासिद्धिलक्षणः। न हि तादृशं सहकारिद्रव्यमेव भविष्यतीति नियम इति भावः। अणुनैव मनसा ज्ञानक्रम उपपद्यत इति धर्मिग्राहकमानबाध इत्येके। अदृष्टाधीनश्चेत् ज्ञानक्रमस्तदा मनःस्थानेऽदृष्टमेवाभिषिच्यताम्, किं मनसेत्याश्रयासिद्धा एव हेतव इत्याह *यदि चेति।*

*प्रकाशः*– अत्राहुः। विभुकार्यविशेषगुणस्य न स्वासमवायिकारणन्यूनदेशत्वमिति नियमः। मनोवैभवे च शरीरं व्याप्यैव मनःसंयोगोऽसमवायीति तदवच्छेदं व्याप्यैव सुखादेरुत्पत्त्यापत्तिः। ततः पादावच्छिन्नं सुखं यदि शरीरावच्छिन्नासमवायिकारणकं स्यात्, शरीरव्यापकं स्यात्। निमित्तकारणस्य चाधिकदेशत्वमात्रप्रयोजकत्वात्। अत एव निदाघतप्तस्य अम्भसि मग्नस्य सर्वाङ्गीणसुखधीरुपपन्नेति भावः। *नियमेति।* सर्वेषामेव शरीरादीनामुपाधित्वे कुतो नियतदेशसुखाद्युत्पत्तिरित्यर्थः। *धर्मिग्राहकेति।* सुखाद्युपलब्धीनामिन्द्रियजत्वानुमाने मनोऽणुत्वानुल्लेखेऽपि अनुपपत्तिवशादणुत्वं विषय इति धर्मिग्राहकतुल्यतया तद्बाध उक्तः। *प्रागुक्तेति।* धर्मिग्राहकमानबाध इत्यर्थः। युगपदनेकविषयसम्बद्धनानेन्द्रियसंयोगे सति ज्ञानक्रमानुपपत्तेरणुत्वेनैव तदुपपत्तेरिति भावः। यदि चादृष्टवशान्नोक्तदोषावकाशस्तदा तत एव ज्ञानक्रमोऽपि स्यादिति मनःसिद्धौ न मानमस्तीत्याश्रयासिद्धा हेतव इत्याह *यदि चेति।*

**अथ यत्रादृष्टस्य दृष्टकारणोपहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पद्यत एव। अन्यथा, अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित् पटो न जायेत। जातोऽपि वा कदाचिन्निर्गुणः स्यात्। बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत। यत्र तु दृष्टानुपहारेणादृष्टव्यापारस्तत्र तद्वैगुण्यात् कार्यानुदयः, यथा परमाणुकर्मणः। तदिहापि यदि विषयेन्द्रियात्मनां समवधानमेव ज्ञानहेतुः, तदा तत्सद्भावे सदैव कार्यं स्यात्। न ह्येतदतिरिक्तमप्यदृष्टस्योपहरणीयमस्ति। न च सदैव ज्ञानोदयः, ततोऽतिरिक्तमपेक्षितव्यम्। तच्च यद्यपि सर्वाण्येवेन्द्रियाणि व्याप्नोति, तथापि करणधर्मत्वेन क्रियाक्रमः सङ्गच्छते। अकल्पिते तु तस्मिन्नायं**

**आमोदः**- ननु नाश्रयासिद्धिर्यतो दृष्टं किञ्चिदुपहत्यैवादृष्टस्यापि जनकत्वमिह वाच्यम्, तच्च दृष्टं मन एवेत्याशङ्क्याह **अथेत्यादि चेदित्यन्तेन।** करणधर्मत्वेन एकं करणमेकत्रैकावच्छेदेनैकदैकजातीयामेकामेव क्रियां जनयति न त्वनेकाम्। **एकत्रे**त्यनेन कुब्जकृतयुगपन्नानातृणच्छेदक्रियाव्यभिचारवारण **मेकजातीयामि**त्यग्निसंयोगाद् युगपद्रूपरसादिषु, **एकावच्छेदेने**त्येकेन शब्देन युगपदनेकशब्दोत्पत्तौ, **एकदे**त्यनेनायुगपन्नानाज्ञानोत्पत्तौ। न चैकामेकावच्छेदेनेत्यनेनैकत्रेति गतार्थम्। परमाण्ववच्छेदेनैव परमाणुकर्मणा जनितेषु व्यभिचारवारणे तदुपयोगात्। **नायं** न्यायो न करणधर्मन्यायः।

**प्रकाशः**- **तथापीति।** एकं करणमेकत्रैकदा एकावच्छेदेनैकजातीयामेकामेव क्रियां जनयति, न त्वनेकाम्। एकत्रेत्यादिविशेषणात् कुठाराग्निशब्देषु युगपदनेकच्छिदारूपादिनानादिगवच्छिन्नानेकशब्दजनकेषु न व्यभिचार इति करणधर्मत्वेन क्रियाक्रमः स्यादित्यर्थः। न च तथापि चक्षुराद्यवच्छेदेन शब्दवद्भिन्नदेशां परमाणाविव विजातीयामग्निसंयोगवदनेकां क्रियां कुर्यादेवेति वाच्यम्। ज्ञानकरणमेकत्रात्मनि एकदैकमेव ज्ञानं जनयति। समूहालम्बनकरणवत्। कथमन्यथा सामग्रीसत्त्वे समूहालम्बनमेकज्ञानम्। नन्वन्यज्ञानसामग्रीसत्त्वे कार्यावश्यम्भावः, तदसत्त्वे किं करणधर्मत्वेन। तस्य सहकार्यन्तरमात्रपर्यवसायित्वात्। न, ज्ञानकरणस्यैकत्रैकदैकज्ञानमात्रजनकतया तत्र नानाज्ञानकारणाभावेनैव सामग्र्यसत्वात्।

**मकरन्दः**

तथाप्यापातत इदं, व्यासङ्गानुपपत्तावेव तात्पर्यम्। **एकं करणमिति** *प्रत्यक्षप्रकाशे* द्रष्टव्यम्। **नानेति।** अत्र नानादिगवच्छिन्नेति पाठो युज्यते, अन्यथानन्वयात्।

**न्यायः। प्रतिपत्तुरकरणत्वाच्चक्षुरादीनामनेकत्वादिति चेत्, नन्वेवमपि युगपत् ज्ञानानि मा भूवन्। युगपज्ज्ञानं तु केन वार्यते? भवत्येव समूहालम्बनमेकं ज्ञानमिति चेन्न। एकेन्द्रियग्राह्येष्विव नानेन्द्रियग्राह्येष्वपि प्रसङ्गात्। तेष्वपि भवत्येवेति चेन्न। व्यासङ्गकाले ज्ञानक्रमेण विवादविषये क्रमानुमानात्। बुभुत्साविशेषेण व्यासङ्गे क्रियाक्रम इति चेन्मैवम्।**

**आमोदः**– ननु प्रतिपत्तुरेवायं धर्मः किं न स्यादत आह **प्रतिपत्तुरिति**। एकस्य कर्त्तुरेतादृशनानाक्रियाजनकत्वस्यादृष्टत्वादित्यर्थः। एवं सत्येकमेव ज्ञानं नानाविषयकं स्यात्, एतावतापि करणधर्मत्वानपायादित्याह **नन्वेवमिति**। उक्तमबुद्ध्वा शङ्कते **भवत्येवेति**। उक्तं स्पष्टयति **एकेति**। दीर्घशष्कुलीभक्षणे रूपादीनामेकदा ज्ञानमभिप्रेत्याह **तेष्वपीति**। तदसिद्धिमाह **व्यासङ्गेति**। व्यासङ्गानुपपत्तिरेव मनोऽणुत्वे प्रमाणमित्यर्थः। विषयसम्बद्धस्य बहिरिन्द्रियस्य मनःसम्बन्धविच्छेदो हि व्यासङ्गः। यतो भवति तूत्पद्यासङ्गि न मया त्वद्भाषितं न एतमिति(?) 'क्रमानुमानात्। ननु न सम्बन्धविच्छेदो व्यासङ्गपदार्थः, किन्तु प्रतिबन्धः। तथा चान्यसामग्र्यां सत्यामपि बुभुत्साप्रतिबन्धेन नान्यत्र ज्ञानं जायते इति व्यासङ्गस्थले न क्रमासिद्धिरित्याह **बुभुत्सेति**।

**प्रकाशः**– **प्रतिपत्तुरिति**। तस्यानेककरणोपेतस्यानेककार्यकर्तृत्वादिति भावः। **चक्षुरादीनामिति**। एषां यौगपद्यात् पुनः स एव ज्ञानयौगपद्यप्रसङ्गः। करणधर्मत्वेनापि प्रत्येकमविशेषादिति भावः। **नन्वेवमिति**। एवमप्येकदा बहूनां ज्ञानानामनुत्पत्तावप्येकदा नानेन्द्रियकरणकं रूपादिज्ञानमेकं स्यादेव, एकेन्द्रियजन्यसमूहालम्बनज्ञानवदित्यर्थः। न च चाक्षुषत्वादिजातिसंकरापत्तेर्नैकं ज्ञानमिति वाच्यम्। तथा सति फलविरोधेनैकस्यापि ज्ञानस्याजननापत्तेः, चित्ररूपवच्चाक्षुषादिविजातीयस्यैव ज्ञानस्य सामग्रीसत्वेनोत्पत्त्यापत्तेर्वा। न च तत्र फलबलात्तथा। अत्र फलाभावे हेतोः कल्प्यत्वापत्तेः। अन्योन्यप्रतिबन्धस्य तत्त्वे वाऽज्ञानमेव स्यान्न त्वेकस्य ज्ञानमित्युक्तम्। वस्तुतः पञ्चसु यदेकं करणं ज्ञानं जनयति नापराणि, तत्र नियामकमास्थेयम्। अन्यथा ज्ञानजनने तेषां कलहं कः समादध्यादिति भावः। आशयमविद्वानाह **भवत्येवेति**। एकैकेन्द्रियेण स्वस्वविषये समूहालम्बनमेकैकं जन्यत एवेत्यर्थः। आशयमुद्घाटयति **एकेति**। **तेष्वपीति**। दीर्घां शष्कुलीं भक्षयतो गन्धादिज्ञानमेकमनेकेन्द्रियजन्यमुत्पद्यते इत्यर्थः। **व्यासङ्गेति**। एकेन्द्रियासक्तमनसोऽणुना मनसा युगपदनेकेन्द्रिया-

**मकरन्दः**– ननु रूपादिषु मध्ये रूपादिमात्रग्राहकत्वेनैव चक्षुरादिसिद्धेस्तदन्यगुणग्रहे तदसामर्थ्याच्चित्रज्ञानमसम्भवीत्यरुचेराह **वस्तुत इति**। ननु गोगोत्वनिर्विकल्प-

**न ह्येष बुभुत्साया महिमा यदबुभुत्सिते विषये ज्ञानसामग्र्यां सत्यामपि न ज्ञानम्, अपि तु न तत्र संस्कारातिशयाधायकः प्रत्ययः स्यात्। यदि त्वबुभुत्सिते विषये सामग्रीमेव सा निरुन्ध्यात्, घटायोन्मीलितं चक्षुः पटं नैव दर्शयेत्। तस्मात् बुभुत्सापीन्द्रियान्तरादाकृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती युगपज्ज्ञानानुत्पत्तावुपयुज्यते, न तु स्वरूपतः। विभुनोऽपि**

---

**आमोदः**– बुभुत्साया नैतादृशं सामर्थ्यमित्याह **न ह्येष** इति। तर्हि बुभुत्सायाः क उपयोग इत्याह **अपि त्विति**। बुभुत्सा ज्ञानोत्पत्तिमेव कथं न नियमयतीत्यत आह **यदीति**। संस्कारातिशयाधानबुभुत्साप्रयोजने सत्येवं ज्ञानोत्पत्तावप्युपयोगमाह **तस्मादिति**। **न तु स्वरूपत** इति। मनोनिवेशनं द्वारीकृत्येत्यर्थः। व्यापारं विकल्पयति **तस्येति**। व्यापारः कर्म वा गुणो वा गुणोऽपि नित्यो वाऽनित्यो वा?

---

**प्रकाशः**– सन्निकर्षात्तत्र ज्ञानक्रमस्य सर्वसिद्धत्वात्। तद्दृष्टान्तेन तत्रापि गन्धादिज्ञानोत्पादः क्रमेण भवतीत्यनुमीयते। कालसौक्ष्म्याच्च क्रमो न लक्ष्यत इत्यर्थः। ननु दृष्टान्ते नानेकेन्द्रियमनःसंयोगाभावः क्रमप्रयोजकः, किन्तु बुभुत्साप्रयुक्त इत्याह **बुभुत्सेति**। बुभुत्सा न रूपादिग्रहहेतुर्न वा इतरज्ञानप्रतिबन्धिका, किं त्वन्यथा उपयुज्यते इत्याह **न हीति**। ननु बुभुत्साया अतन्त्रत्वे कथं मनोऽणुत्वपक्षे मन्दोऽपि बुभुत्सितः शब्दो गृह्यते, नान्यः। तन्त्रत्वेऽपि कथं दशभिः पठ्यमानासु गाथासु तावद्गोचरबुभुत्सायां प्रणिधाने च सर्वेषामज्ञानमेकज्ञानञ्च। न च श्रोत्रमनःसंयोगविशेषः कार्योन्नेयोऽस्ति, स एव किञ्चिच्छब्दग्रहहेतुस्तदन्यग्रहप्रतिबन्धक एवेति वाच्यम्। विभुत्वेऽपीन्द्रिय मनःसंयोगविशेषस्य तथात्वे व्यासङ्गोपपत्तेः। अथ प्रत्यक्षानुकूलेन्द्रियमनःसंयोगद्वारा बुभुत्साप्रणिधानयोः प्रत्यक्षहेतुत्वमिति चाक्षुषादिबुभुत्सितग्रहे क्लृप्तत्वात्ताभ्यां श्रोत्रे बुभुत्सितशब्दावच्छेदेन मनःसंयोगः कृत इति स एव गृह्यते, नान्य इति

---

**मकरन्दः**– कानन्तरमन्यतरविशेष्यकज्ञानोत्पत्ताविवादृष्टमेवात्र नियामकमस्तु, यथा च तत्र नोभयविशेष्यकसमूहालम्बनं तथात्र न युगपज्ज्ञानमिति चेत्, न। अणुना मनसा दृष्टेनैवोपपत्तावदृष्टकल्पनानवकाशात्। अन्यथा स एव न कल्प्येतेति भावः। **सर्वसिद्धत्वादिति**। यद्यपि युगपदनेकेन्द्रियसन्निकर्षो न सर्वसिद्धः, तथापि ज्ञानक्रमस्य तत्र सर्वसिद्धत्वात् अत्रापि क्रम इत्यत्रैव तात्पर्य्यम्। तटस्थः शङ्कते **नन्विति**। यद्वा, गूढाभिसन्धिः शङ्कते **नन्विति**। अत एवाभिसन्धिमुद्घाटयति **विभुत्वेऽपीति**।

**मनसो व्यापारक्रमात् क्रम इति चेन्न। तस्य संयोगातिरिक्तस्य कर्मरूपत्वे वैभवविरोधात्। गुणरूपत्वे नित्यस्य क्रमानुपपत्तेः। अनित्यस्य च नित्यैकगुणस्याविभुद्रव्यसंयोगासमवायिकारणकत्वेन तदनन्तरेणानुपपत्तेः। तदपि कल्पयिष्यते इति चेत्, तदेव तर्हि मनःस्थाने निवेश्यतां लाघवाय। तस्मादण्वेव मन इति।**

**तथा च तस्मिन्ननिन्द्रियप्रत्यासन्ने निरुपधानत्वादात्मनः सुषुप्त्यवस्थायामनुपलम्भः।**

---

**आमोदः**– आद्ये, **कर्मेति**। अन्त्ये, **नित्येति**। तृतीये त्वाह **अनित्यस्य चेति**। अनित्यपदं स्नेहे, एकपदं द्वित्वादौ व्यभिचारवारणाय। विभुमनोव्यापारो यदि नित्यवृत्त्येकवृत्तिगुणः स्यात्तदा मूर्त्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्व-व्याप्यजातिमान् स्यादित्यर्थः। अत्रेष्टापत्तिमाह **तदपीति**। मनोवैभवेऽपि तादृशं मूर्तं तद्वारणार्थं कल्पनीयमित्यर्थः। **तदेव तर्हीति**। मन एव तथास्तु, तद्वैभवकल्पनैव त्यज्यतामित्याह **तदेवेति**।

---

**प्रकाशः**– चेन्न। युगपत्पठ्यमानासु विंशतिगाथासु तावद्गोचरबुभुत्साप्रणिधानयोः सत्त्वे तावद्गाथावच्छेदेन मनःसंयोगाद् युगपत्तासामुपलम्भप्रसङ्गात्। प्रत्येकसामग्रीसत्त्वात्।

उच्यते, यद्यपि बुभुत्साप्रणिधाने न शब्दग्रहमात्रे सहकारिणी, न वेतरग्रहप्रतिबन्धके, तथापि नानाशब्दसमवायदशायां यः शब्दग्रहस्तत्र तयोस्तथाभावः। तथैव तेषामन्वयव्यतिरेकनियमात्। न चाणावपि मनसि रसनसंयुक्ते त्वक्संयोगस्यापि सत्त्वाद् रसगुडद्रव्यज्ञानयौगपद्यापत्तिः। रसनसंयोगकाले मनसस्त्वक्संयोगे मानाभावात्। तस्माच्चाक्षुषज्ञानवतो मैत्रस्य स्वविषयसंबद्धानि त्वगादीनि स्वविषय साक्षात्कारहेतुसंयोगशून्यानि, तदा स्वविषयसाक्षात्काराजन-कत्वात् पटवत्, अन्यथा सामग्रीसत्वे युगपज्ज्ञानोत्पादप्रसङ्गः। **नित्यैकगुणस्येति**। नित्यपदं स्नेहे, एकपदञ्च द्वित्वादौ व्यभिचारवारणाय। नित्यवृत्त्येकवृत्त्यनित्य-गुणत्वेन मूर्त्तसंयोगासमवायिकारणगुणवृत्ति गुणत्वव्याप्यजातिमत्त्वं साध्यमित्यर्थः। ननु मनोऽवयव्यस्तु तस्य संकोचविस्तराभ्यां ज्ञानक्रमयौगपद्ययोरुपपत्तेः। शष्कुलीभक्षणानन्तरं गन्धादीन् युगपद् प्रत्येमीत्यनुव्यवसायस्य बाधकं विना प्रमात्वात्। मैवम्। यदि संकोचविस्तारहेतुरदृष्टं, तदा तत एव तदुभयमस्तु, किं मनसा। नाप्येकपञ्चबुभुत्सया तौ भवतः। बुभुत्साया अहेतुत्वात्, हेतुत्वे वा लाघवाद्विभु मनोऽस्तु। एतेनाणुमनःपञ्चकमस्तु अवयविनो लघुत्वाद् बुभुत्सा-वशात्तेषामेवैकपञ्चेन्द्रियसम्बन्धादुभयोपपत्तेरित्यपास्तम्। पञ्चबुभुत्सायां पञ्चेन्द्रियसम्बन्धे व्यासङ्गानुपपत्तेरित्यभिप्रेत्याह **तस्मादिति**।

**एतदेव मनसः शीलमिति कुतो निर्णीतमिति चेत्, अन्वयव्यतिरेकाभ्याम्। न केवलं तस्य, किन्तु सर्वेषामेवेन्द्रियाणाम्। न हि विशेषगुणमनपेक्ष्य चक्षुराद्यपि द्रव्ये प्रवर्तते। स्वापावस्थायां कथं ज्ञानमिति चेत्, तत्तत्संस्कारोद्‌बोधे विषयस्मरणेन स्वप्नविभ्रमाणामुत्पत्तेः। उद्‌बोध एव कथमिति चेत्, मन्दतरतमादिन्यायेन बाह्यानामेव शब्दादीनामुपलम्भात्, अन्ततः शरीरस्यैवोष्मादेः प्रतिपत्तेः। यदा च मनः त्वचमपि परिहृत्य पुरीतति वर्तते तदा सुषुप्तिः।**

**स्यादेतत्। परात्मा तु कथं परस्यायोग्यः। न हि साक्षात्कारि ज्ञानविषयतामेवायं न प्राप्नोति। स्वयमप्यदर्शनप्रसङ्गात्। नापि ग्रहीतुरेवायमपराधः, तस्यापि हि ज्ञानसमवायिकारणतयैव तद्योग्यता। नापि करणस्य, साधारणत्वात्। न ह्यासंसारमेकमेव मनः एकमेवात्मानं गृह्णातीत्यत्र नियामकमस्ति। स्वभाव इति चेत्, तर्हि मुक्तौ**

---

**आमोदः**

उपसंहरति **तस्मादिति।** प्रकृतमुपपादयति **तथा चेति।** निरुपधानत्वात् योग्यविशेषगुणशून्यत्वात्। **एतदेवेति।** योग्यविशेषगुणोपहितात्मग्राहकत्वमित्यर्थः। **स्वापेति।** तदा बहिरिन्द्रियसम्बन्धविच्छेदतादवस्थ्यादित्यर्थः। **स्वप्नविभ्रमाणां** स्वप्नानुभवानाम्। **उद्बोध एव कथमिति।** उद्बोधकं किमित्यर्थः। **मन्देति।** तथा च शब्दाद्यनुभव उष्णस्य स्पर्शानुभवो वा उद्बोधक इत्यर्थः। यद्वा, उद्बोध एव कथं स्वप्नानुभवः आरोपविषयाज्ञानात् सादृश्याज्ञानाच्चेति। विशेषकत्वादिव्याप्या जातिर्मन्दत्वम्। कदाचिद्वायुना श्रोत्रसम्बन्धि मनः क्रियते, कदाचित्त्वक्षसम्बन्धि। अतस्तदारोपविषयस्य शब्दस्पर्शादेर्ग्रहात् स्मृतस्य विषयस्यारोपः, दोषोत्कट्याचु नारोप्यारोपविषयसादृश्यापेक्षेत्यर्थः। उद्बोधिका च निद्रेति भावः। **ऊष्मादेरिति।** ऊष्मस्पर्शादेरित्यर्थः। स्वापमुपपाद्य सुषुप्तिमुपपादयति **यदा त्विति। पुरीतत्** मनोवहनाड़ीति शेषः। कुतस्त्वयोग्य परात्मेति यदुक्तं तत्र पृच्छति **परात्मेति।** द्रव्ययोग्यतायाः सर्वसाधारण्यादिति भावः। तथा च योग्यानुपलब्ध्या तदभावोऽपि निश्चेय इति हृदयम्। **तस्यापीति।** ज्ञानसमवायिकारणत्वं च सर्वेषामेव ग्रहीतृणामित्यर्थः। मनसः स्वभाव एव तादृशो यदेकात्मग्राहित्वमित्याह **स्वभाव इति। मुक्ताविति।**

**प्रकाशः**– एवमौपोद्घातिकं मनोवैभवनिराकरणं समाप्य प्रकृते योजयति **तथा चेति**। **एतदेवेति**। विशेषगुणोपहितात्मग्राहकत्वमित्यर्थः। अनिन्द्रिय-प्रत्यासन्नत्वान्मनसः स्वप्नप्रत्यया अपि न स्युरित्याह **स्वापेति**। सर्वेन्द्रिय-प्रत्यासत्तिविरहे मनसो ज्ञानाजनकत्वं, न तु त्वगादिप्रत्यासत्तिमतोऽपीत्याह **तत्तदिति**। **उद्बोधः** सहकारिसाकल्यम्। विषयस्मृतिदोषादृष्टादिसाचिव्यान्मनसा स्वप्नानुभवो जन्यत इत्यर्थः। सदृशदर्शनादेरुद्बोधकस्याभावात् संस्कारोद्बोधो न स्यादित्याह **उद्बोध एवेति**। न तदेवोद्बोधकं, किं त्वदृष्टादिकमपि यथासम्भवमित्याह **मन्देति**। **मन्दत्वं**=गत्वादिव्याप्यजातिः। **ऊष्मादेरिति**। अनुद्भूतरूपोद्भूतस्पर्शतेजसः स्पर्शादेरित्यर्थः। स्वापमुक्त्वा सुषुप्तिमाह **यदा चेति**। आत्मनो निरिन्द्रियप्रदेशः **पुरीतत्**। किञ्चिन्मनः कञ्चिदेवात्मानं गृह्णातीत्यपि नास्तीत्याह **नापीति**। एकस्यापि मनसोऽनेकात्मग्राहकत्वादित्यर्थः। **न हीति**। *नैयायिकमत* इति शेषः। *भट्टानां* तु ज्ञानार्थयोरिवात्ममनसोरपि स्वाभाविक एव सम्बन्धो, यतो मुक्तावप्यात्मनो नित्यनिरतिशयानन्दसन्दोहाभिव्यक्तिः। एकात्ममात्रज्ञानजनकत्वं

---

**मकरन्दः**– **तथैव** तेषामिति। नन्वेवं वैभवेऽपि रूपादिसकलगोचरबुभुत्साया अहेतुत्वेऽपि तदन्यतमबुभुत्सा तद्ग्राहिका अन्यग्रहप्रतिबन्धिका चास्तामिति तुल्यः समाधिः। न च तादृशबुभुत्सायामपि सूचीसर्पादिवेधानुभवेन तादृश्या अपि व्यभिचारान्नैवमिति वाच्यम्। शब्देऽपि तादृशबुभुत्सायां निकटाहन्यमानढक्काशब्दानु-भवेन तुल्यत्वात्। अत्रापि यदि विशेषकल्पनं, तदा तदपि तुल्यमिति। मैवम्। अणुना मनसैवोपपत्तौ तादृशबुभुत्साहेतुत्वादिकल्पनायामेव गौरवात्। **रसनसंयोग-काल इति**। न च त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वे तदावश्यकमिति वाच्यम्। त्वचस्तथात्वमतेऽपि तत्तन्मनोयोगस्य तथात्वे मानाभावात्। न च सुषुप्तौ ज्ञानानुत्पत्तिरेव मानं, शरीरमनः संयोगाभावात्तदुपपत्तेः। **चाक्षुषेति**। *प्रत्यक्षप्रकाशे* विपञ्चितम्। शब्दजशब्दे व्यभिचारवारणाय साध्यं व्याचष्टे **मूर्त्तेति**। गुणपदं स्पष्टार्थम्।

**न तदेवेति**। न सदृशदर्शनमेवेत्यर्थः। **अदृष्टादिकमपीति**। अपि पदात्तद्भिन्नशब्दाद्युपलम्भपरिग्रहः। तथा च क्वचिददृष्टं क्वचिज् ज्ञानान्तर-मुद्बोधकमिति भावः। ननु मन्दत्वं तारत्वनिरूप्यमिति तदज्ञाने तदसम्भवीत्यत आह **मन्दत्वमिति**। जातिज्ञाने च नेतरज्ञानापेक्षेति भावः। ननूष्मा तेजस्तच्चातीन्द्रिय-मित्यत आह **अनुद्भूतरूपेति**। ऊष्मादेरित्यतद्गुणसंविज्ञानबहुब्रीह्याश्रयणादिति भावः। **भट्टानामिति**। तथा च तेषां तथा नियम एवेत्यर्थः। **एकात्ममात्रेति**। तथा च नियामकान्तराभावेऽपि स्वभाव एव नियामक

**निःस्वभावत्वप्रसङ्गः। तदेकार्थताया अपायादिति। न, भोजकादृष्टोपग्रहस्य नियामकत्वात्। यद्धि मनो यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाऽऽकृष्टानि तानि तस्यैवेति नियमः। तदुक्तं प्राक् – 'प्रत्यात्मनियमाद्भुक्ते'रिति। एतेन परबुद्ध्यादयो व्याख्याताः। तदेवं योग्यानुपलब्धिः परात्मादौ नास्ति। तदितरा तु न बाधिकेति तवापि सम्मतम्। अतः किमधिकृत्य प्रतिबन्धिः। न हि शशशृङ्गमयोग्यानुपलब्ध्या कश्चिन्निषेधति। न च प्रकृते योग्यानुपलब्धिं कश्चिन्मन्यते। अथायमाशयः – अयोग्यशशशृङ्गादावनुपलब्धिर्न बाधिका**

---

**आमोदः–** यद्येकमेव मन एकात्मग्राहकमिति स्वभावस्तदा **मुक्तौ** जीवन्मुक्तौ **निःस्वभावत्वप्रसङ्गः**। तदा बहूनामेव मनसामेकात्मग्राहकत्वात्। यदि पुनरेकं मन एकमेवात्मानं गृह्णातीति स्वभावस्तदा **मुक्तौ** परममुक्तौ **निःस्वभावत्वप्रसङ्ग** इत्यर्थः। तदा हि तदात्मनो मोक्षे तदीयमेव मनोऽन्यादृष्टाङ्गमतः अन्यमात्मानं गृह्णातीति निःस्वभावत्वमेवाह **तदेकार्थताया** इति। तदेकार्थग्राहकत्वापायादि-त्यर्थः। **नियामकत्वादिति**। स्वादृष्टाकृष्टमेव मनसः स्वात्मग्राहकत्वमिति स्वाभाव्यादित्यर्थः। तदेवाह **यद्धीति**। **तस्यैवेति**। तन्मात्रग्राहकाण्येवेत्यर्थः। **व्याख्याताः** स्वमात्रवेद्यत्वेनेत्यर्थः। प्रकृतमुपसंहरति **तदेवमिति**। **तवापीति**। तदितरानुपलब्धिमात्रं सम्मतमिति। तथा च चक्षुरादीनामपि विलोपः स्यादिति भयेनेति भावः। **अत इति**। योग्यानुपलब्ध्या शशे शृङ्गाभावस्यैव निश्चयादित्यर्थः। एतदेव सोत्प्रासं स्फुटयति **न हीति**। **प्रकृत इति**। परात्मनीत्यर्थः। अयोग्यमेव शृङ्गं शशे सिद्ध्येदिति शङ्कते **अथेति**।

---

**प्रकाशः–** मनसः स्वभाव इत्याह **स्वभाव इतीति**। एकस्यात्मन एकमेव मन इति स्वभावः, एकं मन एकमेवात्मानं गृह्णातीति वा, द्वयमपि जीवन्मुक्तौ नास्ति। तत्र कायव्यूहे बहुतरमनःस्वीकाराद्योगिनामप्यात्मसाक्षात्कारजननादित्याह **मुक्ताविति** जीवन्मुक्तौ। यदीयादृष्टाकृष्टं यन्मनस्तत्तस्यैव ग्राहकं, योगिनामपि तत एव तदीयत्वं तस्य। अदृष्टस्यापि तदीयत्वं तदीयमनोनिष्पन्नत्वेन, बीजाङ्कुरवच्च नानवस्थादोष इत्याह **भोजकेति**। यथा परात्मनि परमनसो न साक्षात्कारजनकत्वं तथा परबुद्ध्यादावपि, तुल्यत्वादित्याह **एतेनेति**। यत्र प्रतिबन्धिः स्यात् तदुभयमपि नेष्यते इत्याह **न हीति**। न हि तेन

*स्यादिति। ततः किम्? तत् सिद्ध्येदिति चेत्, एवमस्तु यदि प्रमाणमस्ति। पशुत्वादिकमिति चेत्, परसाधने प्रतिबन्धिस्तर्हि न तद्बाधने। तत्रैव भविष्यतीति चेत्, तत्किं तत्र प्रतिबन्धिरेव दूषणम्, अथ कथञ्चित्तुल्यन्यायतया योग्या एव परात्मबुद्ध्यादयस्ते च बाधिता एवेत्यपहृतविषयत्वम्? न प्रथमः, अव्याप्तेः। न हि पशुत्वादेः शशशृङ्गसाधकत्वेन कार्यत्वादेः कर्तृमत्त्वादिसाधकत्वं व्याप्तं, येन तस्मिन्नसति तत्प्रतिषिद्ध्येत। न द्वितीयः, मिथोऽनुपलभ्यमानत्वस्य*

---

*आमोदः–* सिद्धान्त्याह *ततः किमिति*। पूर्वपक्षवाद्याह *तदिति*। इष्टापत्तिमापाततस्तावदाह *एवमिति*। अपि त्वयोग्यशृङ्गे प्रमाणमेव नास्तीति भावः। आदिपदान्मृगत्वादिग्रहः। *परसाधनमिति। परस्य नैयायिकस्य* ईश्वरसाधने प्रतिबन्धिः यदि ईश्वरः सिद्ध्येत्, शशेऽपि शृङ्गं सिद्ध्येदित्यर्थः। तथा चार्थान्तरमिति भावः। *तत्तद्बाधन* इति। न त्वीश्वरसाधने किञ्चिदनेन दूषणमभिधीयत इत्यर्थः। *तत्रैवेति*। ईश्वरानुमान इत्यर्थः। *अथेति*। यथा शशे शृङ्गं बाधितं तथा परात्मापि बाधित इत्यर्थः। *अव्याप्तेरिति*। प्रतिबन्दिनात्मा हेत्वाभासो नास्त्येव किन्तु शशशृङ्गादिसिद्धिर्यापिका तन्निवृत्तौ क्षितिकर्तृत्वानुमानमपि निवर्तत इति प्रतिबन्दिर्दूषणं भवेत्,तादृशी च व्याप्तिर्नास्तीति भावः। व्याप्तिमेव दर्शयति *न हीति। तस्मिन्निति*। शृङ्गसाधनेऽसति कर्तृत्वसाधनं निवर्तेतेत्यर्थः। *तस्मिन् सतीति* पाठे तु तस्मिन् सकर्तृकत्वसाधने सति तच्छशशृङ्गं सिद्ध्येदित्यर्थः। *मिथ इति*। तथा च योग्यानुपलब्धिसिद्ध्या न परात्मव्यतिरेकसिद्धिर्येन बाधः स्यादित्यर्थः। अर्थान्तरं पुरुषदोषो न साधनदोष

---

*प्रकाशः–* ईश्वरसाधने किञ्चिद् दूष्यत इत्यर्थान्तरं निग्रहस्थानमित्याह *तत इति*। आशयमविद्वानाह *तदिति*। तत्सिद्धावपि न प्रकृते दूषणमित्याह *एवमिति*। मानमाह *पशुत्वादिकमिति*। पक्षसमत्वादेव नाश्वादौ व्यभिचार इति भावः। आशयं स्फुटयति *परेति*। यदीश्वरः सिद्ध्येत्, तदा शशशृङ्गमपि सिद्ध्येदितीश्वर-साधने प्रतिबन्धिस्तथा चार्थान्तरमित्युक्तम्। नन्वनुपलब्धिमात्रेण यथा शशे शृङ्गाभावस्तथा क्षित्यादौ कर्तुरप्यभाव इति बोधनेऽपि प्रतिबन्धिः स्यात्, इष्टापत्तेरभावादित्याह *तत्रैवेति*। *मिथ इति*। परात्मादेः परायोग्यत्वस्यो-भयवादिस्वीकारात् प्रत्यक्षेणानुपलम्भमात्रं, नायोग्ये बाधकमित्यर्थः। अर्थान्तरं हि पुरुषदोषो, न तु साधनदोष इत्याशयेन

**वादिप्रतिवादिस्वीकारात्। तथापि पशुत्वादौ को दोष इति चेत्? न जानीमस्तावत्तद्विचारावसरे चिन्तयिष्यामः।**

**स्यादेतत्। यत्प्रमाणगम्यं हि यत् तदभाव एव तस्याभावमावेदयति। यथा रूपादिप्रतिपत्तेरभावश्चक्षुरादेरभावम्। कायवाग्व्यापारैकप्रमाणकश्च परात्मा, तदभाव एव तस्याभावे प्रमाणमङ्कुरादिषु। तन्न, तदेकप्रमाणकत्वासिद्धेः। अन्यथा सुषुप्तोऽपि न स्यात्। श्वाससन्तानोऽपि तत्र प्रमाणमिति चेन्न। निरुद्धपवनोऽपि न स्यात्। कायसंस्थानविशेषोऽपि तत्र प्रमाणमिति चेन्न, विषमूर्च्छितोऽपि न स्यात्। शरीरोष्मापि तत्र प्रमाणमिति चेन्न। जलावसिक्तविषमूर्च्छितोऽपि न स्यात्।**

---

**आमोदः**- इत्याशयेन पृच्छति **तथापीति**। शृङ्गस्य योग्यसंस्थाननियतत्वेन प्रत्यक्षबाध एव तत्र स्फुट इति नागरकोक्तिमाश्रित्याह **नेति**। तथाप्यज्ञानमप्रतिभा वेत्याशयेनाह **तद्विचारेति**। संशयाभावाद्विचार एव तत्र न प्रवर्तते इति भावः।

**यत्प्रमाणगम्यमिति**। यदेकप्रमाणगम्यमित्यर्थः। अतो धूमाभावेऽपि वह्निरिति न व्यभिचारः। पूर्वं कायविशिष्ट एव कर्तेत्युक्तम्, इदानीं कायव्यापार-विशिष्टः कर्तेति विशेषणस्य प्रत्यक्षेण बाधात् विशिष्टस्यापि बाध एवेति योग्यानुपलब्धिरेवोक्ता भवति। **अन्यथेति**। यदि कायव्यापारमात्रं परात्मनि प्रमाणं भवेदित्यर्थः। **श्वासेति**। तदेकप्रमाणगम्यत्वं दूषयित्वा उपपत्तिसौकर्यादेतदुक्तम्। **संस्थानविशेषः** शरीरावयवादिसौष्ठवं जीवित्वलिङ्गं सुषुप्त्याद्यवस्थासु परात्मनि यथा नैकमनुगतं किन्तु क्वचित् किञ्चित्, तथा

---

**प्रकाशः**- पृच्छति **तथापीति**। शशे शृङ्गस्यात्यन्तमभाव इति सर्वेषामबाधित-प्रत्यक्षबाधः।

**शृङ्गत्वस्य** जातेर्योग्यसंस्थानव्यङ्ग्यत्वेनायोग्ये शङ्कितुमप्यशक्यत्वात्। अन्यथा तद्व्यतिरेकाप्रसिद्ध्या अनुमानानवकाशात्,अन्वयिनश्चानङ्गीकारात्। परात्मनश्चायोग्यस्यापि कर्तृत्वान्न कर्तृत्वं योग्यत्वनियतमित्याशयवत उत्तरं, नेति।

**यत्प्रमाणेति**। यदेकप्रमाणगम्यमित्यर्थः। अतो न धूमाभावेऽपि अग्निसत्त्वाद् व्यभिचारः। अत एव 'तदेकप्रमाणत्वासिद्धे'रिति वक्ष्यति। कार्यमात्र-प्रमाणोन्नेयस्तद्विशेषनिवृत्तिमात्रेण न निवर्तते। कार्यमात्रस्य च न व्यावृत्तिरित्युप-

---

**मकरन्दः**- इति भावः। अयोग्यस्यैव बाध इत्याशङ्क्याह **शृङ्गत्वस्येति**। अप्रयोजकत्वमाशङ्क्याह **अन्यथेति**। **अन्वयिनः**=केवलान्वयिनः।।१।।

तस्मात् यद्यत्कार्यमुपलभ्यते तत्तदनुगुणश्चेतनस्तत्र तत्र सिद्ध्यति। न च कार्यमात्रस्य क्वचिद्व्यावृत्तिरिति। न च त्वदभ्युपगतेनैव प्रमाणेन भवितव्यं नान्येनेति नियमोऽस्ति। न च प्रमेयस्य प्रमाणेन व्याप्तिः। सा हि कार्त्स्न्येन वा स्यात्, एकदेशेन वा स्यात्? न प्रथमः, प्रत्यक्षाद्यन्यतमासद्भावेऽपि तत्प्रमेयावस्थितेः। न द्वितीयः, पुरुषनियमेन सर्वप्रमाणव्यावृत्तावपि प्रमेयावस्थितेः। अनियमेनासिद्धेः। न हि सर्वस्य सर्वदा सर्वथाऽत्र प्रमाणं नास्तीति निश्चयः शक्य इति। कथं तर्हि चक्षुरादेरभावो निश्चेयः? व्यापकानुपलब्धेः। चरमसामग्रीनिवेशिनो हि

---

**आमोदः**– क्षित्यादिकार्यत्वमपीश्वरेऽप्रमाणमस्तीति न प्रमाणसामान्यनिवृत्तिरित्युप-संहरन्नाह **तस्मादिति**। **क्वचिदिति**। सुषुप्त्याद्यवस्थादावित्यर्थः। ननु कायवाग्व्यापारादन्यत् परमात्मनि प्रमाणं नास्त्येवेत्यत आह **न चेति**। इदानीं प्रमाणनिवृत्तावपि प्रमेयं न निवर्तत इत्याह **न च प्रमेयस्येति**। येन प्रमाणनिवृत्तौ प्रमेयं निवर्तेतेति शेषः। **कार्त्स्न्येनेति**। सकलप्रमाणसत्त्वे सत्येव प्रमेयसत्त्वमेवंरूपा व्याप्तिरित्यर्थः। **एकदेशेति**। एकदेशप्रमाणे सत्येव प्रमेयसत्त्वमित्येवंरूपा व्याप्तिरित्यर्थः। **न प्रथम इति**। न हि स्वर्गापूर्वादौ प्रमेयं कृत्स्नान्यपि प्रमाणानि सन्तीत्यर्थः। एकदेशः पुरुषापेक्षया प्रमाणापेक्षया वा? नाद्य इत्याह **पुरुषेति**। न हि कस्यचित् पुरुषस्य सर्वाणि प्रमाणानि प्रमेयव्याप्तानि व्यभिचारस्योक्तित्वादित्यर्थः। यत्र यत्र प्रमेयं तत्र किञ्चित् कस्यचित् प्रमाणमस्त्येवेति द्वितीयमाशङ्क्याह **अनियमेनेति**। कस्यचित् पुरुषस्य किञ्चित् प्रमाणमस्त्येव। तथा च परात्मनि प्रमाणनिवृत्तिरसिद्धैवेत्यर्थः। एतदेवाह **न हीति**। **कथं तर्हीति**। यदि प्रमाणनिवृत्तौ न प्रमेयनिवृत्तिरित्यर्थः। उन्मीलिताक्षस्यालोकं रूपसाक्षात्कार एव चक्षुर्व्यापकः। तदभावादेव प्रसन्नान्धस्य चक्षुरभावोऽनुमीयत इत्यर्थः। एवं श्रोत्राद्यभावेऽपि एतदाह **चरमेति**।

---

**प्रकाशः**– संहरति **तस्मादिति**। तथा च प्रमाणविशेषनिवृत्तावपि प्रमाणसामान्य-सत्त्वात्तदेकप्रमाणगम्यत्वमसिद्धमित्यर्थः। न च प्रमाणप्रमेययोर्व्याप्तिर्यतः प्रमाणविशेषाभावे प्रमेयासत्त्वं स्यादित्याह **न चेति**। **अनियमेनेति**। सर्वपुरुषापेक्षयेत्यर्थः। **व्यापकेति**। तत्तद्व्यापकनिवृत्तौ तत्तद्व्याप्यनिवृत्तेरित्यर्थः। कार्यविशेषस्य कारणविशेषव्यापकत्वमाह **चरमेति** कार्यरूपज्ञानादि।

**कार्यमेव व्यापकम्। तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः। योग्यमात्रस्य कदाचित्कार्यं, तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः। अन्यथा, तत्रापि सन्देहः। प्रकृतेऽपि व्यापकानुपलब्ध्या तत्प्रतिषेधोऽस्तु। न, आश्रयासिद्धत्वात्। न हीश्वरस्तज्ज्ञानं वा क्वचित् सिद्धम्। आभासप्रतिपन्नमिति चेन्न। तस्याश्रयत्वानुपपत्तेः, प्रतिषेध्यत्वानुपपत्तेश्च।१।**

**व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।**
**अभावविरहात्मत्वं वस्तुनः प्रतियोगिता।।२।।**

---

**आमोदः- तथाभूतस्य** चरमसामग्रीनिवेशिनः। **योग्यमात्रस्य** स्वरूपयोग्यमात्रस्य बीजादेः कदाचिदङ्कुरोत्पत्त्या तज्जातीये स्वरूपयोग्यत्वं निश्चीयत इत्यर्थः। **तन्निवृत्तावपीति।** यत्र कदाचिदपि नाङ्कुरः शिलाशकलादौ तत्र स्वरूपायोग्यत्वं निश्चीयत इत्यर्थः। यद्यप्येवं भुक्तविनष्टबीजदेरपि स्वरूपयोग्यत्वप्रसङ्गः, तथापि तज्जातीयत्वेन तस्यापि स्वरूपयोग्यत्वमिति निश्चय इति भावः। **अन्यथेति।** यज्जातीयस्य कदाचिदपि कार्यं न दृश्यते तज्जातीये स्वरूपयोग्यतां प्रत्यापाततः सन्देह एवेत्यर्थः। **प्रकृत इति।** ईश्वरो न कर्ता शरीरादिरहितत्वात्। न ज्ञानं नित्यं ज्ञानत्वादित्याद्यनुमानम् ईश्वरानुमाने बाधकमित्यर्थः। **आभासेति।** असत्ख्यात्युपस्थितमित्यर्थः। **तस्येति।** ईश्वरे कर्तृत्वं न निषेद्धुं शक्यते निषेधाश्रयस्य प्रमाविषयत्वनियमादित्यर्थः। न त्वीश्वर एव नेष्यते। तेन तु कर्तृत्वं तत्रेत्यत आह **प्रतिषेध्यत्व इति।** प्रमितस्यैव प्रतियोगित्वादित्यर्थः।१।

आश्रयः प्रतियोगी च द्वयमपि प्रमितमेवाभावनिरूपकमिति कुत एतदित्यत आह **व्यावर्त्येति। व्यावर्त्यो** निषेध्यस्तदभाववत्तेत्यर्थः। **भाविकी** स्वाभाविकी।

---

**प्रकाशः- योग्यतामात्रस्येति।** व्यापकमित्यनुषज्ज्यते। न च भक्षितविनष्टबीजे व्यभिचारः। यत्सामान्यं यत्कारणतावच्छेदकं तदवश्यं तज्जनकवृत्तीत्यर्थात्, नित्ययोग्याभिप्रायकत्वाद्वा। **अन्यथेति।** कदाचित्कार्यव्यतिरेके योग्यतायामपि सन्देह इत्यर्थः। **प्रकृतेऽपीति।** ईश्वरो न कर्ता तद्व्यापकस्वार्थादिशून्यत्वाद् व्योमवदिति व्यापकाभावलिङ्गकमनुमानमित्यर्थः। **आभासेति।** असत्ख्यात्युपस्थितमित्यर्थः। यदीश्वरे कर्तृत्वनिषेधः साध्यते तदाऽऽश्रयत्वमीश्वरस्य, यदा तस्यैवाभावः, तदेश्वरस्य प्रतियोगित्वम्। उभयमपि नास्तीत्याह **तस्येति।**।१।।

***न चैतदाभासप्रतिपन्नस्यास्तीति कुतस्तस्य निषेधाधिकरणत्वं निषेध्यता वेति। कथं तर्हि शशशृङ्गस्य निषेधः? न कथञ्चित्। स ह्यभावप्रत्यय एव। न चायमपारमार्थिकप्रतियोगिकः परमार्थाभावो नाम।***

***आमोदः– अभावविरहात्मत्वम्***भावविरहात्मस्वाभाव्यमित्यर्थः। तथा च उभयं प्रमितमेव वाच्यमित्यायातमिति भावः। ***न चैतदिति।*** विशेष्यत्वं भाविकप्रतियोगित्वं चेत्यर्थः। न चाशरीरकर्तृत्वज्ञानमीश्वरानुमितिरयथार्थेति साध्यमिति वाच्यम्। अयथार्था ह्याभासाधीनमनेन ज्ञाप्यं तत्राभासनिरासादयाथार्थ्यं बाधितमिति। ***शशशृङ्गस्य*** शशीयशृङ्गस्य। ***स हीति।*** स यतोऽभावप्रत्यय एव त्वया वाच्यः, तस्य च प्रतियोगिकत्वव्यवस्थापनादित्यर्थः। ननु शृङ्गमपि प्रामाणिकमस्तु, को दोष इत्यत आह ***न चेति।*** किं च योग्यानुपलब्ध्याऽभावः प्रतीयते। सा च तत्तद्व्याप्येतरेत्यादि रूपा, प्रकृते च शशशृङ्गादिप्रमापकं नास्त्येवेत्याह – (न चेति) २।

***प्रकाशः***

कुत इत्याह ***व्यावर्त्त्येति।*** ***व्यावर्त्यः*** प्रतियोगी, ***तदभाववत्ता भाविकी*** पारमार्थिकी ***विशेष्यता*** आश्रयता, ***वस्तुनः*** प्रामाणिकस्य, स्वाभावविरहरूपत्वं च ***प्रतियोगित्वम्।*** असत्ख्यातेः कारणाभावेन निरासादित्यर्थः।

नन्वनुमितिरेव पक्षः। तथा हि इयमनुमितिरयथार्था, अशरीरे कर्तृत्वज्ञानत्वात्, ज्ञाने नित्यत्वज्ञानत्वाद्वा। घटः कर्त्ता, चैत्रज्ञानं नित्यमिति ज्ञानवदित्यस्तु। न चोपजीव्यविरोधः। अनुमितिर्हि उपजीव्या, न तु तद्यथार्थत्वमपि। न, अप्रयोजकत्वात्। अन्यथा, पर्वते अग्न्यनुमितिरयथार्था उभयसिद्धाग्निमद्भिन्नेऽग्निमत्त्वज्ञानत्वात्, ह्रदोऽग्निमानितिवदित्यापत्तेः। अपि चानुमितेरयथार्थत्वं दोषादुत्पन्नमनेन ज्ञाप्यं, न त्वनेनोत्पाद्यम्। तत्र चायमेव दोषो दोषान्तरं वा? नाद्यः, अन्योन्याश्रयात्। नान्त्यः, तदभावात्।

***न चेति।*** आभासानाभाससङ्करापत्तेरिति भावः। ***कथमिति।*** यदि नासतो निषेध्यत्वमिति शेषः। ***न कथञ्चिदिति।*** नात्रापि कल्पितस्य निषेध्यत्वं, शशेऽधिकरणे शृङ्गस्यैव निषेधादित्यर्थः। ***स हीति।*** पारमार्थिकाभावप्रत्यय एवेत्यर्थः। प्रतियोग्यधिकरणयोर्वस्तुत्वादिति भावः। ***न चेति।*** प्रामाणिकनिषेधव्यवहारे प्रामाणिकस्यैव निषेध्यत्वादित्यर्थः।२।

***मकरन्दः***

***अयमेवेति।*** प्रकृतानुमानमेवेत्यर्थः। ***आभासेति।*** आभासप्रतिपन्नस्यापि

**न चापारमार्थिकविषयं प्रमाणं नामेति। २।**
**अपि च –**

**दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता।**
**न तस्यां नोपलम्भोऽस्ति नास्ति साऽनुपलम्भने।।३।।**

**केन च शशशृङ्गं प्रतिषिद्ध्यते? सर्वथाऽनुपलब्धस्य योग्यत्वासिद्धेः। तदितरसामग्रीसाकल्यं हि तत्। ननूक्तमाभासोपलब्धं हि तत्। अत एवाशक्यनिषेधमित्युक्तम्। अनुपलम्भकाले आभासोपलम्भसामग्र्या**

---

**आमोदः**– **अपि चेति।** दुष्टा दोषघटिता उपलम्भसामग्री शशशृङ्गादेर्योग्यता वाच्या, तस्यां सत्यामुपलम्भो नास्ति। अनुपलम्भे च दोषघटिता सामग्री नास्तीति क्व तत्र योग्यानुपलब्धिरित्यर्थः। **केन चेति।** कीदृशेनानुपलम्भेनेत्यर्थः। योग्यानुपलब्धेरभावात् अनुपलम्भमात्रं त्वतिप्रसक्तमिति भावः। **केन चेति।** अपि तु न केनापीत्यर्थ इत्येके। **तदितरेति** तत्तद्व्याप्येत्यर्थः।

---

**प्रकाशः**– किञ्चानुपलब्धिमात्रान्निषेधनिश्चयेऽतीन्द्रियोच्छेदाद् योग्यानुपलम्भात् स वाच्यः। योग्यता च प्रतियोगितद्व्याप्येतरतत्प्रमापकसाकल्यरूपा अलीके नास्तीति दोषसचिवतद्भानसामग्रीरूपा सा वाच्या। तस्यां च सत्यां नालीकस्या-नुपलम्भः उपलम्भस्यैव सत्वात्। अनुपलम्भदशायाञ्च तद्भानसामग्रीरूपा योग्यतैव नास्तीत्याह **अपि चेति। केन चेति।** न केनापीत्यर्थः। **सर्वथेति।** प्रमाणत इति शेषः। नन्वाभासोपलब्धस्यापि नेदं रजतमिति निषेधादुपलब्धमात्रस्य निषेधो, न तु प्रमितस्यैवेत्यत आह **तदितरेति।** रजतादेः प्रामाणिकत्वेन योग्यस्यै-वानुपलम्भान्निषेधो, न त्वाभासोपलब्धस्येत्यर्थः। तथैव किं न स्यादित्याह **नन्विति।** आभाससामग्रीकालेऽनुपलम्भाभावादनुपलम्भकाले च तद्रूपयोग्यताया असत्त्वादित्याह **अत एवेति।**

---

**मकरन्दः** वस्तुत्वाभ्युपगमे वस्तुत्वावस्तुत्वसङ्करापत्तिरित्यर्थः। **यदीति।** यद्यपि तर्हीत्यस्य तदेत्यर्थः। तस्य च नित्यसापेक्षतया शेषदानं विनापि तदर्थलाभः, तथापि नित्यसापेक्षतया अध्याहारात् तदपेक्षया शेषस्य त्वरितप्रतिपत्तिकरत्वमिति भावः। **शशे इति।** यद्यपि शशे गवादिशृङ्गस्य संयोगवृत्त्या सत्वात् कथं शृङ्गाभावः, समवायवृत्त्या च तदभावो गवादावपि शृङ्गस्य संयोगित्वात्। तथापि जन्यजनकभावसंबन्धेन तदभावो बोध्यः।।२।।

**अभावात्तत्काले चानुपलम्भाभावादिति। कस्तर्हि शशशृङ्गं नास्तीत्यस्यार्थः? शशे अधिकरणे विषाणाभावोऽस्तीति।**

**आमोदः**– अशक्यनिषेधत्वमेवाह अनुपलम्भकाल इति। कस्तर्हीति। यदि तत्प्रतिषेद्धुं न शक्यते इत्यर्थः। शश इति। तथा चाधिकरणस्य प्रतियोगिनः प्रमितत्वमेवेति भावः। उक्तसंकलनाय वृत्तं कीर्तयति यद्यपीति। दृष्टान्तलाभार्थमाह मदितर इति। न सर्वज्ञा इति। किञ्चिदनभिज्ञा इत्यर्थः। अन्यथा *मीमांसकमते* साध्याप्रसिद्धेरिति। न चात्मत्वमसर्वज्ञत्वव्याप्यं ज्ञानत्वमनित्यत्वव्याप्य-मित्यादिप्रकारेण सत्प्रतिपक्षत्वं विपक्षे बाधकाभावात्।३।

**प्रकाशः**– नन्वेवं घटादावपि दोषस्योपलम्भकारणत्वात्तदभावोऽपि न गृह्येत। प्रमापकसाकल्यस्य च विवक्षितत्वे गुणस्यैव प्रमापकस्याभावात् तत्साकल्यासिद्धेः। अत्राहुः। प्रत्यक्षप्रमायामिन्द्रियार्थसन्निकर्षस्य गुणत्वात्तस्य च तद्व्याप्यत्वादेव। तदन्यगुणस्य च तत्राकारणत्वात्। घटादौ गुणान्यप्रमाकारणत्वेन योग्यता। शशशृङ्गे च न दोषान्यज्ञानकारणत्वेन योग्यता। दोषान्यप्रमापकस्याभावादि*त्यन्ये* ।

शश इति। ननु गवि शशशृङ्गं नास्तीतिप्रतीतिबलात् प्रतियोग्यवृत्तिधर्मेण शशीयत्वेनावच्छिन्नः शृङ्गाभावः प्रतीयते। व्यधिकरणधर्मावच्छिन्न प्रतियोगिताकाभावस्य केवलान्वयित्वात्। मैवम्, प्रतियोगितावच्छेदकधर्म विशिष्टप्रतियोगिज्ञानस्याभावधीहेतुतया तादृशप्रतीतेरसिद्धेः। अन्यथा, प्रतियोगिनिर्विकल्पकादपि व्यतिरेकप्रतीत्यापत्तेः।।३।।

**मकरन्दः**– प्रत्यक्षप्रमायामिति। तथा च प्रतियोगितद्व्याप्येतरयावत्प्रमापक-समवधाने सति अनुपलब्धिरभावग्राहिका, गुणस्य चार्थनियतत्वेन तद्व्याप्यपदेनैव व्यवच्छेदान्नासम्भवः। सा च न शशशृङ्गाभावे, तत्प्रमापकाप्रसिद्धेः, न च दोषान्यज्ञापकसाकल्यं विवक्षितं, तच्चेन्द्रियाद्येव तत्रापि प्रसिद्धमिति वाच्यम्। गौरवादित्याहुः। वस्तुतोऽसत्ख्यातेः कारणाभावेनानभ्युपगमादलीकस्य नोपलब्धत्वमपीति न तन्निषेध्यमिति भावः। प्रमापकस्येति। प्रज्ञापकस्येत्यर्थः। अत्रेदमनभिमतिबीजम्। असत्ख्यातिपक्षे दोषान्यज्ञापकमिन्द्रियाद्येव, अन्यथा दोषोऽपि न तज्ज्ञापक इति दोषान्यविशेषणं व्यर्थमिति। प्रतियोगितेति। यद्यपि तादृशज्ञानं विनापि प्रमेयाभाव इति शब्दादिनाऽभावग्रहान्न तस्याहेतुत्वं, तथापि प्रत्यक्षे तथात्वं बोध्यम्। यद्यप्याहार्य्यादिरूपं तादृशज्ञानं प्रकृते सम्भवत्येव, तथा*प्यनुमानप्रकाशे* मदुक्तमनुसन्धेयम्।।३।।

'गोसदृशो गवयशब्दवाच्य' इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ विशेषसन्देहेऽपि वाक्यस्य पर्यवसितत्वेन मानान्तरोपनीतानपेक्षणात्। रक्तारक्तसन्देहेऽपि 'घटो भवति' इति वाक्यवत्। अन्यथा वाक्यभेददोषात्। न च 'गङ्गायां घोष' इतिवत् पदार्था एवान्वयायोग्याः, येन प्रमाणान्तरोपनीतेनान्वयः स्यात्। प्रतीतवाक्यार्थबलायातोऽप्यर्थो यदि वाक्यस्यैव, दिवाभोजननिषेधवाक्यस्यापि रात्रिभोजनमर्थः स्यात्। तस्माद्यथा गवयशब्दः कस्यचित् वाचकः शिष्टप्रयोगादिति सामान्यतो निश्चितेऽपि विशेषे मानान्तरापेक्षा, तथा 'गोसदृशस्य गवयशब्दो वाचक'

---

आमोदः– मानान्तरेण प्रत्यक्षेण यदुपनीतं गवयत्वं तदनपेक्षणादित्यर्थः। रक्तारक्तेति। प्रवृत्तिनिमित्तसन्देहोऽपि वाक्यस्य पर्यवसितत्वादिति भावः। अन्यथेति। पर्यवसितेऽपि वाक्ये पुनरन्वयबोधकतायामित्यर्थः। लक्षणावैलक्षण्यमाह न वेति। ननु वाक्यार्थप्रतीत्यनन्तरं गौरवावतारेण तदेव वाक्यं गवयत्वमादायान्वयबोधकं स्यादित्यत आह प्रतीतेति। विशेषानिश्चयेऽपि सामान्यतो ज्ञानं नानुपपन्नमित्याह तस्मादिति।

---

प्रकाशः– उपलक्षणत्वनिमित्तत्वसन्देहेऽपि यो गोसदृशः स गवयपदवाच्य इति सामानाधिकरण्यरूपयथाश्रुतपदार्थान्वयेनैव वाक्ये पर्यवसिते पश्चाल्लक्षणा न कल्प्यते। यत्र त्वयोग्यतया मुख्यार्थान्वयासम्भवः, तत्रैव सेत्याह श्रुतेति।

मानान्तरेति। मानान्तरं प्रत्यक्षं, तेनोपनीतं दर्शितमित्यर्थः। अन्यथेति। यदि पर्यवसितेऽपि वाक्ये तत्तदाकांक्षायां तत्तद्वाक्यार्थज्ञानं स्यात्तदा वाक्यभेद इत्यर्थः। यत्र तु लक्षणा, तत्र नैवं वाक्यपर्यवसानमित्याह न चेति। ननु प्रतीत्यपर्यवसानाभावेऽपि प्रतीतापर्यवसानाद् येन विनानुपपत्तिः, सोऽपि वाक्यार्थः स्यादित्याह प्रतीतेति। यदि कल्पनागौरवाद् गोसादृश्यस्य प्रवृत्तिनिमित्तत्वानुपपत्तौ गवयत्वस्य तथात्वकल्पनापि वाक्यार्थः स्यात्, तदा दिवाऽभोजिनः पीनत्वानुपपत्त्या रात्रिभोजनकल्पनापि वाक्यार्थः स्यादित्यर्थः।

तस्मादिति। ननु सामानाधिकरण्यमात्रेणान्वयोपपत्तावपि तात्पर्यानुपपत्त्या

---

मकरन्दः–पूर्वत्वस्य किञ्चिन्निरूप्यत्वादाह गवयपिण्डेति। गोसदृशपदमिति। यद्यप्येतन्न पदं किन्तु वाक्यं, तत्र च न लक्षणा, तस्याः पदधर्मत्वात्। तथाप्येकपद एव लक्षणा पदान्तरञ्च नियामकमिति भावः। वाक्येऽपि लक्षणेतिमतेन पदमिह वाक्यमेवोक्तमित्यन्ये। शक्यसम्बन्धमाह गोसादृश्यसमानाधिकरणमिति।

**इति वाक्यान्निश्चितेऽपि सामान्यो विशेषवाचकत्वेऽपि मानान्तरमनुसरणीयमिति।**

**अस्त्वनुमानम्। तथा हि – गवयशब्दो गवयस्य वाचकः, असति वृत्त्यन्तरेऽभियुक्तैस्तत्र प्रयुज्यमानत्वात्। गवि गोशब्दवदिति चेन्न, असिद्धेः। न ह्यसति वृत्त्यन्तरे तद्विषयतया प्रयोगः सङ्गतिमविज्ञाय ज्ञातुं शक्यते। सामानाधिकरण्यादिति चेन्न। पिण्डमात्रे सिद्धसाधनात्, निमित्ते चासिद्धेः, 'सादृश्यस्यानिमित्तत्वादि'त्युक्तम्।**

---

**आमोदः**–विशेषवाचकत्व इति। गवयत्वप्रवृत्तिनिमित्तकत्वे मानान्तरमुपमानमनुसरणीयमित्यर्थः। न च यष्टीः प्रवेशयेत्यत्रेव तात्पर्यानुपपत्तिरत्र लक्षणाबीजमस्तु, व्युत्पित्सुव्युत्पादनायातिदेशवाक्यं कथं गोसादृश्यं गुरु गृहीत्वा पर्यवस्येत्तथा च गवयत्वे लाक्षणिकं वाक्यमेव गोसदृशपदद्वयात्मकं गोपदं सदृशपदं वा लाक्षणिकमस्तु, पदान्तरं तन्नियामकमिति वाच्यम्, प्रवृत्तिबोधने तात्पर्यं विनापि स्वरूपाख्यानमात्रेऽपि समयग्रहसम्भवात्। धिक्करभमिति निन्दावाक्यश्रवणानन्तरमपि करभपदसमयसम्भवात्। यत्तु 'यष्टीः प्रवेशये'त्यादावप्यन्वयानुपपत्तिर्लक्षणाबीजम्, तत्तुच्छम्। प्रथमं तात्पर्यज्ञानं तदनुपपत्तिरेव तद्बीजमुपजीव्यत्वात्। तदज्ञाने च नान्वयानुपपत्तिरपि। **अत्रेति।** गवयत्वविशिष्टे पिण्ड इत्यर्थः। **गोशब्दवदिति। असति वृत्त्यन्तरे** वृद्धैर्यः शब्दो यत्र प्रयुज्यते स तस्य वाचक इति सामान्यव्याप्तौ दृष्टान्तः। **असिद्धेरिति।** विशेषणविशेष्यभागयोः समयग्रहात् पूर्वमज्ञानादित्यर्थः। एतदेवाह **न हीति।** ननु यो गोसदृशः स गवयशब्दवाच्य इति सामानाधिकरण्यादेव तत्र प्रयुज्यमानत्वं प्रतीतमिति नासिद्धिरित्याह **सामानाधिकरण्यादिति।** स पिण्डो गवयपदवाच्य इति यदि साध्यं, तदा सिद्धसाधनम् इत्याह **पिण्डमात्र इति।** गवयत्वेन प्रवृत्तिनिमित्तेन गवयपदस्य वृद्धैः प्रयुज्यमानत्वमज्ञातमेवेत्याह **निमित्ते चेति।**

---

**प्रकाशः**–यष्टीः प्रवेशयेतिवल्लक्षणाऽस्तु। गवयपदव्युत्पित्सुं प्रति व्युत्पत्तये हि वाक्यमाप्तेनोक्तम्। तच्च न प्रवृत्तिनिमित्तप्रतिपादनं विना। न च गोसादृश्यं तथेति तात्पर्यतो गोसदृशपदेन गोसादृश्यसमानाधिकरणं गवयत्वमुपलक्षितमिति कल्प्यते। न च यथा धूमोऽस्तीत्यत्राग्नौ तात्पर्यमनुमानेन निर्वहतीति न लक्षणा, तथात्र मानान्तरमस्ति, येन तन्निर्वाह्यम्। उपमानस्यासिद्धेः। न च वाक्ये न लक्षणा, तस्या वृत्तित्वेन शक्तिवच्छब्दधर्मत्वादिति वाच्यम्। एकपद एव लक्षणा, पदान्तरं तन्नियामकमित्युपगमात्। न च गोसदृशपदस्य गवयत्वे साक्षात्तात्पर्यग्रह एव

नन्वु व्याप्तिपरमिदं वाक्यं स्यात्। 'यो गोसदृशः स गवयपदार्थ' इति। तथा च वाक्यादवगतप्रतिबन्धोऽनुमिनुयात्। अयमसौ गवयो, गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदिति। न, विपर्ययात्। न हि गोसदृशं

**आमोदः**– प्रकारान्तरेणानुमानमत्र शङ्कते नन्विति। विपर्ययादिति। व्याप्यव्यापक भावस्य प्रकृते वैपरीत्यादित्यर्थः। वैपरीत्यमेवाह न हीति। यो गोसदृशः स किंशब्दवाच्य इति यदि प्रश्नः स्यात्तदा यो गोसदृशः स गवयशब्दवाच्य इत्युत्तरं स्यात्, न

**प्रकाशः**– लक्षणा, स च मानाभावान्नास्ति, अन्यथा धूमोऽस्तीत्यत्रापि सा स्यादिति वाच्यम्। उपस्थापकान्तराभावे सति तत्तात्पर्यस्यैव साक्षात्तात्पर्यरूपत्वात्।

अत्राहुः। यत्र प्रवृत्तिनिमित्तविशेषबोधने न तात्पर्यं, किन्तु यो गोसदृशः स गवयशब्दवाच्य इति स्वरूपाख्यानमात्रं तत्राप्युक्तसामग्रीतः प्रवृत्तिनिमित्त विशेषपरिच्छेदः। न च तत्र तात्पर्यं, यदनुपपत्तिर्लक्षणाबीजं स्यात्। यत्र वा करभनिन्दातात्पर्यकं धिक्करभमित्यादिकं, तत्रापि तादृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयङ्करभशब्दवाच्य इति धीः। न च प्रवृत्तिनिमित्तिविशेषे तत्र तात्पर्यम्।

*अस्मत्पितृचरणास्तु*, सर्वत्रान्वयानुपपत्तिरेव लक्षणाबीजम्। यष्टीः प्रवेशयेत्यत्रापि प्रकरणादिना भोजनादिप्रयोजनकप्रवेशनस्य ज्ञानात् तादृशे च प्रवेशने यष्ट्यादेरनन्वयात्, तात्पर्यग्रहार्थमपि प्रकरणादेरवश्योपजीव्यत्वादित्याहुः।

मानान्तरमिति। तर्क्कः प्रमाणसहकारी, न च तस्यां दशायां मानान्तरमस्तीत्युपमानं तर्कोपकार्यमास्थेयमित्यर्थः। असिद्धेरिति। वस्तुतो गवयव्यक्तिवाचकत्वसिद्धावपि गवयत्वस्य प्रवृत्तिनिमित्तं न सिद्ध्यतीति भावः। गवयसामानाधिकरण्येन गोसदृशो गवय इति वाक्यप्रतिपादनाद् गवयवाचकत्वं गवयपदस्य ज्ञायते इत्याह सामानाधिकरण्यादिति। गवयसामानाधिकरण्येनेत्यत्र यदि पिण्डसामानाधिकरण्यं विवक्षितं तदा पिण्डवाचकत्वसिद्धावपि गवयत्वविशिष्टवाच्यत्वासिद्धेर्नोपमानपरिच्छेद्यस्य मानान्तरात् प्रतीतिरित्याह पिण्डेति। गवयत्वजातिसामानाधिकरण्यं तु मानाभावादसिद्धमित्याह निमित्ते चेति।

**मकरन्दः– सर्वत्रान्वयेति।** यद्यप्येवमपि प्रकृते लक्षणा स्यादेव, उक्तप्रकरणादिना प्रवृत्तिनिमित्तवाच्यत्वज्ञानात्, तस्य च धर्मिमात्रेऽनन्वयात्, तथापि तात्पर्य्यानुपपत्त्या लक्षणेति परोक्तनिराकरणमात्रपरोऽयं ग्रन्थ इति प्रतिभाति। यदीति। उद्देश्यस्य व्याप्यत्वं विधेयस्य व्यापकत्वं प्रतीयते इति भावः।

बुद्धावारोप्यानेन पृष्टः स किंशब्दवाच्य इति। किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति। तथा च यद्योगप्राथम्याभ्यां तस्यैव व्याप्यत्वं, ततः किं तेन? प्रकृतानुपयोगात्।

अथ किंलक्षणकोऽसाविति प्रश्नार्थः। तदा व्यतिरेकपरं स्यात्। लक्षणस्य तथाभावात्। तथा च 'गोसदृशो गवय' इत्यस्यार्थो यो गवय इति न व्यवह्रियते नासौ गोसदृश इति। एवञ्च प्रयोक्तव्यम्, अयमसौ गवय इति व्यवहर्तव्यः, गोसदृशत्वात्। यस्तु न तथा नासौ गोसदृशो, यथा हस्ती। न च हस्त्यादीनां विपक्षत्वे प्रमाणमस्ति, सर्वाप्रयोगस्य दुरवधारणत्वात्। कतिपयाव्यवहारस्य चानैकान्तिकत्वात्।

आमोदः- त्वेवमित्यर्थः। यद्योगेति। यच्छब्दप्रयोगः प्रथमाभिधानं च व्याप्यस्यैव तस्योद्देश्यत्वात्, व्यापकस्य च विधेयत्वादित्यर्थः। तथाभावादिति। व्यतिरेक्यनुमानरूपत्वादित्यर्थः। व्यतिरेकव्याप्त्यनुसारेण प्रयोगमाह एवं चेति। न चेति। तथा च व्यतिरेकदृष्टान्ताभावान्न व्याप्तिग्रह इत्यर्थः। ननु हस्तिनि गवयपदं बहुभिर्न प्रयुज्यते इति स एव व्यतिरेकदृष्टान्त इत्यत आह सर्वेति। अनैकान्तिकत्वादिति। वीणादीनां बहूनां गोपदाव्यवहारेऽपि गोपदवाच्यत्वाभ्युपगमादित्यर्थः। न च व्यवहारसाध्यकलक्षणोच्छेदः स्यादिति वाच्यम्। यथा पृथिवीत्वं पृथिवीपदवाच्यत्वे निमित्तमुपलब्धं तथा न पूर्वं गवयत्वमुपस्थितमित्यर्थः। न हीति। यदि गवयपदं वाचकं किञ्चिच्च तस्य वाच्यमिति सामान्यतो ज्ञानं स्यात्, तदा विशेषे तत्र लिङ्गे प्रश्नः स्यादित्यर्थः।

प्रकाशः- न हीति। येन सादृश्यस्य व्याप्यत्वं स्यादिति शेषः। यदि गोसदृशः किंशब्दवाच्य इति पृच्छेत्, तदा तमुद्दिश्य गवयशब्दवाच्य इति विदध्यादपि तु कीदृग्गवय इति पृष्टः। तथा च यो गवयशब्दवाच्यः स गोसदृश इति उत्तरयतो विपरीत एव व्याप्यव्यापकभाव इत्यर्थः। यद्योगेति। व्याप्यं यच्छब्देन पूर्वमुद्दिश्यते यथा यो धूमवान् सोऽग्निमानित्यर्थः।

यद्योगप्राथम्याभावेऽपि गन्धवती पृथिवीत्यादिवद्व्यतिरेकिरूपलक्षणपरत्वं स्यादित्याह - अथेति। हस्त्यादीनां गवयव्यवहाराविषयत्वं तत्राप्रयोगेण निश्चेयं,

मकरन्दः-कीदृग् गवय इति। गवयपदवाच्यः कीदृगित्यर्थः। गवयत्वविशिष्टत्ववाच्यत्वमेवमपि न सिद्ध्यतीत्यपि बोध्यम्। तथा चेति। न तु यो गोसदृशः स गवयपदवाच्य इत्युत्तरं, येन गोसादृश्यस्य वाच्यत्वं यद्योगादिना लभ्येतेति भावः।

ननु लिङ्गमात्रे प्रश्नो भविष्यति, कीदृक् किं लिङ्गमिति। न, न ह्यनेन लिङ्गमविज्ञाय गन्नयशब्दस्य वाचकत्वं कस्यचिद्वाच्यत्वं वावगतं, येन तदर्थं प्रश्नः स्यात्। प्रवृत्तिनिमित्तविशेषलिङ्गे प्रश्नो, येन निमित्तेन गवयशब्दः प्रवर्तते तस्य किं लिङ्गमिति चेन्न। न हि तदवश्यमनुमेयमेवेत्यनेन निश्चितम् यत इदं स्यात्। ज्ञानोपायमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न। अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत्। पर्यायान्तरं वा- यथा गवयमहं कथं जानीयामिति प्रश्ने, 'वनं गतो द्रक्ष्यसी'ति। यथा वा, कः पिक इत्यत्र कोकिल इति। तस्मान्निमित्तभेदप्रश्न एवायं, 'गवयो गवयपदवाच्यः' कीदृक् केन निमित्तेनेति युक्तमुत्पश्यामः। तस्य च निमित्तविशेषस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्टस्तदुपलक्षणं किञ्चिदाचष्टे।

---

आमोदः-प्रवृत्तीति। तथा च गोसादृश्योपन्यासस्तल्लिङ्गतयोचित इति शङ्कार्थः। न हीति। एवं सति प्रमाणमात्रे उचितो, न तु लिङ्ग इत्यर्थः। अत्रैव प्रश्न इति शङ्कते ज्ञानेति। सामान्यप्रश्ने विशेषान्तरेणाप्युचितमुत्तरमिति लिङ्गोपन्यासमात्रमयुक्तमित्याह नेति। इन्द्रियसन्निकर्षेणोत्तरमाह यथाबलमिति। पर्यायान्तरेणाह यथेति। केन निमित्तेनेति। केन निमित्तेनावच्छिन्नो धर्मी गवयपदवाच्य इति प्रश्नार्थ इत्यर्थः। साक्षादिति। प्रत्यक्षत इत्यर्थः। किञ्चिदिति।

---

प्रकाशः- तत्राह सर्वेति। न चैवं व्यवहारसाध्ये सर्वत्र लक्षणोच्छेदः स्यादिति वाच्यम्। यथा पृथिवीत्वेन पृथिवीपदवाच्यत्वं साध्यते, तथा गवयत्वेन निमित्तेन गवयपदवाच्यत्वस्य साधयितुमशक्यत्वात्, गवयत्वस्यातिदेशवाक्यादप्रतीतेः।

न ह्यनेनेति। अज्ञातसामान्यस्य विशेषजिज्ञासा न युक्तेति भावः। उपसंहरति तस्मादिति। ननु यदि निमित्तप्रश्नस्तत् किं तदेव नोत्तरयतीत्यत आह तस्य चेति। व्युत्पाद्यस्याप्रतीतगवयत्वजातिकत्वादिति भावः।

---

मकरन्दः- पृथिवीत्वेनेति। पृथिवीत्वनिमित्तकपृथिवीपदवाच्यत्वमित्यर्थः। गवयत्वेनेति। गवयत्वनिमित्तकगवयपदवाच्यत्वस्येत्यर्थः। धर्मिमात्रवाच्यत्वस्य शब्दादेव प्रतीतेरिति भावः। अज्ञातेति। गवयपदवाच्यस्य प्रतीतौ स किंलिङ्गक इति प्रश्नः, तत्प्रतीतिश्च तस्य लिङ्गादेव जातेति लिङ्गस्य ज्ञातत्वान्न तत्र प्रश्न इति भावः।

**तच्चोपमानसामग्रीसमुत्थापनमेव। तस्य च प्रमाणस्य सतस्तर्कः सहायतामापद्यते। सादृश्यस्यैव निमित्ततायां कल्पनागौरवम्। निमित्तान्तरकल्पने च क्लृप्तकल्प्यविरोध इति। तदेव निमित्तमवगच्छतीति। लक्षणन्त्वस्यानवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानम्। वाक्यार्थश्च क्वचित् साधर्म्यं, क्वचिद्वैधर्म्यमतो नाव्यापकम्। तस्मान्नियतविषयत्वादेव न तेन बाधो, न त्वनतिरेकादिति स्थितिः।**

---

**आमोदः**- गोसादृश्यादीत्यर्थः। उपमानसामग्रीति। तस्योपलक्षणस्यातिदेश-वाक्यावगतस्य संज्ञिन्यनुसन्धानमित्यर्थः। तर्कमेव दर्शयति सादृश्येति। क्लृप्तेति। गवयत्वं दृश्यमानमन्यत्तु कल्पनीयमित्यर्थः। तदेवेति। दृश्यमानं गवयत्वमित्यर्थः। न च सादृश्यनिमित्तता गौरवपराहता चेत्, तदा गवयपदं गवयत्वप्रवृत्तिनिमित्तम् इतराप्रवृत्तिनिमित्तत्वे सति प्रवृत्तिनिमित्तत्वात्, यन्नैवमित्यनुमानमस्त्विति वाच्यं, गवयत्वे प्रत्यक्षीकृते फलस्यैव सिद्धेस्तदानीं व्यतिरेकव्याप्त्यादिप्रतिसन्धाने प्रमाणाभावादित्यर्थः। अनवगतेति। अनवगतसङ्गतिर्या संज्ञा गवयपदं करभपदं वा तत्समभिव्याहृतं यद्वाक्यं साधर्म्यपरं वैधर्म्यपरं वा तस्य योऽर्थः साधर्म्यं वैधर्म्यं वा तस्य संज्ञिनि वा गवयत्वविशिष्टे गवयपिण्डे करभत्वविशिष्टे करभपिण्डे वाऽनुसन्धानं प्रत्यक्षेणानुभव इत्यर्थः। अत्र सादृश्यज्ञानं करणं ज्ञायमानं सादृश्यं वेति मतभेदः। प्रकृतमुपसंहरति तस्मादिति।

---

**प्रकाशः**- तच्चेति। सामग्र्युत्थानानुकूलमित्यर्थः। ननु सादृश्यप्रवृत्तिनिमित्ततायां गौरवानवतारे नोपमानस्याप्यवतारः। तथा च तर्केणेतराप्रवृत्तिनिमित्तकत्वे निश्चिते गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात्, यन्नैवं तन्नैवमिति चेन्न। तर्कस्यानिश्चायकत्वात्। न चायं तर्को व्याप्तिमूलको येन विपर्ययानुमानादर्थसिद्धिः स्यात्। न च गवयपदं किञ्चित्प्रवृत्तिनिमित्तकमिति सामान्यतो दृष्टमेव तर्कसहकृतं गवयपदस्येतरा-प्रवृत्तिनिमित्तकतां परिच्छिनत्ति, न तु मानान्तरं कल्पयित्वा तर्कः सहकारी कल्प्यते इति वाच्यम्। इदं सप्रवृत्तिनिमित्तमन्यच्च न प्रवृत्तिनिमित्तमिति बुद्धावपि गवयत्वप्रवृत्तिनिमित्तकं गवयपदमिति मानान्तरमन्तरेणाप्रतीतेः अनुमितेर्व्यापकता-वच्छेदकप्रकारकत्वात्।

**प्रकाशः**– ननु यथेच्छायां सामान्यतो दृष्टेन विशेषबाधकसहकृतेनाष्ट-द्रव्यानाश्रयत्वं ज्ञायते, अन्यथा विशेषबाधकानां पृथिव्याद्येकैकमात्रव्यतिरेक-विषयत्वेनाष्टद्रव्यानाश्रयत्वं केन ग्राह्यम्। तथात्रापि गौरवाख्यतर्कसहकृतसामान्यतो दृष्टादितराप्रवृत्तिनिमित्तकत्वे निश्चिते पश्चाद्व्यतिरेकि स्यात्, कल्प्यमानान्तर सहकारित्वापेक्षया क्लृप्तप्रमाणसहकारित्वस्य युक्तत्वात्।

---

**मकरन्दः**– **अयमिति**। लाघवाख्य इत्यर्थः। **अनुमितेरिति**। तथा चेतराप्रवृत्तिनिमित्तकतां परिच्छिनत्तीत्यप्ययुक्तमिति। **तथात्रापीति**। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमोऽसिद्ध एवेत्याशयः। **व्यतिरेकीति**। पूर्वोक्तव्यतिरेकीत्यर्थः। **तस्य** सामान्यतो दृष्टस्य। **तदपरिच्छेदकत्वात्** इतराप्रवृत्तिनिमित्तकत्वापरिच्छेदकत्वात्। तर्कसहकारेणैव तस्य तथात्वाभ्युपगमादिति भावः। यद्यपि तद्दशायां नोपमानस्याप्यवतारः, तथापि तर्कानवतारे सामान्यतोदृष्टस्य किञ्चित्प्रवृत्तिनिमित्तकत्वमात्रमनुमाय पर्य्यवसितत्वादग्रे पुनस्तर्कावतारे उपमानप्रवृत्तिरप्रत्यूहैवेति भावः। अत्रेदमालोचनीयम् – क्लृप्तप्रमाणभावस्य सामान्यतोदृष्टस्य पुनरनुसन्धानमात्रं कल्पयितुमर्हं लाघवात्। न तु मानान्तरं, गौरवात्। न च पुनरनुसन्धीयमानादपि तर्कसहकृतादपि तस्मान्नेतराप्रवृत्तिनिमित्तकत्व परिच्छेदोऽनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादिति वाच्यम्। लाघवगौरवसहकारेण व्यापकतानवच्छेदकस्यापि भानाभ्युपगमात्। अत एवेश्वरानुमाने क्षित्यादावेकमात्रकर्तृकत्वानुमितिः। अस्तु वा तथा, तथापि इतरद् न प्रवृत्तिनिमित्तं गुरुत्वादिति मानान्तरादितराप्रवृत्तिनिमित्तकत्वनिश्चये उक्तव्यतिरेकिणा गवयत्वप्रवृत्तिनिमित्तकत्वसिद्धिरविकलैव। न च साध्याप्रसिद्धेर्न तत्सिद्धिरिति वाच्यम्। तथा सत्युपमानादपि तद्विशिष्टबुद्ध्यनुदयापत्तेः, विशेषणज्ञानं विना तदभावात्।

यदि च गवयत्वं किञ्चित्पदप्रवृत्तिनिमित्तं जातिविशेषत्वादित्यादिना तस्य तुल्यवित्तिवेद्यतया किञ्चित्पदे तत्प्रसिद्धिसम्भवात्तथात्वं, तदा प्रकृतेऽपि तुल्यम्। व्यतिरेक्यन्तरेऽपीयमेव गतिः। किञ्च यथा देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतो दृष्टं तर्कसहकृतं पुनरनुसन्धीयमानं जीवित्वप्रकारकं ज्ञानं जनयति, तथा गवयपदं गवयत्वतदितरान्यतरप्रवृत्तिनिमित्तकं पदत्वादिति सामान्यतो दृष्टं तर्कसहकृतमनुसन्धीयमानं गवयत्वप्रवृत्तिनिमित्तकत्वं परिच्छिनत्तु, कृतं मानान्तरेण। तदाह *गङ्गेशः* – 'विचित्र सहकारिबलेनैकस्यापि

**मकरन्दः**- विचित्रफलजनकत्वादिति'। अन्यथा तत्र लिङ्गविशेषणजीवित्वानिश्चये अर्थापत्तिर्लब्धावकाशा स्यात्। तस्मात् त्यज वोपमानं मानान्तरं, स्वीकुरु वार्थापत्तिं संशयकरणिकामन्यामिति। वस्तुतस्तु संज्ञासंज्ञिपरिच्छेद उपमानार्थ इत्याकर एव स्फुटं, न तु प्रवृत्तिनिमित्तपर्य्यन्तपरिच्छेदोऽपि। तस्य शक्यत्वे शक्यवृत्तित्वे इत्यादिघटितस्य नियमत उपस्थितौ मानाभावात्। तद्ग्रहस्य व्यवहारानङ्गत्वेनानुद्देश्यत्वाच्च। तथा च गवयत्वविशिष्टवाच्यत्वसिद्धिरेवोद्देश्या। तदिदमुक्तम् पिण्डवाचकत्वसिद्धावपि गवयत्वसिद्धावपि गवयत्वविशिष्टवाच्यत्वासिद्धेर्नोपमानपरिच्छेद्यस्य मानान्तरात् प्रतीतिरिति। एवञ्च शब्दाद्विशेष्यवाच्यत्वावगमेऽपि गवयत्ववाच्यंत्वपरिच्छेदार्थमुपमानस्वीकार इति परमार्थः। तदिदमुक्तमाकरे 'सामान्यविशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति'। तत्र ब्रूमः। एवं व्यवहारादेरपि शक्तिग्राहकस्य व्यक्तिग्राहकस्य व्यक्तिमात्रविषयत्वात् घटत्वादिवाच्यत्वग्रहार्थं मानान्तरमनुस्रियेत, यदि च लाघवादिसहकृतं व्यक्तिशक्तिग्राहकमेव तद्ग्राहकं, तदा प्रकृतेऽपि तुल्यम्। तदिदमुक्तं *गङ्गेशेन* – 'शक्तिग्राहकमेव लाघवादिसहकृतं निमित्तमप्यवधारयति, यथा क्षित्यादौ कर्तृग्राहकं कर्तुरिकतामिति'। ननु प्रकृते विशिष्टशक्तिग्राहकं नास्ति शब्दस्य गवयत्वोपस्थितिकाले पर्य्यवसितत्वादिति चेत्, न। गवयत्वविशिष्टोऽयं गवयपदवाच्यः गोसदृशत्वादित्यादेर्लाघवसहकृतस्य सत्त्वात्। लिङ्गाभासादिनाप्यनुमित्यविरोधाच्च। अन्यथा व्यवहारादिना घटत्वादिविशिष्टशक्तिग्रहोऽप्यशक्यः। यद्वा धर्म्मिवाच्यत्वे शब्दादेव सिद्धे गवयत्वं गवयपदवाच्यं गवयत्वादिति व्यतिरेकिणा लाघवसहकृतेन तद्वाच्यत्वसिद्धिः। तस्मात् पिण्डादेः सपक्षाद्व्यावृत्तावसाधारण्यं, तस्य सत्प्रतिपक्षोत्थापकतया दोषत्वादस्य च तर्कसहकारेणाधिकबलत्वात्। अस्तु वा गवयपदप्रवृत्तिनिमित्तत्वमेव साध्यम्। तथा च सपक्षाभावान्नासाधारण्यम्। न च साध्याप्रसिद्धिः, गवयपदं किञ्चित्प्रवृत्तिनिमित्तकमिति सामान्यतो दृष्टादेव सामान्यतस्तत्सिद्धेः। न च व्याप्त्याद्यप्रतिसन्धानदशायामपि तत्परिच्छेदान्नैवमिति वाच्यम्, मानाभावात्। अन्यथा *मूलप्रकाशयो*रनुमानदूषणप्रयासस्यासङ्गतत्वापातात्। तददुष्टत्वेऽपि तदनवतारे उपमानावतारसम्भवात्। तथा च यत्र यत्परिच्छेदस्तत्र क्लृप्तप्रमाणभावस्यैवावतारः कल्प्यते, लाघवात्।

**प्रकाशः**– मैवम्। इच्छायामेकैकबाधसहकृतापरापरबाधकैरेव तावद्विशिष्ट-वैशिष्ट्यरूपाष्टद्रव्यानाश्रयत्वपरिच्छेदात्। न तु सामान्यतो दृष्टेन। विशेषण द्वयोपस्थित्यैव विशिष्टवैशिष्ट्यज्ञाननिर्वाहात्, तर्कानवतारदशायां तस्य तदपरिच्छेदकत्वाच्चेति सङ्क्षेपः।

एवमुपमानस्य क्लृप्तमानातिरेकं प्रसाध्याव्याप्तिं परिहर्तुं लक्षणमाह **लक्षणन्त्विति**। अनवगतसङ्गतिश्चासौ संज्ञा चेति कर्मधारयः। न च गोविसदृशो न गवयपदवाच्य इत्यत्र अर्थादापद्यते गोसदृशो गवयपदवाच्य इति। तथा च नात्र वाक्यार्थानुसन्धानमस्तीति वाच्यम्। परम्परया तत्रापि वाक्यतात्पर्यात्। वस्तुतस्तु उपमितिकरणत्वमुपमानत्वम्। उपमितित्वञ्च जातिः। न च तदसिद्धिः। सामग्रीविशेषे कार्यवैजात्यमावश्यकमिति कारणव्यङ्ग्यत्वात्। सैव सामग्री अनवगतसङ्गतीत्यादिना दर्शिता। **क्वचिद्वैधर्म्यमिति**। धिक्करभमति दीर्घग्रीवमित्यादौ। प्रकृतमुपसंहरति **तस्मादिति**।१२।

---

**मकरन्दः**– अतीन्द्रियादिलिङ्गे व्याप्यत्वपरामर्शवदुपनयसहकृतेन मनसा विशिष्टवाच्यत्वपरिच्छेदसम्भवाच्च। न चोपमिनोमीत्यनुव्यवसाय बलाद्विजातीयप्रमासिद्धौ तत्करणसिद्धिरिति वाच्यम्। संज्ञासंज्ञिसम्बन्धबुद्धौ तादृशानुव्यवसायासिद्धेः। गवा गवयमुपमिनोमीत्यनुव्यवसायस्य सादृश्यबुद्धिविषयत्वात्। अत एवान्यत्रापि मुखचन्द्रादिसादृश्यप्रतीतौ तथेति विद्वद्भिः परिचिन्तनीयमिति। नन्विदमुपमितावेवातिव्याप्तं लिङ्गोपहितलैङ्गिकभानवत् सादृश्यज्ञानोपनीतस्य तत्र भानसम्भवादित्यरुचेराह **वस्तुतस्त्विति**।।१२।।

---

**शब्दोऽपि न बाधकमनुमानानतिरेकादिति *वैशेषिकादयः*। तथा हि – यद्यप्येते पदार्था मिथः संसर्गवन्तो, वाक्यत्वादिति व्यधिकरणं,**

---

**आमोदः**– **शब्दोऽपीति**। **अनुमानानतिरेकादिति**। तथा चानुमाननिरासेनैव तद्बाधनिरासादित्यर्थः। शेषो वाऽन्यथाऽबाधकत्वे तद्धेतुत्वानुपपत्तेः। यद्वा, शब्दोऽपि न बाधको न विपरीतप्रमाजनकः, अनुमानानतिरेकादनुमानाभिन्नत्वादित्यर्थः। यद्वा ल्यब्लोपे पञ्चमी, अनुमानानतिरेकं प्राप्य शब्दो न बाधकः, तस्य च पूर्वं बाधकत्वनिरासात्। न चानुमानाभिन्नानां चाप्रकृतेरित्यादीनां बाधकत्वमेवेति वाच्यं, तद्बाधकाभिमतशब्दानाम् अन्यप्रमाकरणादित्यर्थः। *वैशेषिका*द्यनुमानाभासमाशङ्कते **व्यधिकरणमिति** स्वरूपासिद्धमित्यर्थः।

**पदार्थत्वादिति चानैकान्तिकं, पदैः स्मारितत्वादित्यपि तथा। यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः। न ह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषणविशेष्यभावो वा संभवति। ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते। न च लिङ्गतया ज्ञापकत्वं, यल्लिङ्गस्य विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात्। तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति।**

---

**आमोदः- तथेति।** अनैकान्तिकमित्यर्थः। वह्निना सिञ्चतीत्यादाविति भावः। पदपक्षतामाशङ्कते **यद्यपीति।** साध्याभावः सिषाधयिषाविषयधर्माभाव इत्यर्थः। तदेवाह **न हीति।** विशेषणविशेष्यभावः पदार्थनिष्ठो न तु पदनिष्ठ इति भावः। ननु पदानि ज्ञापकानि ज्ञाप्यश्च संसर्ग इत्येवं संसर्गवत्त्वं स्यादत आह **ज्ञाप्येति।** ननु लिङ्गतया ज्ञापकत्वमङ्गीक्रित एव, स एव मत्वर्थः स्यादत आह **लिङ्गतयेति।** लिङ्गस्य तत्स्मारकत्वादित्यस्य यल्लिङ्गतया ज्ञापकत्वं तदेव तस्य विषयः कर्मसाध्यमिति यावत्, न भवितुमर्हतीति योजना। परस्पराश्रयमेवाह **तदिति।** लिङ्गतया ज्ञापकत्वं यदि सिद्धं स्यात्, तदा

---

**प्रकाशः- शब्दोऽपीति।** यद्यपि शब्दस्याबाधकत्वेऽनुमानानतिरेकित्वं न हेतुरनुमानात्मकस्यैव शब्दस्य बाधकत्वसम्भवात्, तथाप्यनुमानबाधकत्वनिरासेनैव शब्दबाधकत्वमपि निरस्तमित्यर्थः। अनुमानानतिरेकादिति ल्यब्लोपे पञ्चमी। अनुमानाभेदं प्राप्य शब्दो न बाधकं, 'प्रकृतेः क्रियमाणानि' - इत्यादिशब्दस्य वक्तव्ययुक्त्याऽन्यपरत्वादित्*यन्ये*।

पदानां तदर्थानां वाऽऽकाङ्क्षादिमतां वाक्यार्थप्रत्यायने लिङ्गभावेनैव करणत्वमस्तु, किं शब्देनातिरिक्तमानेनेत्यभिप्रेत्य पदार्थकरणत्वपक्षेऽनुमानाभेदं साधयति **यद्यपीति। अनैकान्तिकमिति।** निराकाङ्क्षादिभिरित्यर्थः। **तथेति।** तैरेवानैकान्तिकमित्यर्थः। पदकरणत्वमाश्रित्याह **यद्यपि चेति। समवाय इति।** न पदार्थसंसर्गाणां पदेषु समवाय इत्यर्थः। **विशेषणेति।** स हि पदार्थानां मिथोऽन्वयो न पदधर्म इत्यर्थः। **न चेति।** लिङ्गतया ज्ञापकत्वं यच्छब्दस्य, तदेव तस्य लिङ्गस्य तत्स्मारकत्वादित्यर्थस्य विषयः कर्मेति न चेति योजना। परस्पराश्रयत्वं स्पष्टयति **तदुपलम्भे हीति।** लिङ्गतया ज्ञापकत्वोपलम्भे हीत्यर्थः। मानान्तरेण शब्दस्य लिङ्गत्वसिद्धौ ततोऽनुमित्या लिङ्गतया ज्ञापकत्वे व्याप्तिः सिद्ध्येत्, इत्थञ्च ज्ञापकत्वे लिङ्गत्वसिद्धिरिति भावः।

**तथाप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् 'गामभ्याजे'ति पदार्थवदिति स्यात्। न च विशेषासिद्धिर्दोषः, संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात्। यद्वा, एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात्, गामभ्याजेति पदवत्। न चैवमर्थासिद्धिः, ज्ञानावच्छेदकतयैव तत्सिद्धेः। तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति।।१२।।**

---

**आमोदः**– व्याप्तिः सिद्ध्येत्, तत्सिद्धौ च साध्यसिद्धिरित्यन्योन्याश्रयः। पराभिप्रेतं प्रयोगमाह **आकाङ्क्षेति**। एते पदार्थास्तात्पर्यविषयस्मारितार्थसंसर्गवन्त इति पक्षसाध्ये। नन्वनभिमतसंसर्गसिद्ध्याऽर्थान्तरं स्यादित्यत आह **न वेति**। अनभिमतः संसर्गो द्विधा, अपक्षीकृतपदार्थसंसर्गः, पक्षीकृतपदार्थविपरीतसंसर्गश्च। तत्र आद्य आह **संसर्गस्येति**। ये पदार्थाः पक्षीकृतास्तेषामेव पक्षधर्मताबलात् संसर्ग-परिचायकत्वं, द्वितीयस्तु **तात्पर्यविषयेति** विशेषणादेव निरस्त इति भावः। पदपक्षकानुमानमाह **एतानीति**। अन्योदीरितवाक्येऽन्योदीरितपदकदम्बस्मारितार्थ-संसर्गज्ञानपूर्वकत्वं नास्तीति व्यभिचारः स्यादत उक्तम् **तत्स्मारकत्वादिति**। निराकाङ्क्षादौ व्यभिचारवारणायाद्यं विशेषणम्। **अर्थासिद्धिरिति** संसर्गासिद्धिरित्यर्थः। **ज्ञानेति**। ज्ञानं सिद्ध्यत् स्वविषयमादायैव सिद्ध्यतीत्यर्थः। ननु यः कश्चित् संसर्गः सिद्ध्येदित्यत आह **तस्येति**। तथा च पक्षधर्मबलात् तत्तत्पदकदम्ब-स्मारिततत्तत्पदार्थ संसर्गविषयकज्ञानपूर्वकत्वं सिद्ध्यतीत्यर्थः।१२।

---

**प्रकाशः**–यद्यपि पूर्वपूर्वविषयानुमितिजनकत्वेनानादित्वान्न परस्पराश्रयत्वं, तथापि ज्ञापकत्वसिद्धावपि नार्थसिद्धिः, प्रमापकत्वे तु साध्येऽनैकान्तिकमिति भावः।

**तथापीति**। अत्रैते पदार्थास्तात्पर्यविषयमिथःसंसर्गवन्त इति साध्यमतो नानभिमतसंसर्गसिद्ध्या अर्थान्तरम्। नन्वेवं संसर्गमात्रसिद्धावपि व्यवहारौ-पयिकस्तद्विशेषो न सिद्ध्येदत आह **न चेति**। संसृज्यमानपदार्थ-व्यापकत्वेनागृहीतस्यापि संसर्गविशेषस्य पक्षधर्मताबलात् सिद्धिरित्यर्थः। ननु संसर्गज्ञानपूर्वकत्वसिद्धावपि कुतो वाक्यार्थसिद्धिरित्यत आह **न चैवमिति**।

---

**मकरन्दः**– एवं सति हेतुं पूरयति **प्रकृतेरिति**। **निराकाङ्क्षादिभिरिति**। अयोग्यैरित्यत्रैव तात्पर्य्यम्। योग्यतासत्वे आकाङ्क्षाविरहे व्यभिचाराभावादिति ध्येयम्। शेषं *शब्दप्रकाशे* विपञ्चितम्। द्वितीयप्रयोगे मूले आकाङ्क्षादिमत्वादित्येव हेतुः तत्स्मारकत्वादित्यस्य व्यर्थत्वात्।

**अत्रोच्यते –**

**अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः।**
**आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना।।१३।।**

**एते पदार्था मिथः संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः,**

---

**आमोदः–** **परिच्छेदे** नियमे, साध्य इति शेषः। फलोपधाने साध्य इति यावत्। एवं **सम्भवे** स्वरूपयोग्यत्वे साध्य इत्यर्थः। द्वितीयानुमाने दूषणमाह **आकाङ्क्षेति**। **अबन्धना** अव्याप्तेत्यर्थः।

---

**प्रकाशः–** संसर्गविशेषसिद्ध्यर्थमाह **तस्य चेति**। तस्य संसर्गस्य पदार्थ-विशेषोपहितस्यैव ज्ञानावच्छेदकत्वाज्ज्ञानज्ञानस्य च तद्विषयविषयकत्वात् संसर्गे च सम्बन्धिन एव विशेषत्वादत्रापि पक्षधर्मताबलाद् व्यापकत्वेनाज्ञातस्यापि संसर्गविशेषस्य सिद्धिरित्यर्थः।

नन्वेवं भ्रान्तिज्ञोऽपि भ्रान्तः स्यात्। न चेष्टापत्तिः, ईश्वरस्यापि भ्रान्तत्वापत्तेः। भ्रान्तस्येव भ्रान्तिज्ञस्यापि भ्रमात् प्रवृत्त्यापत्तेश्च। अत्राहुः, न भ्रमविषयविषयकत्वेन भ्रमत्वं, किन्तु विशेष्यावृत्तिप्रकारकत्वेन। न च शुक्तौ रजतत्वप्रकारक ज्ञानवानयमित्यत्र विशेष्यावृत्तिः प्रकारः, रजतत्वप्रकारकत्वस्य भ्रमे सत्त्वात्। न च प्रतारकवाक्ये व्यभिचारः। तत्र योग्यताविरहात्, तस्याप्याहार्यसंसर्गज्ञानवत्त्वाच्च। तथापि संसर्गज्ञानं विना शुकस्यान्यस्य वा वाक्ये भ्रान्तप्रतारकवाक्ये च व्यभिचारः। कथञ्च तत्र संसर्गप्रमा? वक्तुर्ज्ञानानुमानासम्भवादिति चेन्न। तत्र वेदवदीश्वरसंसर्ग ज्ञानपूर्वकत्वादित्युक्तत्वात्।१२।

**अनैकान्त इति**। परिच्छेदेऽवधारणे। द्वितीयं दूषयति **आकाङ्क्षेति**। आकाङ्क्षायाः सत्त्वमात्रेणैव कारणतया लिङ्गविशेषणत्वमनुपपन्नमित्यर्थः। योग्यताऽऽसत्तिमात्रेण विशेषणे दोषमाह **योग्येति**। न बन्धनं सम्बन्धो व्याप्तिरूपो यस्यां, सा तथा। निराकाङ्क्षे व्यभिचारादित्यर्थः।

---

**मकरन्दः**

**प्रमापकत्वे इति**। आकाङ्क्षादिमतोऽपि सहकारिविरहेण कदाचित् प्रमानुत्पादकत्वादिति भावः। यद्यपि ज्ञापकत्वेऽपि व्यभिचारः, तथापि दूषणान्तरस्यैव सम्भवादयं नोद्भावित इति भावः।

सम्भावितसंसर्गा इति वा? न प्रथमः, अनाप्तोक्तपदकदम्ब स्मारितैरनैकान्तात्। आप्तोक्त्या विशेषणीयमिति चेन्न। वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः। न ह्यविप्रलम्भकत्वमात्रमिहाप्तशब्देन विवक्षितम्, तदुक्तेरपि पदार्थसंसर्गव्यभिचारात्। अपि तु तदनुभवप्रामाण्यमपि। न चैतच्छक्यमसर्वज्ञेन सर्वदा सर्वविषये सत्यज्ञानवानयमिति निश्चेतुम्। भ्रान्तेः पुरुषधर्मत्वात्। तत्र क्वचिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः। ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम्। न चैतत् संसर्गविशेषमप्रतीत्य शक्यम्। बुद्धेरर्थभेदमन्तरेण निरूपयितुमशक्यत्वात्। पदार्थमात्रे चाभ्रान्तत्वसिद्धौ न किञ्चित्, अनाप्तसाधारण्यात्। एतेषां संसर्गेऽयमभ्रान्त इति शक्यमिति चेन्न। एतेषां संसर्गे इत्यस्या एव बुद्धेरसिद्धेः। अननुभूतचरे स्मरणायोगात्, तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति।

---

आमोदः- अनैकान्तादिति। स्थिरजलादौ सेकादसंसर्गफलोपधानाभावादित्यर्थः। वाक्यार्थेति। प्रकृतवाक्यार्थगोचरयथार्थज्ञानवत्त्वरूपाप्तत्वस्य प्रथममग्रहादित्यर्थः। नन्वविप्रलम्भकत्वमेवाप्तत्वं, तच्च संसर्गसिद्धेः पूर्वमपिं सुग्रहमित्यत्राह न हीति। पित्रादिवचनेऽपि कदाचिद्व्यभिचारदर्शनात्तेन हेतुविशेषणेऽपि व्यभिचारतादवस्थ्यादित्यर्थः। अपि त्विति। प्रकृतवाक्यार्थप्रमावत्त्वमित्यर्थः। क्वचित् प्रमावत्त्वमतन्त्रमेव, व्यभिचारानिवर्तकत्वादित्यत आह यत्रेति। ननु पदार्थेऽयमभ्रान्त इति सुग्रहमेवेत्यत आह पदार्थमात्र इति। असिद्धेरिति। वाक्यार्थानुभवात् पूर्वमिति शेषः। नन्वनुभवो मास्तु, स्मृत्यैवोपपत्तेरित्यत आह अनुभूतेति। तर्हि अनुभव एवास्तु को दोष इत्यत आह तदनुभवस्येति। विशेषणेति। आप्तोक्तत्वलक्षण-विशेषणासिद्धेरित्यर्थः। तथा च व्यभिचार एवेति भावः।

---

प्रकाशः- संसृष्टा एवेति। न च सम्भावना नियमो वा न साध्यः, किन्तु संसृष्टा इत्येव साध्यमिति वाच्यम्। संसर्गव्यभिचार्यव्यभिचारिसाधारणतया ययोरेव घटानयनयोः परस्परसंसर्गो न जातस्तेनैव व्यभिचारादिति भावः। तदुक्तेरपीति। भ्रान्तेन पित्रादिनाप्यप्रतारकेणोक्तपदानां तदर्थानां वा संसर्गाभावादित्यर्थः। ननु पदार्थज्ञानमात्रनिरूपणादभ्रान्तत्वनिरूपणमस्त्वित्यत आह पदार्थेति।

नापि द्वितीयः, योग्यतामात्रसिद्धावपि संसर्गानिश्चयात्, वाक्यस्य च तदेकफलत्वात्, योग्यतामात्रस्य प्रागेव सिद्धेः। अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुः स्यात्। तथा च 'अग्निना सिञ्चेदि'त्यादिना स्मारितैरनैकान्तः। तथाविधानां सर्वथा संसर्गायोग्यत्वादिति।

द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति। तत्र केयमाकाङ्क्षा नाम? न तावद्विशेषणविशेष्यभावः, तस्य संसर्गस्वभावतया साध्यत्वात्। नापि तद्योग्यता, योग्यतयैव गतार्थत्वात्। नाप्यविनाभावः, नीलं सरोजमित्यादौ तदभावेऽपि वाक्यार्थप्रत्ययात्। तत्रापि विशेषाक्षिप्त सामान्ययोरविनाभावोऽस्तीति चेन्न। 'अहो विमलं जलं नद्याः कच्छे महिषश्चरती'त्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात्। नापि प्रतिपत्तुर्जिज्ञासा, पटो भवतीत्यादौ शुक्लादिजिज्ञासायां 'रक्तः पटो भवती'त्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात्।

---

आमोदः- द्वितीय इति। सम्भावितसंसर्गा इति साध्यपक्ष इत्यर्थः। संसर्गानिश्चयादिति। तथा च निष्कम्पप्रवृत्त्यनुपपत्तिरेवेत्यर्थः। स्वरूपयोग्यता-ज्ञानेऽपि संसर्गार्थिनां निष्कम्पप्रवृत्त्यदर्शनादिति भावः। किं च अन्वयप्रयोजक-रूपवत्त्वमिह योग्यता साध्या। सा च प्रागेव ज्ञातेति सिद्धसाधनमित्याह योग्यतामात्रस्य चेति। सैव योग्यता हेतुविशेषणमिति भावः। अन्यथेति। योग्यताया एवासिद्धौ हेतुविशेषणासिद्धेरित्यर्थः। पदपक्षके दोषं पूर्वमुक्तं स्फुटयति एवमिति। आकाङ्क्षायाः सत्तया हेतुतां व्यवस्थापयितुम् आकाङ्क्षास्वरूपं परिच्छेत्तुमाह तत्रेति। तस्येति विशेषणविशेष्यभावस्येत्यर्थः। योग्यतयैवेति। तस्या हेतुविशेषणतया पूर्वमेव ज्ञातत्वादित्यर्थः। ननु नीलं सरोजमित्यत्रापि नीलगुणविशेषसरोजद्रव्यविशेषाभ्यामाक्षिप्तयोर्गुणद्रव्ययोरविनाभावोऽस्त्येवेत्याह नापि विशेषेति। अत्रातिव्याप्तिमाह अहो इति। नदीकच्छयोरविनाभावेऽपि आकाङ्क्षाया अभावात्। अन्यथा तत्र वाक्यभेदप्रसिद्धिर्न स्यादित्यर्थः। प्रतिपत्तुरिति। प्रतिपाद्यपुरुषस्येत्यर्थः। एवं सति पटो भवतीत्यपि वाक्यं परिपूर्णमेव स्यात्, गुणविशेषे क्रियाविशेषे च प्रतिपत्तृजिज्ञासायाः सत्त्वात्। अन्यथा रक्तो पटो भवतीत्यत्रापि वाक्यभेदः स्यात्। अत्रापि पटो भवतीत्येतावतैव पर्यवसानसम्भवादित्यर्थः। जिज्ञासाविशेष आकाङ्क्षा।

गुणक्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षा। पट इत्युक्ते किंरूपः कुत्र किं करोतीत्यादिरूपजिज्ञासा तत्र भवतीत्युक्ते, किं करोतीत्येषैव पदस्मारितविषया, न तु किंरूप इत्यादिरपि। यदा तु रक्त इत्युच्यते तदा किंरूप इत्येषापि स्मारितविषया स्यादिति न किञ्चिदनुपपन्नमिति चेत्।

एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान्, किमस्यां जातायामन्वयप्रत्ययोऽथ ज्ञातायामिति। तत्र प्रथमे नानया व्यभिचार

आमोदः-तत्र विशेषं दर्शयति पदस्मारितेति। या जिज्ञासा तद्वाक्यस्थपदस्मारितमर्थं विषयीकरोति सेत्यर्थः। एतदेवाह पट इति। अभ्युपगम्योत्तरयति एवं तर्हीति। जिज्ञासाज्ञानस्यान्वयव्यतिरेकाभावात् स्वरूपसत्त्वे सा हेतुर्वाच्यः। तथा च तया हेतुविशेषणमनुपपन्नमित्यर्थः।

---

प्रकाशः- तस्य चेति। आप्तोक्तत्वरूपविशेषणासिद्धेरित्यर्थः। तदेकेति। निश्चयैकफलत्वादित्यर्थः। प्रागेवेति। योग्यतया लिङ्गविशेषणेन सिद्धेरित्यर्थः। तस्येति। एकत्र पदार्थे पदार्थान्तरवैशिष्ट्यस्यैव संसर्गरूपत्वादित्यर्थः। विशेषेति। नीलेन गुणसामान्यमाक्षिप्यते, सरोजेन द्रव्यमात्रं, तयोश्चाविनाभावोऽस्त्येवेत्यर्थः। अहो इति। जलान्वितनद्या आश्रयीभूतकच्छे साकाङ्क्षतापत्तावेकवाक्य-तापातादित्यर्थः। रक्त इति। यथा रक्तः पटो भवतीत्यत्र रक्तपदार्थान्वयं विना पटो भवतीत्येकदेशो न पर्यवस्यति, तथा रक्तपदं विना यत्र पटो भवतीत्येव वाक्यमुद्भावितं, तत्रापि तन्न पर्यस्येदित्यर्थः। अजिज्ञासोरपि वाक्यार्थज्ञानाच्चेति भावः।

गुणक्रियेति। पट इत्युक्ते किंगुणः? किंक्रियः? इति जिज्ञासा। तत्र यदा भवतीत्युच्यते, तदा जिज्ञासाविषयस्य क्रियाविशेषस्य पदेन स्मारणात् सैव जिज्ञासा

---

मकरन्दः-निराकाङ्क्ष इति। तात्पर्यघटितसाध्ये व्यभिचारोऽयमुन्नेयः। संसर्ग-व्यभिचारीति। आकाङ्क्षादिमत्पदस्मारितत्वादिति हेतोः संसर्गव्यभिचारिसाधारणतया व्यभिचार इत्यर्थः। संसर्गव्यभिचारिसाधारण्यमेव दर्शयति ययोरिति। न चैवं तत्र योग्यतैव नेति कथं व्यभिचार इति वाच्यम्, घटस्यानयनमित्यत्र संसर्गव्यभिचारिणोरपि घटानयनयोर्योग्यपदस्मारितत्वात्। संसर्गस्य व्यभिचारीति क्वचित्पाठः स तु चिन्त्यः। अनिश्चयस्य सन्निहिततया तत्परामर्शभ्रमं वारयति निश्चयैकेति। योग्यतया इति। सम्भावितपदस्य लिङ्गविशेषणयोग्यतापरत्वे दूषणमिदम्। सन्दिग्धपरत्वे संसर्गानिश्चयादित्येव दूषणं बोध्यम्।

व्यावर्तनाय हेतुर्विशेषणीयः, मनःसंयोगादिवत् सत्तामात्रेणोपयोगात्। आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चितोऽपि न गमकः। 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'त्यादौ व्यभिचारात्। द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत्तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्वयप्रत्ययो न जायते। न त्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्। निवृत्ताकाङ्क्षस्य च तदभावात्।

कथमेष निश्चयः, साकाङ्क्ष एव प्रत्येति, न तु ज्ञाताकाङ्क्ष इति चेत्, तावन्मात्रेणोपपत्तावनुपलभ्यमानज्ञानकल्पनानुपपत्तेः। अन्यत्र तथा दर्शनाच्च। यदा हि दूरात् दृष्टसामान्यो जिज्ञासते कोऽयमिति, प्रत्यासीदंश्च स्थाणुरयमिति प्रत्येति। तदास्य ज्ञातुमहमिच्छामीत्यनुव्यसायाभावेऽपि स्थाणुरयमित्यर्थप्रत्ययो भवति। तथेहाप्यविशेषात् विशेषोपस्थानकाले

---

आमोदः– नन्वासत्तियोग्यते एव हेतुविशेषणे स्यातां, न हि ते अपि स्वरूपसत्यौ तन्त्रे तयोर्भ्रमादन्वयबोधानुपपत्तिप्रसङ्गादित्यत आह आसत्तीति। निराकाङ्क्षे व्यभिचारतादवस्थ्यादित्यर्थः। व्यभिचारादिति। राजपदार्थपुरुषपदार्थयोः संसर्गज्ञानपूर्वकत्वाभावादित्यर्थः। द्वितीय इति। आकाङ्क्षाज्ञानपक्ष इत्यर्थः। जिज्ञासाज्ञानस्यान्वयव्यतिरेकाभावादित्यर्थः। प्रतिसन्धानादेवेत्यभ्युपगमवादः। तयोरपि स्वरूपसत्योरेव तन्त्रत्वात्। तावन्मात्रेति। जिज्ञासाज्ञानं यदि तन्त्रं स्यात्, तदानुभूयेतेत्यर्थः। जिज्ञासायाः स्वरूपसत्या हेतुत्वं दृष्टान्तेनाह दूरादिति। ननु तथापि जिज्ञासाज्ञानमान्तरालिकं स्वीक्रियतां, को दोष इत्यत आह विशेषेति। जिज्ञासावगतिर्यदापेक्षिता, तदा सम्भूतसामग्रीकेण शब्देन संसर्गधीरेव जन्यत इत्यर्थः।

---

प्रकाशः– आकाङ्क्षा। रक्त इत्युक्तौ किंगुण इत्यपि सेत्यर्थः। सत्तामात्रेणेति। स्वरूपसदाकाङ्क्षायोग्यतादिसाचिव्याच्छब्द एव ज्ञानजनने सम्भृतसामग्रीको लिङ्गमेव विलम्बितमिति भावः। व्यभिचारादिति। राजपदार्थपुरुषपदार्थ योरन्योन्यान्वये वक्तृज्ञानाभावादित्यर्थः। अनुमानान्तरवदिति। अनुमिति कारणान्तरव्याप्त्यादिवदित्यर्थः। यद्यपि प्रतिपदार्थान्विताकाङ्क्षायास्तत्काल एव नाशान्न कालान्तरे सत्त्वं, तज्ज्ञानहेतुत्वञ्च संस्कारद्वारा सम्भवति, तथापि पदार्थसमूहविषयाया एकस्या एवाकाङ्क्षायाः स्वरूपसत्त्वमस्त्येवेति भावः। विशेषोपस्थानेति। अन्वयप्रतियोगिपदार्थस्मरणानन्तराव्यवहितकाले इत्यर्थः।

संसर्गावगतिरेव जायते, न तु जिज्ञासावगतिरिति। न च विशेषोपस्थानात्प्रागेव जिज्ञासावगतिः, प्रकृतोपयोगिनां तावन्मात्रस्यानाकाङ्क्षत्वात्। न चैवम्भूतोऽप्ययमैकान्तिको हेतुः। यदा 'ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'ति वक्ता उच्चारयति, श्रोता च व्यासङ्गादिना निमित्तेनायमेति पुत्र इत्यश्रुत्वैव 'राज्ञः पुरुषोऽपसार्यतामि'ति श‍ृणोति। तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वम्। न च स्मारितार्थ संसर्गज्ञानपूर्वकत्वमिति।

---

आमोदः–ननु विशेषान्वयप्रतियोगिपदार्थान्तरस्मरणकालात् पूर्वमेव जिज्ञासावगतिः स्यादित्यत आह न चेति। तावन्मात्रस्येति। पदस्मारिततत्तत्पदार्थसार्थगोचरजिज्ञासा तावदेकैव वक्तव्या,तदवगमाभिमतकाले चान्वयधीरेव जायत इत्यर्थः। एवम्भूतोऽपीति। आकाङ्क्षया विशेषितोऽपीत्यर्थः। हेतुसत्त्वेऽपि साध्याभावं दर्शयति तदेति। अत्र च साध्याभावः पदस्मारितत्वांशवृत्तिरेकामिति बोध्यम्।

---

प्रकाशः– नन्वाकाङ्क्षा ज्ञाताऽन्वयधीहेतुः ज्ञायमानकारणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्याद् व्याप्तिवत्।

न चाप्रयोजकत्वम्, आकाङ्क्षासत्त्वेऽपि ज्ञानादन्वयबोधाभावापातात्। राजा पुत्रमाकाङ्क्षति पुरुषं वेति संशये तद्विपर्यये वान्वयधीप्रतिबन्धाच्च।

*अत्रास्मत्पितृचरणाः* – प्रवृत्तिपरत्वं शब्दस्य लिङ्गत्वे न स्यात्। अर्थज्ञानं हि प्रवर्त्तकं न तु तज्ज्ञानज्ञानं, गौरवात्, तदभावेऽप्यर्थज्ञानात् प्रवृत्तेश्च, अतो वक्ता घटज्ञानवानिति ज्ञानं न प्रवर्त्तकमपि त्वयं घट इति। घटज्ञानज्ञानमपि घटविषयमिति चेत्, सत्यम्। न तु घटत्वप्रकारकं, प्रवर्त्तकञ्च तथा। अन्यथा भ्रान्तस्येव भ्रान्तिज्ञस्यापि प्रवृत्तिप्रसङ्गः। अत एव लक्षणा, नानार्थाद्यन्वयबोधात् तात्पर्यग्रहो वाक्यार्थधीहेतुस्तच्च पदार्थसंसर्गविशेषज्ञानोद्देश्यकत्वमतस्तद् ग्राहकानुमानादेव तात्पर्यज्ञानावच्छेदकतया संसर्गसिद्धिरित्यपास्तम्। तात्पर्यज्ञानं न वाक्यार्थहेतुरिति वक्ष्यमाणत्वाच्च।

अपि चानुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वात् पदानि स्मारितार्थ संसर्गज्ञानपूर्वकाणीत्यनुमितिः स्यान्न घटज्ञानपूर्वकाणीति। योग्यतायाश्च लाघवात्

---

मकरन्दः– राजपदार्थेति। यद्यपि योग्यतासत्त्वे ईश्वरसंसर्गज्ञानसत्वान्न व्यभिचारः, तथाप्यजनितान्वयबोधे तत्रेश्वरतात्पर्याभावात्तात्पर्य्यघटितसाध्ये व्यभिचार इति भावः। नन्विति। तथा चाकाङ्क्षाया लिङ्गविशेषणत्वसम्भवादनुमान एवान्तर्भाव

स्यादेतत्। यावत्समभिव्याहृतत्वेन विशेषिते हेतौ नायं दोषः, तथाविधस्य व्यभिचारोदाहरणासंस्पर्शात्। कुतस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः? अलिङ्ग एव लिङ्गत्वाध्यारोपात्। एतावानेवायं समभिव्याहार इति तत्र श्रोतुरभिमानः। न, तत्सन्देहेऽपि श्रुतानुरूपसंसर्गावगमात्। भवति हि तत्र प्रत्ययो, न जाने किमपरमनेनोक्तमेतावदेव श्रुतं, यद्राज्ञः पुरुषोऽपसार्यतामिति। भ्रान्तिरसाविति चेत्, न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात्। न लिङ्गाऽऽभासजा, लिङ्गाभिमानाभावेऽपि जायमानत्वात्। एतादृक्पदकदम्बप्रतिसन्धानमेव तां जनयतीति चेत्, यद्येवमेतदेवादुष्टं सद्भ्रान्तिं जनयत् केन वारणीयम्। व्याप्तिप्रतिसन्धानं विनापि तस्य संसर्गप्रत्यायने सामर्थ्यावधारणात् चक्षुरादिवत्।

---

आमोदः- तथाविधस्येति। यावत्समभिव्याहृताकाङ्क्षादिमत्पदकदम्बत्वात्। यद्यप्येवमपि न व्यभिचारोद्धारः, तथापि तस्य तद्भावनाशक्यत्वं हेतुज्ञानकालेऽवश्यं साध्यस्य सत्त्वादित्यर्थः। गूढाभिसन्धिराह कुतस्तर्हीति। अलिङ्ग एवेति। कतिपयपदमात्रस्यालिङ्गत्वात्। तत्रैव यावत्समभिव्याहृतत्वमारोपयतीत्यर्थः। श्रुतार्थरूपेति। यदेव श्रुतं तावत्पदार्थसंसर्गानुभवादित्यर्थः। न च लिङ्गविशेषणसन्देहेऽनुमितिर्भवतीति भावः। सन्देहाकारमेवाह भवति हीति। असाविति। कतिपयपदश्राविणो या संसर्गावगतिरित्यर्थः। लिङ्गाभिमानिनो लिङ्गनिश्चयः। स च विशेषणांशसंशयात् प्रकृते नास्तीत्यर्थः। एकदेशश्राविणो या भ्रान्तिः सा शब्दादेव जायते, न तु प्रमापि, येन तत् प्रमाणं स्याद् इत्याह एतादृगिति। आशयमुद्घाटयति यद्येवमिति। व्याप्तीति। एकदेशश्राविणः शब्दादेव संसर्गप्रत्ययाभ्युपगमादित्यर्थः।

---

प्रकाशः- संशयादिसाधारणं ज्ञानमात्रं हेतुः। बाधसंशयस्य ज्ञानाप्रतिबन्धकत्वाच्च। अन्यथा प्रमामात्रोच्छेदप्रसङ्गात्। स्वपरबाधकप्रमाविरहः क्वचिन्निश्चीयतेऽपि यदेह भूतले घटो नास्तीत्यत्र, स्वयोग्यानुपलब्ध्या घटाभावनिश्चयेनान्यस्यापि घटाप्रमाविरहो निश्चीयते। अत एव सा न लिङ्गविशेषणम्। बाधकप्रमाणविरहस्य सर्वत्र निश्चेतुमशक्यत्वात्, तत्संशयेऽपि शब्दादन्वयबोधाल्लिङ्गविशेषणस्य च सर्वत्र निश्चिततत्वादिति सङ्क्षेपः। एतदेवाभिसन्धाय पूर्वापरितोषेणाह न चैवमिति। आकाङ्क्षादेर्ज्ञायमानतया हेतुविशेषणत्वेऽपीत्यर्थः। तत्सन्देह इति। यावत्समभिव्याहृतत्वसन्देहेऽपीत्यर्थः। भ्रान्तिरसाविति। कतिपयपदश्राविणो यः संसर्गप्रत्यय इत्यर्थः। व्याप्तीति।

**नास्त्येव तत्र संसर्गप्रत्ययः, असंसर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्, तर्हि यावत्समभिव्याहारेणापि विशेषणे नाप्रतिकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वाभावात्। असंसर्गाग्रह पूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत्, एवं तर्हि संसर्गो न सिद्ध्येत्। आप्तवाक्येषु सेत्स्यतीति चेन्न। सर्वविषयाप्तत्वस्यासिद्धेः। यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात्। प्रकृतविषये चाप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम्।**

**न च सर्वत्र जिज्ञासा निबन्धनम्, अजिज्ञासोरपि वाक्यार्थप्रत्ययात्।**

**आमोदः**– नास्त्येव तत्र संसर्गप्रत्ययो येन तद्वदन्यत्र संसर्गप्रमा स्यादित्यर्थः। अनाप्तोक्ते संसर्गज्ञानपूर्वकत्वं साध्यं नास्ति यावत्समभिव्याहृताकाङ्क्षादि-मत्पदकदम्बत्वं हेतुरस्तीति व्यभिचारमाह **तथाभूतस्येति**। एतच्चान्वय-प्रयोजकरूपवत्त्वं योग्यत्वमभिप्रेत्य। नन्वसंसर्गाग्रहपूर्वकाणीति साध्यम्। तच्चानाप्तोक्तत्वेऽप्यस्तीति न व्यभिचार इत्याह **असंसर्ग इति**। **एवं तर्हीति**। ज्ञानावच्छेदकतया हि संसर्गः सिद्ध्येत्। न चात्र ज्ञानपूर्वकत्वं साध्यमस्तीत्यर्थः। **आप्तेति**। तत्र संसर्गज्ञानपूर्वकत्वं न बाधितमित्यर्थः। तर्ह्याप्तोक्तत्वेन हेतुर्विशेषणीयः, संसर्गज्ञानपूर्वकत्वं च तवाभिमतं साध्यं, तत्राह **सर्वविषयेति**। **यत्र क्वचिदिति**। अनाप्तोक्तत्वस्य तथात्वात् तत्र व्यभिचार इत्यर्थः। **प्रागेवेति**। आप्तत्वग्रहदशायामित्यर्थः। तथा च न तेन हेतुं विशिष्य संसर्गसाधनम्। संसर्गस्य प्रागेव सिद्धेरिति भावः। पूर्वं सर्वमभ्युपगमवादेनोक्तमिति स्फुटयन्नाह **न चेति**।

**प्रकाशः**– शब्दो न लिङ्गतया ज्ञापकः व्याप्त्यादिज्ञानरहितस्यापि दोषवतः अविपर्य्ययहेतुत्वाच्चक्षुर्वदित्यर्थः। **नास्त्येवेति**। कतिपयपदश्रवणं यत्रेत्यर्थः। संसर्गे बाधकाच्चेति भावः। **एवं तर्हीति**। असंसर्गाग्रहपूर्वकत्वसिद्धावपि तस्याप्रवर्त्तकत्वात् प्रवर्त्तकं संसर्गज्ञानं न स्यादित्यर्थः। **सर्वेति**। आप्तोक्तत्वस्य च लिङ्गविशेषणतया ज्ञातस्यैव हेतुत्वादित्यर्थः। **सिद्ध्यभ्युपगमादिति**। सिद्ध्यभ्युपगमप्रसङ्गादित्यर्थः। तथा च शब्दस्यानुवादकत्वेनाप्रामाण्यापत्तिरिति भावः। तदेवं पदस्मारितपदार्थविषया जिज्ञासेत्यङ्गीकृत्य उक्तं, सम्प्रति तामप्यव्यापकतयाऽऽस्कन्दितुमाह **न चेति**।

**मकरन्दः**– इति भावः। क्वचिदपि तदनिश्चये तत्संशयोऽपि दुर्लभ इत्यत आह **स्वपरेति**। **अत एवेति**। यत एव संशयसाधारणं तज्ज्ञानं हेतुरित्यर्थः। नन्वेतदेव कुत इत्यत आह **बाधकेति**। **एतदेवेति**। आकाङ्क्षाज्ञानहेतुत्वमेवेत्यर्थः।

**आकाङ्क्षापदार्थस्तर्हि कः? जिज्ञासां प्रति योग्यता। सा च स्मारित तदाक्षिप्तयोरविनाभावे सति श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः। न चैषोऽपि ज्ञानमपेक्षते, प्रतियोगिनिरूपणाधीननिरूपणत्वात्। तदभावनिरूपणस्य च विषयनिरूप्यत्वादिति।१३।**

---

आमोदः- जिज्ञासामिति। सा चाजिज्ञासोरपि न तत्र व्यभिचार इत्यर्थः। संसर्गावगमेति। संसर्गप्रमेत्यर्थः। स्मारितयोरविनाभावो गुणवद्द्रव्यमित्यादौ, तदाक्षिप्तयोरविनाभावो नीलं सरोजमित्यादौ, विशेषाक्षिप्तसामान्ययोः। श्रोतरीति। वक्तरि संसर्गावगमप्रागभावस्यानाकाङ्क्षत्वद्योतनार्थम्। तदुत्पाद्येति। वाक्यान्तरोत्पाद्यसंसर्गावगमप्रागभावस्य निराकाङ्क्षेऽपि सत्त्वात्, तद्वारणार्थं स्मारिततदाक्षिप्तयोरविनाभावे सतीति जिज्ञासायोग्यतामाविष्कर्तुं, न तु व्यावर्तनार्थम्। एतादृशस्थले जिज्ञासोत्पत्तुमर्हतीत्येतत्परः साधारणहेतुरपि प्रतियोगिविशेषाङ्कितोऽत्रासाधारणः। न च प्रागभावादेव कार्यानुत्पत्तौ योग्यतासत्त्योरकारणतापत्तिः। एवं सति दण्डादेरप्यकारणतापत्तेः। न च यत्र यत्र

---

प्रकाशः- अथ योग्यतैव केत्यत आह सा चेति। शब्दस्मारितयोरविनाभावो, यथौदनं पचतीत्यत्र क्रियाकारकयोः। तदाक्षिप्तयोरविनाभावो यथा नीलं सरोजमस्तीत्यत्र विशेषाक्षिप्तयोर्द्रव्यगुणसामान्ययोः। प्रतिपादके संसर्गज्ञानप्रागभावो नास्तीत्यत उक्तं श्रोतरीति। वाक्यान्तरोच्चारणेन तत्रापि सोऽस्तीत्यत उक्तं तदुत्पाद्येति। तद्वाक्योच्चारणजन्य इत्यर्थः। प्रतियोगीति। संसर्गावगमप्रागभावो हि प्रतियोगिनि तदवगमे ज्ञाते ज्ञातव्यः, स च स्वविषये संसर्गे ज्ञाते बोद्धव्य इति संसर्गस्य प्रागेव ज्ञानाद्वाक्यस्यानुवादकत्वादप्रामाण्यापत्तिरित्यर्थः।

ननु निराकाङ्क्षे तदुच्चारणजन्यसंसर्गज्ञानप्रागभावस्य सिद्ध्यऽसिद्धिभ्यां व्याघातः। प्रागभावस्य च कार्यमात्रहेतुत्वान्न शब्दासाधारण्यम्। प्रागभावाभावस्य च कारणान्तराभावव्याप्यत्वात्तत एव कार्याभाव इति आकाङ्क्षा न हेतुः स्यात्। योग्यताऽऽसत्त्योरकारणत्वापत्तिश्च। अयोग्यानासन्नयोस्तदुच्चारणजन्य संसर्गधीप्रागभावाभावादेवान्वयबोधानुत्पत्तेः।

अथ ज्ञाप्यतदिरान्वयप्रकारकजिज्ञासानुकूलोपस्थितिहेतुत्वे सत्यजनिततात्पर्यविषयान्वयबोधकत्वमाकाङ्क्षा। घटमानयतीत्यत्र हि घटमित्युक्ते किमानयति पश्यति वा, आनयतीत्युक्ते किं घटमन्यद्वेति जिज्ञासा भवति। गौरश्च

---

मकरन्दः- दोषवत इति विपर्यय इति च स्वरूपनिर्वचनम्। ज्ञानहेतुत्वादित्यत्र तात्पर्यम्। संसर्ग इति समस्ताश्रवणमेव बाधकमित्याशयः। तस्येति असंसर्गा-

**आमोदः**– प्रागभावाभावस्तत्र तत्र कारणान्तराभाव आवश्यक इति। तत एव कार्यानुत्पत्तौ किमाकाङ्क्षयेति वाच्यम्? अन्यत्रापि प्रागभावस्याकारणतापत्तेः। न च तदुच्चारणजन्यसंसर्गावगमप्रागभावसिद्ध्यसिद्धिव्याघातो निराकाङ्क्षे तत्र प्रागभावस्यासिद्धिः। न च तदुत्पाद्यसंसर्गज्ञानाभावे तत्प्रागभावाभावोऽपि दुर्निरूप इति वाच्यम्। संसर्गावगमत्वेनैव प्रतियोगिसिद्धिः। दुःखप्रागभावार्थिकायां युक्तौ यथा दुःखत्वेनैव प्रतियोगिता, न तु तदा मे भाविदुःखत्वेन। तस्मादेतदनुशयेन यत् किञ्चिदुक्तम् अभिधानापर्यवसानमाकाङ्क्षेति तत्तुच्छम्। येन विना यस्य न स्वार्थान्वयानुभावकत्वं तदपर्यवसानमित्यपि संसर्गावगमप्रागभावपर्यवसन्नमेव। अभिधानं हि न शब्दप्रयोगः। तस्य निराकाङ्क्षेऽपि पर्यवसानात्, किन्त्वन्वयबोधः तदपर्यवसानं तदनुत्पत्तिः। सा च प्रागभाव एवेति घट्टकुट्यां प्रभातं प्रत्यूषे चाधिकमन्वेष्टव्यम्। ननु प्रागभावोऽप्याकाङ्क्षा ज्ञायतामत आह न चेति। संसर्गावगमस्य प्रागभावप्रतियोगिनः संसर्गसिद्धिमन्तरेण दुर्ग्रहत्वादित्यर्थः।१३।।

**प्रकाशः**– इत्यत्र नाभेदेनान्वयोऽयोग्यत्वात्। राज्ञ इति पुत्रेण जनितान्वयबोधत्वान्न पुरुषमाकाङ्क्षति। मैवम्, नामविभक्तिधात्वाख्यातार्थानां घटकर्मत्वानयनकृतीनां स्वरूपेणोपस्थितिर्नान्वयप्रकारकजिज्ञासानुकूलेति तत्राकाङ्क्षाविरहापत्तेः। घटः कर्मत्वमानयनं कृतिरित्यत्र घटमानयतीत्यत्रेवान्वयबोधापत्तेश्च।

अत्राहुः – अभिधानापर्यवसानमाकाङ्क्षा। येन विना यस्य न स्वार्थान्वयानुभावकत्वं, तस्य तदपर्यवसानम्। नामविभक्तिधात्वाख्यात क्रियाकारकपदानां परस्परं विना न स्वार्थान्वयानुभावकत्वम्। घटः कर्मत्वमानयनं कृतिरित्यत्राभेदेन नान्वयज्ञानमयोग्यत्वात्। योग्यता च बाधकमानाभावः। अन्यत्र

**मकरन्दः**– ग्रहस्येत्यर्थः। **स्मारितयोरिति** एतच्च सत्यन्तं विशेषणं स्वरूप निर्वचनम्। नन्वेवं गौरश्व इत्यादावभेदान्वयबोधे आकाङ्क्षा स्यादित्यत्र आह **गौरश्व इति**। तथा चेष्टापत्तिरिति भावः। यदि च स्वरूपेणैव तदुपस्थितिस्तदनुकूला, तत्राह **घटः कर्मत्वमिति**। **अभिधानेति**। अभिधानमन्वयानुभवः, तस्यापर्य्यव-सानमनिष्पत्तिरित्यर्थः। एतच्च **घटः** कर्मत्वमित्यादावप्यस्तीत्य न्यमपर्य्यवसान-पदार्थमाह **येनेति**। घटः कर्मत्वमित्यादेश्च नेतरव्यतिरेकप्रयुक्तं क्रियाकर्म-भावेनान्वयानुभावकत्वं, किन्तु स्वरूपयोग्यत्वप्रयुक्तं, तत्समवधानेऽपि तदननुभावकत्वात् अभेदान्वये च तत्राप्याकाङ्क्षाऽस्त्येव, अयोग्यत्वाच्च नान्वयधीरित्यत आह **घटः कर्मत्वमिति**। आकाङ्क्षालक्षणादिकं *शब्दप्रकाशे* सम्यग्व्याख्यातमनुसन्धेयम्।१३।

*प्राभाकरास्तु*, लोकवेदसाधारणव्युत्पत्तिबलेनान्विताभिधानं प्रसाध्य वेदस्य पौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वातन्त्र्येण प्रामाण्यमास्थिषत। लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरन्विताभिधानबलायातेऽपि प्रतिपादकत्वे अनुवादकतामात्रं वाक्यस्येति निर्णीतवन्तः। तदतिस्थवीयः।

**निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।**
**व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता।।१४।।**

---

आमोदः- प्रसङ्गादाह प्राभाकरास्त्विवति। अन्विताभिधानमिति। इतरान्विताभिधानमिति। इतरान्विता एव हि पदार्थाः पदैरभिधीयन्ते कथमन्यथाव्यवहाराद् व्युत्पत्तिग्रह इत्यादि *शब्दखण्डे* ( *तत्त्वचिन्तामणौ*) बहुशः (अभिहितम्)। ननु यद्यनुमानभावेन शब्दो गमकस्तदा कथमनुवादकत्वप्रसिद्धिरत आह अन्विताभिधानेति। शब्दस्यापि तत्रार्थे सामर्थ्यादनुवादकतेत्यर्थः।

---

प्रकाशः- यद् बाधकं तदभावस्यायोग्येऽपि सत्त्वात्। प्रकृतसंसर्गे च न तदभावः, सिद्ध्यसिद्धिव्याघातात्। न च प्रकृतसंसर्गेऽन्यत्र सिद्धबाधकमानाभावः, प्रकृतसंसर्गस्य प्रागप्रतीतेः। स्वबाधकप्रमाणविरहस्यायोग्येऽपि सत्त्वात्। सकलतदभावस्य च ज्ञातुमशक्यत्वात्। न च स्वरूपसन्नेवायं हेतुः। योग्यताभ्रमादन्वयबोधानुपपत्तेः। नापि सजातीयेऽन्वयदर्शनं,यथाकथञ्चित् साजात्यस्याव्यावर्त्तकत्वात्। पदार्थतावच्छेदकरूपेण च तस्य वाक्यार्थापूर्वतया निरासात्। नापि समभिव्याहृतपदार्थसंसर्गाभावव्याप्यधर्मशून्यत्वं, प्रमेयमभधेयमित्यादौ संसर्गाभावाप्रसिद्ध्या तदनिरूपणात्। नापि समभिव्याहृत पदार्थसंसर्गव्याप्यधर्मवत्त्वं, वाक्यार्थस्यानुमेयतापत्तेः। किं त्वितरपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावो योग्यता। प्रमेयमभिधेयमित्यत्र प्रमेयनिष्ठात्यन्ताभावप्रतियोगिप्रमाविशेष्यत्वं गोत्वे प्रसिद्धम्, अभिधेयत्वसंसर्गे च तदभावः। आसत्तिश्चाव्यवधानेनान्वयप्रतियोगिस्मृतिरिति सङ्क्षेपः।१३।

प्रसङ्गसङ्गतेराह - *प्राभाकरास्त्विति*। लोकेति। य एव लौकिकास्त एव वैदिका इति भावः। व्युत्पत्तिबलेनेति। व्यवहारेणेतरान्वितपदार्थज्ञानस्यैव स्वकारणस्यानुमितेरित्यर्थः।

यावती हि वेदे सामग्री, तावत्येव लोकेऽपि भवन्ती कथमिव नार्थं गमयेत्? न ह्यपेक्षणीयान्तरमस्ति। लिङ्गे तु परिपूर्णेऽप्यवगते व्याप्तिस्मृतिरपेक्षणीयास्तीति विलम्बेन किं निर्णेयम्? अन्वयस्य प्रागेव प्रतीतेः।

लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति चेन्न। तद्रहितस्यापि स्वार्थप्रत्यायने शब्दस्य शक्तेरवधारणात्। अन्यथा वेदेऽप्यर्थप्रत्ययो न स्यात्, तदभावात्। न च लोके अन्यान्येव पदानि, येन शक्तिवैचित्र्यं स्यात्। अनाप्तोक्तौ व्यभिचारदर्शनात् तुल्यापि सामग्री सन्देहेन शिथिलायते इति चेन्न। चक्षुरादौ व्यभिचारदर्शनेन शङ्कायामपि सत्यां ज्ञानसामग्रीत

---

आमोदः- वेदे निर्णीतशक्तेरिति (३।१४) वेदे शब्दशक्तिनिर्णयादित्यर्थः। प्रागिति। अनुमानात् पूर्वमित्यर्थः। कथमेवमित्याह व्याप्तीति। निर्णीतशक्तित्वमाह यावतीति। द्वितीयार्धं व्याचष्टे लिङ्ग इति। लोक इति। तथा च लोके भिन्नैव सामग्रीति तद्विलम्बेन प्रथमं शब्दो मूक एवेत्यर्थः। तद्रहितस्यापीति। वेद आप्तोक्तनिश्चयं विनापि प्रत्यायकत्वदर्शनादित्यर्थः। संसर्गज्ञानपूर्वकाणीति साध्यसिद्धावपि न प्रवृत्तिः। न हि ज्ञानाज्ज्ञानं प्रवर्तकं किन्त्विष्टकाबद्धोदकप्रकारकं ज्ञानं, तच्च न प्रकृते घटः, संसर्गज्ञानपूर्वकत्वसिद्धावपि घटसंसर्गस्य ताद्रूप्येणासिद्धिरिति शब्दप्रमाणमिति भावः। शिथिलायत इति। स्वघटितप्रतीतिं न घटयतीत्यर्थः। ज्ञानसामग्रीत इति। इन्द्रियार्थसन्निकर्षे सति शैथिल्यादर्शनादित्यर्थः। सन्देहेन शिथिलायत

---

प्रकाशः-वेदे क्लृप्तसामग्रीतो लोकेऽपि संसर्गानुभवादन्यथा त्वनुवादकतापि न स्यादित्याह निर्णीतेति। आकाङ्क्षादिमत्तया ज्ञानात् प्राग् लिङ्गज्ञानाभावात् तद्वत्तया च ज्ञाने वेदतुल्यतयाऽन्वयबोधे विलम्बाभावादन्यथा वैदिकवाक्यादपि स न स्यात्। तस्य लौकिकोपजीवकत्वादिति भावः। प्रत्युतानुमाने व्याप्तिस्मृत्यादि विलम्बादनुमितिविलम्बेन तस्यैवानुवादकत्वमित्याह व्याप्तिस्मृतीति। लोके इति। स च न वक्तृज्ञानानुमानं विनेति भावः। तं विनापि वेदादन्वयबोधाद्व्यभिचारात् स न तत्र हेतुरित्याह तद्रहितस्यापीति। य एव लौकिकास्त एव वैदिकास्त एवामीषामर्था इत्याह न चेति। यथा स्थाणुपुरुषसंशये चक्षुर्न निश्चायकं, तथाप्तोक्तत्वानाप्तोक्तत्वसन्देहे तुल्यापि सामग्री न निश्चायिकेत्याह अनाप्तोक्ताविति। यथा समानविषयकसन्देहस्यैव प्रतिबन्धकत्वाद्भिन्नविषयकोऽप्रमाजनकत्वसंशयो न चाक्षुषनिश्चयप्रतिबन्धकः। तथाप्तोक्तत्वसन्देहोऽपि

स्तदुत्पत्तिदर्शनात्।

ज्ञायमानस्यायं विधिर्यत् सन्देहे सति निश्चायकं यथा लिङ्गं, चक्षुरादि तु सत्तयेति चेन्न। वाक्यस्य निश्चितत्वात्। फलप्रामाण्यसन्देहस्य च फलोत्तरकालीनत्वात्। आप्तोक्तत्वस्य चार्थप्रत्ययं प्रत्यनङ्गत्वात्। लोकेऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः। भवति हि वेदानुकारेण पठ्यमानेषु *मन्वादि*वाक्येषु अपौरुषेयत्वाभिमानिनो *गौडमीमांसकस्यार्थ*निश्चयः। न चासौ भ्रान्तिः, पौरुषेयत्वनिश्चयदशयामपि तथा निश्चयादिति।१४।

स्यादेतत्। नाप्तोक्तत्वमर्थप्रतीतेरङ्गमिति ब्रूमः, किन्त्वनाप्तोक्तत्व शङ्कानिरासः। स च क्वचिदपौरुषेयत्वनिश्चयात्, क्वचिदाप्तोक्तत्वाव धारणादिति चेत्, तत्किमपौरुषेयत्वस्याप्रतीतौ सन्देहे वा वेदवाक्याद्विदित पदार्थसङ्गतेरर्थप्रत्यय एव न भवेत्, भवन्नपि वा न श्रद्धेयः? प्रथमे सत्यादय

आमोदः-इति। सन्देहविषयं विवेचयति। वाक्यस्येति। वाक्यं न सन्देहविषय इत्यर्थः। फलेति। फलं संसर्गबोधः, तत्प्रामाण्ये च सन्देहः फलोत्पत्तौ सत्यां भवेदेवेत्यर्थः। अनङ्गत्वादिति। वेदे व्यभिचारदर्शनादित्यर्थः। ननु लौकिकत्वावच्छेदेनाप्तोक्तत्व-निश्चयो हेतुः स्यादित्यत आह लोकेऽपि चेति। वाक्यार्थप्रतीतिस्थलं दर्शयति भवति हीति। गौड़मीमांसकस्येति। वेदानभिज्ञत्वख्यापनाय तथात्वनिश्चयादिति बाधानवतारादित्यर्थः। निरासमिति ब्रूम इत्यनुषङ्गः। अपौरुषेयत्वनिश्चयो न वाक्यार्थप्रतीतावङ्गमित्याह तत् किमिति। सत्यादय इति। वाक्यार्थ प्रत्ययस्यानुभूयमानत्वेनापलापानर्हत्वादित्यर्थः। न त्वसंसर्गाग्रहमात्रं तत्रेत्याह न वेति। संसर्गग्रहे बाधकाभावात् सामग्र्या स्वयैवोपपादितत्वादिति भावः। अन्यथा

प्रकाशः- न शाब्दनिश्चयप्रतिबन्धक इत्याह चक्षुरादाविति। सन्देहः किं वाक्यस्वरूपे, तज्जनितज्ञानप्रामाण्ये वा, आप्तोक्तत्वे वा?। आद्ये वाक्यस्येति। द्वितीये फलेति। अन्त्ये आप्तोक्तत्वस्येति। न चाप्रमाजनकत्वे सन्देहः, तत्प्रतिबन्धकत्वे मानाभावादिति भावः। ननु लोके आप्तोक्तत्वसन्देहे वाक्यार्थज्ञानानुदयात् तन्निश्चयस्तद्धेतुः। तथा च वाक्यार्थगोचरपदार्थज्ञानजन्यत्वग्राहकात् तदुपजीविनोऽनुमानाद्वाक्यार्थधीरित्यत आह लोकेऽपीति।१४।

मकरन्दः- उपजीवकत्वात् तुल्यत्वात्। य एव लौकिकास्त एव वैदिका इत्याशयात्। लोके व्युत्पत्तिग्रहो व्यवहारादिति तस्योपजीव्यत्वमित्यप्याहुः।।१४।।

एव प्रमाणम्। न चासंसर्गाग्रहे तदानीं संसर्गव्यवहारो बाधकस्यात्यन्तमभावात्। तथापि तत्कल्पनायामन्वयोच्छेदप्रसङ्गात्। द्वितीये त्वश्रद्धा प्रत्यक्षवन्निमित्तान्तरान्निवर्त्स्यतीति वेदे यदि, लोकेऽपि तथा स्यादविशेषात्। अन्यथा वेदस्याप्यनुवादकताप्रसङ्गः।

तदुच्यते –

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात्पदैरमी।
अन्विता इति निर्णीते वेदस्यापि न तत्कुतः।।१५।।

यदा ह्यपौरुषेयत्वनिश्चयात् प्राक् वेदो न किञ्चिदभिधत्ते इति पक्षः, तदाप्तोक्तत्वनिश्चयोत्तरकालं लोकवत् वेदेऽप्यपौरुषेयत्वनिश्चयात्

**आमोदः**– प्रत्यक्षादावपि असंसर्गाग्रहादेव व्यवहारोपपत्तौ संसर्गग्रहः क्वापि न सिद्ध्येदित्याह तथापीति। अन्वयग्रहोच्छेदात् प्रमाणाभावादन्वयस्यैवोच्छेद इत्युक्तमन्वयोच्छेद इति। निमित्तान्तरादिति। समर्थप्रवृत्तिजनकत्वादिलिङ्गादित्यर्थः। अन्यथेति। यद्यपौरुषेयत्वप्रतीतिः शाब्दान्वयबोधे हेतुस्तदेत्यर्थः।१४।

तदेवाह व्यस्तेति। अपौरुषेयत्वनिश्चयेन पुंदोषशङ्काया निरासादेते पदार्था मिथः संसर्गवन्तः व्यस्तपुंदूषणाशङ्कैः पदकदम्बस्मारितत्वादिति वेदेऽप्यनुमानस्यैव सम्भृतसामग्रीत्वादनुवादकमेव पर्यवसन्नमित्यर्थः। तदिति। अनुवादकत्वमित्यर्थः। कारिकार्थमाह यदीति। न किञ्चिदभिधत्ते नान्वयानुभावकः।

**प्रकाशः**- बाधकस्येति। न चाप्तोक्तत्वकारणबाध एव बाधक इति वाच्यम्। व्यभिचारात् तद्धेतुतायामेव बाधात्। नापि लौकिकत्वेन ज्ञाते तद्धेतुः। मानाभावात्, आप्तोक्तत्वस्य च ज्ञातुमशक्यत्वात्। वाक्यार्थस्यापूर्वत्वादिति भावः। यथोत्पन्नप्रत्यक्षज्ञानप्रामाण्यग्राहकादप्रामाण्यशङ्कात्मकाश्रद्धापगमः, तथा वेदवाक्यजेऽपीत्याह द्वितीये त्विति।

यदि चापौरुषेयत्वनिश्चये सत्येव वेदार्थधीः, तदैते पदार्था मिथः संसृष्टाः दोषवत्पुरुषाप्रणीताकाङ्क्षादिमत्पदस्मारितत्वादिति वेदेऽन्वयधीरस्त्विति वेदोऽप्यनुवादकः स्यादित्याह अन्यथेति। तथा च शब्दः प्रमाणमेव न स्यात्, सर्वत्रानुमानादेव वाक्यार्थप्रमोत्पत्तेरिति भावः।

**मकरन्दः**- दोषवदिति। अत्र हेतुद्वये तात्पर्य्यम्। न चाद्यहेतोर्विसंवादिशुकवाक्ये व्यभिचारः, दोषवत्पुरुषाप्रणीतसतात्पर्य्यकपदस्मारितत्वस्याद्यहेत्वर्थत्वात्।

केवलव्यतिरेक्यनुमानं पराभिमतमर्थापत्तिरन्वयाभावादिति चेत्, एवमेतावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः। तत्रानुमानव्यवहारः कुत इति चेत्, अविनाभूतलिङ्गसमुत्पन्नत्वात्। साध्यधर्मेण विना ह्यभवनमन्वयिन इव व्यतिरेकिणोऽप्यविशिष्टं, तन्निश्चयश्चान्वय-व्यतिरेकाभ्यामन्यतरेण वेति। तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयं, तद्विशेषवचनं वा पूर्ववदादिवदिति युक्तम्।१९।

आमोदः-कुत इति। साध्याप्रसिद्ध्या पक्षधर्मतोपनयनवैयर्थ्याद्यनुमान-वैधर्म्यादित्यर्थः। साध्यधर्मेणेति। अविनाभाव उभयत्रापि तुल्यः। स च क्वचिद् अन्वयमात्रादनौपाधिकात्, क्वचिदन्वयव्यतिरेकाभ्यां, क्वचिच्च व्यतिरेकमात्रादेव गृह्यत इत्यर्थः। उपसंहरति तस्मादिति। तद्विशेषवचनमिति। अनुमानविशेषवचनं, केवलव्यतिरेकवचनमिति यावत्। पूर्ववदादीति। यथा पारमर्षं सूत्रं पूर्ववत् शेषवत् सामान्यतोदृष्टञ्चे'ति (न्या.सू. 1.1.5) विशेषाभिधानमित्यर्थः। चिन्तितमिति। 'योग्याऽदृष्टिः कुतोऽयोग्ये (न्या.कु. III.1) इत्यादिनेत्यर्थः। प्रसङ्गादाह न चेति।१९।

प्रकाशः- प्रतियोग्यनुयोगिभावस्य नियामकत्वात्। तथा चानुमितिसामग्र्यस्त्येव, परिभाषा त्वपर्यनुयोज्येत्याह एवमिति। वस्तुतो व्यतिरेकयोः सहचारादन्वययोरेव व्याप्तिः, प्रतियोग्यनुयोगिभावस्य नियामकत्वादिति व्याप्तस्य पक्षधर्मत्वमस्त्येवेति भावः। अन्यतरेण वेति। केवलान्वयिव्यतिरेकिणोरित्यर्थः।

ननु ज्योतिःशास्त्राद् देवदत्तस्य शतवर्षजीवित्वे ज्ञाते, अथ शतवर्षजीवी गृह एवेति नियमे प्रत्यक्षेण निश्चिते, पश्चाद् योग्यानुपलब्ध्या निश्चितो गृहाभावो जीवननियमग्राहकमानयोर्बलाबलानिरूपणाद् बहिःसत्त्वकल्पनां विना नियमद्वयविषयं संशयं जनयित्वा, जीवनसंशयमापाद्य, तदपनुत्तये जीवनोपपादकं बहिःसत्त्वं कल्पयति, यथोक्तसामग्र्यनन्तरं बहिरस्तीति प्रतीतेः। तत्रान्वय-व्यतिरेकाभ्यां जीवनसंशय एव करणम्। जीवित्वलिङ्गविशेषणसन्देहेऽनुमानाभावात्। यथोक्तसामग्रीप्रभवसंशयस्य च कल्पनाङ्गत्वात्र स्थाणुपुरुषसंशयस्य मृतजनिष्यमाणयोर्गृहाभावनिश्चयस्य च तादृशसंशयाजनकस्य नैककोटिनिर्वाह-

मकरन्दः- तेन संशयस्य बहिःसत्त्वकल्पकत्वादिति नोपसंहारविरोधः, न वा जीवित्व-स्यार्थापत्तिकल्पनोपवर्णनेऽपसिद्धान्त इति। जीवननियमेति। गृहे नास्त्येवेति नियमग्राहकमत्रोक्तम्। अत एव जीवनगृहाभावग्राहकयोरित्येव क्वचित् पाठः।।१९।।

प्रकाशः– बहिःसत्त्वकल्पकत्वम्।

अथ जीवननियमग्राहकमानयोस्तुल्यबलत्वज्ञाने विशेषादर्शनान्न बहिःसत्त्वकल्पना। एकस्य बलवत्त्वाज्ञाने च तेनान्यस्य बाध एवेति न संशयः। तस्माज्जीवनगृहाभावयोर्निश्चय एव बहिःसत्त्वं कल्प्यते, न तु जीवनसंशये इत्यनुमानादेव बहिःसत्त्वसिद्धिः।

तन्न। योग्यानुपलब्धिजनितो गृहाभावनिश्चयः सुदृढ इति जीवननियमग्राहक योरेकं बाध्यं, विरुद्धयोरमानत्वात्। तदिह मरणं कल्पयित्वा जीवनग्राहकं बाध्यतामुत बहिःसत्त्वं कल्पयित्वा नियमग्राहकम्?। तत्र बहिसत्त्वकल्पने गृहनियमग्राहक मात्रबाधा, मरणकल्पने तु शतवर्षजीवी देवदत्तः, शतवर्षजीवी गृहे एवेति नियमद्वयस्य बाधः स्यात्। तथा चार्थापत्तिकल्पितं जीवित्वमुपजीव्यानुमानादेव बहिःसत्त्वज्ञानं भविष्यतीत्येतावत्तर्कसहितस्य यथोक्तसामग्रीप्रभवसंशयस्य बहिःसत्त्वकल्पकत्वात्। न च तस्यां दशायां मानान्तरमस्ति, ततोऽर्थापत्तिसहकारित्वं तर्कस्य, यत्र च मृते गृहस्थिते वा तादृशसंशयाद्बहिःसत्त्वकल्पना,तत्र जीवननियमग्राहकयोरन्यतराभासत्वं, परोक्षज्ञानस्य जनकज्ञानाप्रमात्वेना प्रमात्वनियमात्।

अत्राहुः – देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतो दृष्टमभावरूपमरणापेक्षया जीवनं भावरूपं विषयीकरोति लाघवादिति तत्रैव लाघवं सहकारि। तथाहि – यथोक्तसंशयदशायां जीवनबाधे तन्नियमबाधस्यावश्यकत्वादिति तर्कानन्तरमेव बहिःसत्त्वज्ञानमित्यविवादम्। तत्र क्लृप्तप्रमाणभावे सामान्यतो दृष्ट एव लाघवं सहकारि, न तु कल्पनीयप्रमाणभावे यथोक्तसंशये, गौरवात्।

यच्चोक्तं – मरणकल्पने शतवर्षावच्छिन्नजीवी गृह एवेत्यस्यापि बाध इति। तत्र विशिष्टबाधो विशेष्यबाधात्, मरणेऽपि जीवी गृह एवेत्यस्य विशेष्यस्याबाधात्, किन्तु विशेषणबाधात्। स च शतवर्षजीवित्वबाध एव। विशेषणाभावायत्तो विशिष्टाभावोऽप्यस्तीति चेन्न। विशेष्यवति विशिष्टाभावस्य विशेषणाभावात्मकत्वादिति सङ्क्षेपः।

पूर्ववदादिवदिति। त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टम् (न्या.सू. १।१।५) इति सूत्रे पूर्ववदादिरनुमानविशेष उक्तः।१९।

**अनुपलब्धिस्तु न बाधिकेति चिन्तितम्। न च प्रत्यक्षादेरतिरिच्यते। तदुच्यते –**

**प्रतिपत्तेरापारोक्ष्यादिन्द्रियस्यानुपक्षयात्।**
**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः।।२०।।**

**या हि साक्षात्कारिणी प्रतीतिः सेन्द्रियकरणिका, यथा रूपादिप्रतीतिः। तथेह भूतले घटो नास्तीत्यपि। साक्षात्कारित्वमस्या असिद्धमिति चेन्न।**

---

**आमोदः**– तदुच्यत इति। प्रत्यक्षाद्यनतिरेकित्वमुच्यत इत्यर्थः। विवादपदमनुपलब्धं ज्ञानं प्रत्यक्षम् इन्द्रियकरणकं वा अपरोक्षत्वात्, अन्यत्रानुपक्षीणेन्द्रियजन्यत्वात्। अज्ञातकरणत्वात् भावावेशाच्चेति। अस्मदादिराज्यानुभवस्य भावभूतकरणसहकृतमनोजन्मत्वनियमादित्यर्थः। अत्र प्रथमं हेतुं साधयति या हीति। नन्वपरोक्षत्वं साक्षात्त्वं तच्चासिद्धमिति शङ्कते साक्षादिति। परिहरति नेति।

---

**प्रकाशः**– अनुपलब्धिस्तु स्वरूपसती परमात्मनो योग्यत्वाभावान्न बाधिका, ज्ञाताऽप्यनुमानरूपतया न बाधिका, अनुमानबाधकत्वस्य निरस्तत्वादित्याह अनुपलब्धिस्त्विति। घटोपलम्भे घटाभावाज्ञानादनुपलब्धिरवश्यं हेतुरिति सैव करणमावश्यकत्वात्। न च प्रतियोग्यनुपलब्धिमात्रं न करणं, प्रतियोगिज्ञानस्याभाव धीहेतुत्वात्। नापि प्रतियोगिसत्त्वप्रमाविरहः, अत्यन्ताभावग्रहे तदप्रसिद्धेरिति वाच्यम्। यादृश्यास्तथेन्द्रियसहकारित्वम्, तादृश्याः करणत्वात्। न तु इन्द्रियमपि तत्करणं, गौरवादिति प्रसङ्गागतं निरस्यति न चेति। अभावस्य यथायथं प्रत्यक्षादि-गम्यत्वादित्यर्थः।

तत्र प्रत्यक्षगम्यत्वे मानमाह प्रतिपत्तेरिति। जन्यापरोक्षज्ञानस्येन्द्रिय जन्यत्वनियमादित्यर्थः। तत्र चान्वयव्यतिरेकितया योग्यानुपलब्धेः सहकारित्वं न निषिद्ध्यते इति भावः। इन्द्रियस्येत्यादि। इन्द्रियव्यापारस्यानन्यथा सिद्धत्वादज्ञातकरणजन्यज्ञानत्वाच्चेत्यर्थः। भावावेशाच्चेति। अस्मदादि बाह्यानुभवस्य भावभूतकरणसचिवमनोजन्यत्वनियमादित्यर्थः। इन्द्रियकरणिकेति। यद्यप्यत्र मनसा सिद्धसाधनम्। न चेन्द्रियत्वेन तज्जन्यत्वं साध्यम्। साक्षात्प्रतीति-करणस्यैवेन्द्रियतया तेनैव तदनवच्छेदादात्माश्रयात्। तथापि रूपाभावादि-प्रतीतेर्बहिरिन्द्रियान्तराजन्यबहिर्विषयकजन्यसाक्षात्कारित्वाच्चाक्षुषादित्वं साध्यमिति भावः। अनुपलब्धेरपि ज्ञातानुपलब्ध्यन्तरगम्यत्वेनानवस्थानात्

एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः। न हि तस्मिन्नेव कार्ये तदेव करणमेकदा ज्ञातमज्ञातञ्चैकदोपयुज्यते। लिङ्गेन्द्रिययोरपि व्यत्ययप्रसङ्गात्। ज्ञानस्याकारणत्वप्रसङ्गाच्च। न हि तदतिपत्यापि भवतस्तत्कारणत्वम्, व्याघातात्। तस्माज्ज्ञातानुपलब्धिजन्यस्या-साक्षात्कारित्वात्, तद्विपरीतकारणकमिदं तद्विपरीतजातीयमिति न्याय्यम्।

आमोदः– अभावं साक्षात्करोमीत्यनुव्यवसायसत्त्वेऽपि गत्यन्तरमाह एकेति। एकजातीयमेवाभावज्ञानं ज्ञातयाऽनुपलब्ध्या क्वचिदनुपलब्ध्या च जन्यते इत्यज्ञातानुपलब्धिजन्यमभावज्ञानं साक्षात्कारिजातीयमिन्द्रियकरणकमेवेत्यर्थः। व्यत्ययेति। लिङ्गमज्ञातम् इन्द्रियं च ज्ञातं करणं स्यादित्येवमपि प्रसज्यत इत्यर्थः। ज्ञानस्येति। ज्ञातानुपलब्धिस्थले च स्वरूपसत्येव जनिका स्यात्। तथैव सामर्थ्योपलब्धेरित्यर्थः। न हीति। ज्ञानं विनापि चेदनुपलब्धं ज्ञानमङ्गीकृतं तदा ज्ञातत्वमनुपलब्धेरतन्त्रमेवेत्यर्थः। तद्विपरीतकारणकमिति। स्वरूपसदनुपलब्धि-जन्यमित्यर्थः। तद्विपरीतजातीयमिति। साक्षात्कारिजातीयमित्यर्थः। तथा च

प्रकाशः– क्वचिदज्ञातैव करणमुपेयेत्याशयेनाह एकेति। अज्ञातकरणकानुभवत्वं साक्षात्त्वव्यवस्थापकम्। अतः स्मृतेरज्ञातकरणकत्वेऽपि न तदिति भावः। यदि च नैवं, तदा लिङ्गमपि साक्षात्कारमिन्द्रियमप्यनुमितिं जनयेदित्याह लिङ्गेति। ज्ञातकरणकत्वं ज्ञानकरणकत्वं लिङ्गादेरजनकत्वादिति व्यभिचारादभावज्ञाने तत्करणं न स्यादित्याह ज्ञानस्येति। तद्विपरीतेति। अज्ञातयोग्यानुपलब्धिकरणकं साक्षात्कारजातीयमित्यर्थः।

**मकरन्दः– नापीति।** अधिकरणे इति शेषः। अत एवाह अत्यन्तेति। वायौ रूपात्यन्ताभावग्रहे अधिकरणे प्रतियोगिप्रमाऽसिद्धेत्यर्थः। गौरवादिति। उभयकारणकल्पने गौरवादित्यर्थः। साक्षादिति। तथा चेन्द्रियत्वं न साक्षात्प्रतीतौ कारणतावच्छेदकमात्माश्रयादिति तत्साधने बाध इति भावः। यद्यपि स्मृत्यजनकज्ञान कारणमनोयोगाश्रयत्वादिना तन्निर्वचने नोक्तदोषः, तथापि समाधिसौकर्य्यादाह तथापीति। अत्र रासनप्रत्यक्षे व्यभिचारवारणायाजन्यान्तम्। एतच्च रूपाभावबुद्धौ चाक्षुषत्वसाधने रसाभावबुद्धौ रासनत्वसाधने चाक्षुषप्रत्यक्ष एव तद्वारणाय तदित्यवधेयम्। अप्रसिद्धिवारणाय प्रथमबहिःपदम्। मनोमात्रकरणके व्यभिचारादाह बहिर्विषयकेति। ऐशे व्यभिचारादाह जन्येति। अनुमित्यादौ व्यभिचारादाह साक्षात्कारित्वादिति।

**ननु क्व नाम ज्ञातानुपलब्धिरसाक्षात्कारिणीमभावप्रतीतिं जनयति? तद् यथा निपुणतरमनुसृतो मया मन्दिरे चैत्रो न चोपलब्ध इति श्रुत्वा श्रोताऽ नुमिनोति, नूनं नासीदेवेति। एतेन प्राङ्नास्तितापि व्याख्याता।**

---

**आमोदः**– सिद्धमिन्द्रियकरणकत्वमिति भावः।

**निपुणतरमिति।** शब्दान्मैत्रानुपलब्धिज्ञानवतश्चैत्रस्य मैत्राभावानुमानमित्यर्थः। अनुमितिस्वरूपमाह **नूनमिति। एतेनेति** यत्रानुपलब्धिर्न शाब्दी किन्तु मैत्राभावं पृष्टः स्वयमेवानुपलब्धिं ज्ञात्वाऽनुमिनोति नासीत्तत्र चैत्र इति। अत्र हि स्मरणार्हस्य स्मरणाभावो लिङ्गं तेन प्राक्कालीना नास्तिता सिद्ध्यति। अत्राभावानुमितिकाले चैत्रस्य तत्र सत्त्वेऽपि न दोष इति भावः।

---

**प्रकाशः**– ननु प्राङ्नास्तितायामिन्द्रियं विनाप्यभावधीरिति व्यभिचारादिन्द्रियमकरणमित्यत आह **एतेनेति।** यथा शब्दावगतानुपलब्ध्या लिङ्गेनाभावानुमानं, तथा प्राङ्नास्तितास्थलेऽप्यभावधीर्लिङ्गजेत्यर्थः। ननु तत्रास्मरणं न लिङ्गं, न हि यावदनुभूतं तावदेव ग्रहणयोग्यमपि स्मर्यत एवेति नियम इति। मैत्रस्य तद्गेहसत्त्वेऽप्यननुभवात् संस्कारानुत्पादात्तदनुद्बोधाद् वा तदस्मरणस्योपपत्तेः। न, कश्चिद्विषयविशेष एव हि तादृशो यो गेहादिनिष्ठतया अनुभूयत एव, तदनुभवेन च संस्कारो जन्यत एव, स च न नश्यति। नापि तदुद्बोधकान्तरापेक्षा। विलक्षणविषयविशेषमाहात्म्यात्। यथा श्रीविश्वनाथायतने भगवन्तं श्रीविश्वनाथमनुभवतः, तथा मैत्रमपि प्रेष्ठम्। प्रयोगश्च–तद्गेहं तदा मैत्राभाववत् तत्तुल्यपरिमाणपटादिस्मरणेऽपि तद्वत्तया अस्मर्यमाणत्वात्, यदेवं तदेवं, यथा पटाभाववद् भूतलमिति। स्मरणाभावश्च संयुक्तविशेषणतया मनोवेद्य एवेति भावः। *केचित्तु* यत्र सामान्याभावेन लिङ्गेन विशेषाभावानुमानं, तत्र ज्ञातानुपलब्धिरनुमानाङ्गमिति तत्परोऽयं ग्रन्थ इत्याहुः।

**ननु तथाप्यवान्तरजातिभेदोऽस्तु, अज्ञातानुपलब्धिजन्ये साक्षात्कारस्तु कुत इति चेत्, कारणविरोधात् कार्यविरोधेन भवितव्यमित्युक्तमेव। अनन्यत्रोपक्षीणेन्द्रियव्यापारानन्तरभावित्वाच्च। अधिकरणग्रहणे तदुपक्षीणमिति चेन्न।**

---

**आमोदः**– ननु वा ज्ञातानुपलब्धिजन्ये ज्ञाने अनुपलब्धत्वं जात्यन्तरमेवास्तु, किं साक्षात्त्वेनेत्याशङ्कते **नन्विति**। पारोक्ष्यापारोक्ष्यलक्षणधर्मभेदश्चेत् कार्ये, तदा साक्षात्त्वमायातमित्यर्थः। न ह्यज्ञातकरणजन्यं ज्ञानं न साक्षात्कारीति सम्भवति। तथा च कारणविरोध एवेति भावः। द्वितीयं हेतुं विवृणोति **अन्यत्रेति**। इन्द्रियस्याधिकरणग्रहे उपक्षय इत्याह **अधिकरणेति**। परिहरति **नेति**। अधिकरणग्रहस्य प्रकृते जातत्वान्नीलघटे पीतरूपाभावोऽन्धेनापि गृह्येतेत्यर्थः।

---

**प्रकाशः**– ननु ज्ञातानुपलब्धेरसाक्षात्कारजनकत्वेऽप्यज्ञातानुपलब्धिजन्ये अवश्यं साक्षात्कारित्वमिति न नियमो वैजात्यान्तरेणाप्युपपत्तेरित्याह **नन्विति**। सर्वत्र असाक्षात्कारित्वस्य ज्ञायमानकरणजन्यत्वव्याप्तेस्तन्निवृत्तावसाक्षात्कारित्व व्यावृत्तेरवान्तरजातिः साक्षात्कारित्वमेवेत्याह **कारणेति**। न च साक्षात्कारित्व मिन्द्रियजन्यत्वप्रयुक्तमेवेति वाच्यम्। ज्ञातेन्द्रियसन्निकर्षजेन्द्रियगतिज्ञानस्य साक्षात्कारित्वप्रसङ्गात्। असाक्षात्कारित्वस्य च साक्षात्कारिभिन्नज्ञानरूपत्वात्। अनुभवत्वेन साङ्कर्यापत्त्या जातित्वाभावादिति भावः। न चेन्द्रियजत्वं साक्षात्कारित्वप्रयोजकं, प्रकृतेऽपि तत्त्वादित्याह **अनन्यत्रेति**।

---

**मकरन्दः**– न चोपनीतविषये मानसप्रत्यक्षे व्यभिचारः, जन्यपदेन लौकिकत्वस्य विवक्षितत्वात्। वस्तुतो बहिर्विषयकजन्येत्यत्र स्वार्थिककन्प्रत्ययाद्-बहिर्विषयजन्यत्वं विवक्षितम्, तस्य च विषयाजन्यत्वादिति। नन्वस्तु तर्हि सर्वत्र ज्ञातैवानुपलब्धिः करणमित्यत आह **अनुपलब्धेरपीति**। **सामान्याभावेन** उपलम्भसामान्याभावेन विशेषाभावानुमान-मित्यर्थः। **इन्द्रियजन्यत्वेति**। इन्द्रियसन्निकर्षजन्यत्वेत्यर्थः। तेन नोत्तरविरोधः। इन्द्रियविशिष्टसन्निकर्षहेतुत्वे इन्द्रियहेतुत्वमपीति न विरोध इत्यन्ये। ज्ञायमानकरणत्वमाश्रित्याह **ज्ञातेन्द्रियेति**। चक्षुर्गतिमत् गतिशून्यसंयोगित्वादित्यनुमितेरित्यर्थः। नन्वेवमसाक्षात्कारित्वमपि तत्र न स्यादिन्द्रियसन्निकर्षान्यकरणस्य तत्र प्रयोजकत्वादित्यत आह **असाक्षात्कारित्वस्येति**। तथा च साक्षात्कारित्वप्रयोजकस्याज्ञात-करणत्वस्याभावादेव तत्र तदुपपद्यते

**अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात्। अस्ति हि तस्याधिकरणग्रहणम्, अस्ति च प्रतियोगिस्मरणम्, अस्ति च श्यामे रक्तत्वस्य योग्यस्याभावोऽनुपलब्धिश्च। अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेन्न। प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युपगमात्। ममापि प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेन्न। वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्। तथापि तत्तत्र सन्निकृष्टमिति चेत्,**

---

**आमोदः**– कारणान्तरविलम्बोऽपि नात्रेत्याह **अस्ति हीति**। ननु तवापि त्वगिन्द्रियेण कथं तत्र न रूपाभावग्रह इति शङ्कते **ऽधिकरणेति**। परिहरति **नेति**। त्वगिन्द्रियं न रूपग्राहकमतो न तेन रूपाभावो गृह्यत इत्यर्थः। **ममापीति**। प्रकृते त्वगिन्द्रियं न रूपग्राहकमतो न तदुपनीतेऽधिकरणे रूपाभावग्रह इत्यर्थः। **वायाविति**। तत्र प्रतियोगिग्राहकेणेन्द्रियेणाधिकरणानुपस्थितेरित्यर्थः। ननु प्रतियोगिग्राहकमिन्द्रियं वायुसन्निकृष्टमेतावतैव तत्र रूपाभावोऽनुपलम्भेन गृह्यत इति शङ्कते **तथापीति**। अधिकरणसन्निकर्षमात्रेणाधिकरणग्रहोपक्षीणता न सम्भवति, अतस्तदभावग्राहकमेव वक्तव्यमित्यर्थः।

---

**प्रकाशः**– ननु प्रतियोगिज्ञानस्येवाश्रयज्ञानस्याप्यभावधीहेतुत्वमिति तत्रैवेन्द्रियमन्यथासिद्धमिति विशेषणासिद्धो हेतुरित्याह **अधिकरणेति**। अधिकरणधीरिन्द्रियव्यापारो न तया तदन्यथासिद्धम्। अन्यथा सन्निकर्षोपक्षीणमिन्द्रियं घटग्राहकमपि न स्यादित्याह **अन्धस्येति**। **ममापीति**। प्रतियोगिग्राहकेन्द्रियेणाश्रयाग्रहे योग्यानुपलब्ध्या नाभावो गृह्यते। न चान्धस्य रूपग्राहकेन्द्रियेण पटादिग्रहः। अत एव चक्षुःसंयुक्ते पृथिवीपरमाणौ न जलत्वाद्यभावधीप्रसङ्ग इत्यर्थः। **वायाविति**। वायोः प्रतियोगिग्राहकचक्षुरग्राह्यत्वादित्यर्थः।

**ननु यथा तव नीरूपो वायुरिति वायुविशेष्यिका धीरानुमानिकी विशेष्ययोग्यतामाश्रित्येन्द्रियाणां प्रवृत्तेः, तथा वायौ रूपाभावविशेष्यिकापि धीर्ज्ञातानुपलब्धिलिङ्गजन्यानुमितिरेव। तथा च या धीः साक्षात्कारित्वेन त्वदभिमता, तस्यामुक्ता सामग्रीति नोक्तदोषः। न चाभावज्ञानस्य साक्षात्कारित्वेनेन्द्रियजन्यत्वं, स्मृतिवत्तस्य परोक्षत्वात्। मैवम्, घटाभावबुद्धेरपि साक्षात्कारित्वेनाभिमताया योग्यानुपलब्धिलिङ्गजन्यत्वापत्तेः। यदि च लिङ्गाज्ञानेऽपि तदनुभवादज्ञातकरणिका**

हन्तैवमनन्यत्र चरितार्थमिन्द्रियमवश्यमपेक्षणीयं रूपाभावानुभवेन।

स्यादेतत्, तथापि वस्त्वन्तरग्रह एव तस्योपयोग इति चेन्न। तस्य तं प्रत्यकारणत्वात्। कारणत्वे वा महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्याभावं न प्रतीयात्। प्रतीयाच्च पुरोविस्फारिताक्षः पृष्ठलग्नस्याश्यामत्वम्। आर्जवावस्थानमप्यधिकरणस्योपयुज्यते इति चेत्,

---

**आमोदः**– तत्रान्यथासिद्धिं प्रकारान्तरेणाशङ्कते तथापीति। तस्येति। वस्त्वन्तर–ग्रहणस्य रूपाभावोपलम्भं प्रत्यनुपयोगात् न तेनान्यथासिद्धिरित्यर्थः। ननु वस्त्वन्तरग्रहणस्यापि कारणत्वं स्यादित्यत आह करणत्व इति। न प्रतीयादिति। तत्र वस्त्वन्तरस्य त्वगिन्द्रियेण ग्रहणादिति भावः। ननु तत्रापि स्पर्शवद्द्रव्याभावं चक्षुरेवं कथं न प्रत्येति इत्यत आह महान्धकार इति। इदं चक्षुःसामर्थ्या–भावबोधनाय। अन्यथा चक्षुषैव तत्राभावप्रत्यय इत्यस्यापि वक्तुं सुकरत्वादिति भावः। स्पर्शवदिति च त्वगिन्द्रिययोग्यताघटनाय। दोषान्तरमाह प्रतीयाच्चेति। **पुरोविस्फारिताक्ष इति।** 'वस्त्वन्तरग्रहणाय पृष्ठलग्नस्ये'त्यधिकरण–ग्रहणायाभिहितम्। शङ्कते आर्जवेति।

---

**प्रकाशः**–सा, तदा वायौ रूपाभाव इति धीरपि तथा। किञ्च वस्तुतो घटवत्युपलब्धि प्राक्कालेऽनुपलब्ध्या घटस्मृतिमतः कुतो नाभावधीः? घटाभावाभावादिति चेत्। हन्तैवमभावबुद्धेरर्थजन्यत्वात् प्रत्यक्षत्वसिद्धाविन्द्रियजत्वमेव। अपि च प्रतियोगिसत्त्वविरोधिनी याऽनुपलब्धिः, सैव योग्यानुपलब्धिः। अतो जलपरमाणौ गन्धाभावो न प्रत्यक्षः, प्रत्यक्षश्च वायौ रूपाभावः, रूपानुपलब्धिज्ञापकस्याभावात्। तल्लिङ्गत्वाभावं च स्वयमे*वाचार्यो* वक्ष्यति। तथापीति। चक्षुषा वायोरग्रहेऽपि चक्षुर्वायुसन्निकृष्टमेवेति नाश्रयग्रहे तदुपक्षीणमित्यर्थः।

नन्वाश्रयेत्यन्यमात्रोपलक्षणम्, अस्ति च वायुसन्निकृष्टस्येन्द्रियस्य तद्देशवृक्षादिप्रकाशकत्वमित्यन्यथासिद्धिरेवेत्याह स्यादेतदिति। अन्धस्यापि रूपाभावप्रतीत्यापत्त्या न तावदिन्द्रियमभावज्ञाने अकारणमेव, किन्तु कारणव्यापकत्वेन परम्पराकारणं मन्तव्यम्। तथा सत्याह तस्येति। तस्य वस्त्वन्तर ग्रहणस्य, तं प्रत्यभावानुभवं प्रतीत्यर्थः। न प्रतीयादिति। त्वगिन्द्रियेण वस्त्वन्तराग्रहादित्यर्थः। ननु प्रतीयत एवाकाशमत्रापि, तस्य तन्मते प्रत्यक्षत्वादित्यत आह प्रतीयाच्चेति। आर्जवावस्थितेऽप्यन्धकारे ज्ञानाभावादालोकसन्निकर्षोऽपि

**तर्हि नयनसन्निकर्षोऽप्युपयोक्ष्यते। तदेकसहकारिप्रभासन्निकर्षापेक्षणात्। अन्यथा वातायनविवरविसारिकरपरामृष्टेऽप्यधिकरणे तदुपलम्भप्रसङ्गाच्च। तथापि योग्यतापादनोपक्षीणञ्चक्षुः। यदितरसामग्रीसाकल्ये ह्यनुपलभ्य**

---

**आमोदः**– परिहरति तर्हीति। आर्जवावस्थानस्य सन्निकर्षमात्रफलकत्वादित्यर्थः। तदेकेति। अन्यथा विस्फारिताक्षस्य वस्त्वन्तरग्रहणमपि न स्यादित्यर्थः। आर्जवावस्थाने व्यभिचारमाह वातायनेति। तदुपलम्भेति। पीते घटे श्यामाभावोपलम्भप्रसङ्गादित्यर्थः। तथापीति। यद्यपि प्रकारान्तरोपक्षीणत्वमभावग्रहे नेन्द्रियस्य, तथापि तत्तद्व्याप्येतरयावत्तदुपलम्भकसामग्रीसमवधाने सत्यनुपलम्भो योग्यानुपलम्भः, स चाभावग्रहहेतुः। अयञ्चाधिकरणे यत्र तिष्ठति तत्राभावग्रहस्तथा चाधिकरणे

---

**प्रकाशः**– हेतुरेष्टव्यः, स च चक्षुषः सहकारी नान्यस्येति सिद्धं चक्षुः करणमित्यभि–प्रेत्याह नयनेति। अथार्जवावस्थानेऽपि नालोकसन्निकर्षपेक्षा, तत्राह वातायनेति। तदुपलम्भप्रसङ्गाद्रूपाभावोपलम्भप्रसङ्गादित्यर्थः। चक्षुषा यत्किञ्चिदुपलम्भस्य तत्रापि सम्भवादिति भावः। नन्विति। तथात्वे वा सहकार्युच्छेदापत्तिः। वस्तुतः प्रतियोगिसत्त्वविरोधित्वमनुपलब्धेर्योग्यत्वं, तत्र न चक्षुरुपक्षय इति भावः।

---

**मकरन्दः**–इति भावः। ननु परोक्षत्वमसाक्षात्कारित्वमित्येकं, तच्च जातिरूपं, न तूक्तोपाधिरूपमित्यत आह **अनुभवत्वेनेति**। स्मृतेरपि परोक्षत्वादिति भावः। एतच्चोपलक्षणम्– तज्जातित्वेऽपि ज्ञायमानकरणप्रयोज्यत्वाभ्युपगमे गत्यनुमितौ तदुपपद्यत एवेत्यपि बोध्यम्। **न चेति**। इन्द्रियत्वेनेन्द्रियजन्यत्वमित्यर्थः। तथा चेन्द्रियाजन्यतया असाक्षात्कारित्वमिति भावः। अत्रासिद्धिमाह **प्रकृतेऽपीति**। तत्त्वादिन्द्रियजन्यत्वादित्यर्थः। अन्यथा यथाश्रुते विरोधापत्तेः। ननु वायोरतीन्द्रियतया त्वगिन्द्रियोपनीत इत्ययुक्तमत आह **वायोरिति**। **तथा चेति**। यद्यपि वायौ रूपाभावविशेष्यिका धीः साक्षात्कारित्वेन त्वदभिमतैव तत्र च नोक्ता सामग्री, तथापि साक्षात्कारित्वेन त्वदभिमतेत्यस्याज्ञातानुपलब्धिजन्यत्वेनोभयसिद्धेत्यर्थ इति वयम्। अन्यथा तु चिन्त्यम्। साक्षात्कारित्वेनेति *स्वमते*। **यदि चेति**। तथा च तत्र त्वदुक्तानुपलब्धिवैकल्यादनन्यगत्या इन्द्रियग्राह्य एवाभाव इति भावः। युक्त्यन्तरमाह **किञ्चेति**। **प्रत्यक्षश्चेति**। यद्यप्येवं स्वरूपसदनुपलब्धिग्राह्यत्वमात्रं सिध्यति, तथापि पूर्वोक्तयुक्त्यवष्टम्भेन प्रत्यक्षत्वमुक्तमिति ध्येयम्। **चक्षुषेति**। तथा च प्रतियोगिग्राहकेन्द्रियेणाधिकरण–

मानस्याभावो निश्चीयते। तच्च चक्षुष्यधिकरणसन्निकृष्टे सति स्यादिति चेत्, ननु परिपूर्णानि कारणान्येव साकल्यम्। तथा च किं कुत्रोपक्षीणम्? अथान्योन्यमेलकं मिथः प्रत्यासत्त्यादिशब्दवाच्यं तदुपक्षयः, न तर्हि क्वचिच्चक्षुः कारणं स्यादिति। न हि रूपाद्युपलब्धिमप्य सन्निकृष्टमेतदुपजनयति। अथाधिकरणसमवेतकिञ्चिदुपलम्भोऽपि तद्विषयाभावग्रहेऽनुपलब्धेरपेक्षणीयः। ततस्तत्रेदं चरितार्थम्। वाय्वादिषु तु रूपाद्यभावप्रतीतिरानुमानिकी।

तथा हि – अनुपलब्ध्या ह्यनुमीयते, अयं नीरूपो वायुरिति। न, असिद्धेः। न ह्युपलम्भाभावो भवतामभावोपलम्भः, उपलम्भस्या-

---

**आमोदः**– इन्द्रियसम्बन्धो योग्यताघटकत्वेनोपक्षीणो न स्वतन्त्र इत्यर्थः। **नन्विति**। एवं सतीन्द्रियसन्निकर्षोऽभावग्रहकारणमित्यायातमित्यर्थः। ननु कारणमेलकं घटयति चक्षुर्न तु कारणमपीत्याह **अथेति**। एवमन्यत्रापि रूपादिग्रहे चक्षुः कारणं न स्यात्, मेलकघटकतयैवान्यथासिद्धेः। एतदेवाह **न हीति**। ननु वातायनादावार्जवावस्थानसत्त्वेऽपि अधिकरणवृत्तिधर्मस्य चक्षुषा ग्रहणान्नाभावो गृह्यते, तस्य तत्र सहकारित्वस्य वक्तव्यत्वात्। तथा च चक्षुस्तत्रैवोपक्षीणमित्याह **अथेति**। नन्वेवं वायावपि रूपाभावो न गृह्यते, चक्षुषा तद्वृत्तिधर्मान्तरग्रहात् इत्यत आह **वाय्यादिष्विति**। तत्रानुपलब्धिः प्रमाणमेव न भवति किन्त्वनुमानमेवेत्यर्थः। **असिद्धेरिति**। ज्ञायमानानुपलम्भो लिङ्गं तज्ज्ञानं च दुरुपपादमित्यर्थः।

---

**प्रकाशः**– **न हीति**। विषयप्रत्यासत्ताविन्द्रियान्यथासिद्ध्या क्वचिदपि इन्द्रियं करणं न स्यात्। अप्रत्यासन्नस्याजनकत्वादित्यर्थः। **तद्विषयेति**। अधिकरणनिष्ठाभावग्रहे इत्यर्थः। **वाय्वादिष्विति**। चक्षुःसन्निकृष्टे वायौ चक्षुषा तद्धर्माग्रहे वायौ रूपाभावधीर्नाध्यक्षा, किन्त्वनुमितिरिति नेयं तत्र सामग्रीत्यर्थः। असिद्धिमेवोपपादयति **न हीति**। वायौ रूपाभावधीर्नानुपलब्धिलिङ्गजन्या, अनुपलब्धेरज्ञानात्, आप्तवाक्यस्यापि तद्बोधकस्याभावात्। न चोपलब्धेरनुपलब्धिरज्ञातैव तद्बाधिका। उपलब्धेरतीन्द्रियत्वेन

---

**मकरन्दः**– सन्निकर्ष एवानुपलब्धिसहकारी स च तत्रास्त्येवेति भावः। **अकारणमेव** अप्रयोजकमेवेत्यर्थः। **परम्पराकारणं** कारणकारणम्। **तथात्वे वेति**। कारणचक्रस्य साकल्योपक्षयाभ्युपगमे दण्डचक्रादेरपि तथात्वे घटाद्यहेतुत्वपत्तिरित्यर्थः। तथा च योग्यताघटकतयाऽवश्यापेक्षणीयस्यान्यत्रानुपक्षीणस्येन्द्रियस्याभावग्राहकत्वं

तीन्द्रियत्वाभ्युपगमात्। प्राकट्याभावेनानुमेय इति चेन्न। वायौ रूपवत्ताप्राकट्याभावस्याप्यसिद्धेः। रूपाभावेन समानत्वात्। व्यवहाराभावेनानुमेय इति चेन्न। कायवाग्व्यापाराभावेऽप्युपेक्षाज्ञानाभावाभ्युपगमात्। मूकस्वप्नोपपत्तेश्च। न च व्यवहाराभाव-मात्रेणानुमातुमपि शक्यते, अनैकान्तिकत्वादसिद्धेश्च। तद्विषयस्तु

आमोदः- ननु वायू रूपवत्तया नानुपलम्भविषयः, ताद्रूप्येण प्राकट्याभाववत्त्वात् इत्यनुमानमुपलम्भे स्यादित्याह प्राकट्येति। रूपवत्ताप्राकट्यस्यापि अभावो वायुधर्मिको दुर्ग्रह एव इत्याह वायाविति। प्राकट्यं ज्ञातता। रूपाभावेनेति। प्राकट्याभाववत् रूपाभाव एव कुतो न गृह्यत इत्यर्थः। ज्ञानाभावानुमाने हेत्वन्तरमाह व्यवहाराभावेनेति। अत्र व्यवहारविशेषाभिप्रायेणैकान्तिकत्वमाह कायेति। ननु व्यवहारमात्राभावो लिङ्गं स्यादत आह न चेति। स्वीयव्यवहाराभावोऽनैकान्तिकः सकलव्यवहाराभावश्चासिद्ध इत्यर्थः। ननु स्वकीयरूपवत्ताभावः स्वकीयरूपवत्ताव्यवहारा-भावेनानुमेयस्तत्र च उपेक्षणीयज्ञानेऽनैकान्तिकत्वे सत्येवाह तद्विषय इति।

प्रकाशः- योग्यानुपलम्भेनानुपलब्ध्यभावस्य ज्ञातुमशक्यत्वात्। अनुपलब्धिमात्रस्य चाभावाग्राहकत्वादित्यर्थः। उपलम्भकार्यज्ञातताया अभावेनोपलम्भाभावोऽनुमीयते इत्याह प्राकट्येति। वायौ रूपाभाववद्रूपप्राकट्याभावस्यापि दुर्ग्रहत्वं, यदि च स योग्यानुपलब्धिगम्यस्तर्हि रूपाभावोऽपि तथाभ्युपेयस्तुल्ययोगक्षेमत्वादित्याह वायाविति। रूपज्ञानाभावे लिङ्गान्तरमाह व्यवहारेति। दृश्यमानो व्यवहाराभावो लिङ्गं, व्यवहारसामान्याभावो वा?। नाद्यः, अनैकान्तिकत्वादित्याह कायेति। अन्त्येऽपि यदि स्वकीयव्यवहारमात्राभावस्तदानैकान्तिकम्। सर्वस्य तु तदभावो ग्रहीतुमशक्य इत्याह न चेति।

ननु अनुपेक्षणीयविषयकः स्वकीयरूपवत्ताज्ञानाभावस्तद्विषयकस्वकीय रूपवद्व्यवहाराभावेनानुमेय इत्यत आह तद्विषयस्त्विति।

मकरन्दः- सिद्धमिति भावः। उपलम्भेति। उपलभ्यस्य ज्ञाततायां चरमकारण-त्वात्तदभावेन तदभावोऽनुमीयते इत्यर्थः। प्राकट्याभावलिङ्गत्वभ्रमं वारयति रूपज्ञानाभाव इति। न चेत्यग्रिमग्रन्थेन गतार्थत्वात् कायेऽत्यादि व्यर्थमिति विकल्पयति दृश्यमान इति। ननु व्यवहारसामान्याभावस्य क्वाप्यसिद्धेर-नैकान्तिकत्वमसिद्धमिति विकल्प्य योजयति अन्त्येऽपीति।

**व्यवहारस्तद्विषयज्ञानजन्यो वा? तद्विषयज्ञानजनको वा? तदाश्रयधर्मजनको वा? तदभावश्च तज्ज्ञानतदाश्रयधर्माभावान्तर्भूत एवेत्यशक्यनिश्चय एव। आत्माश्रयेतरेतराश्रयचक्रकप्रवृत्तिप्रसङ्गात्। न चाज्ञातस्योपलम्भाद्यभावस्य लिङ्गता। न च प्राकट्याभावः**

**आमोदः**– तत्राद्ययोस्तद्विषयकज्ञानाभावान्तर्भूतत्वेन साध्याविशेष एव। अन्त्ये तदाश्रयो धर्मो ज्ञातता, तदभावस्तदन्तर्भूत इति दुर्ग्रह एवेत्युक्तम्। आत्माश्रयेति। व्यवहाराभावान्तर्गतस्तद्विषयकज्ञानाभावः। तेनैव तदनुमानं चेत्, तदाऽत्माश्रयः। तेन व्यवहाराभावो, व्यवहाराभावेन च तद्विषयकज्ञानाभाव एव चेदनुमेयस्तदा अन्योन्याश्रयः। ज्ञानाभावेन प्राकट्याभावः। तेन च व्यवहाराभावः, व्यवहाराभावेन च ज्ञानाभाव एव चेदनुमेयस्तदा चक्रकमित्यर्थः। न चेति। तथा चातिप्रसङ्ग इत्यर्थः। न च प्राकट्याभाव इति। तस्यैवं स्वभावकल्पने मानाभाव इति

**प्रकाशः– तदभावश्चेति।** आद्ययोर्ज्ञानाभावान्तर्भूतः, अन्त्ये तदाश्रयधर्माभावान्तर्भूत एवेत्यर्थः। **आत्माश्रयेति।** यदि तद्विषयकज्ञानाभावेनैव तद्विषयकज्ञानाभावोऽनुमेयस्तदात्माश्रयः। अथ तद्विषयकज्ञानाभावात् तद्विषयकव्यवहाराभावज्ञानं, तद्विषयकव्यवहाराभावेन च तद्विषयकज्ञानाभावज्ञानं, तदान्योन्याश्रयः। अथ तद्विषयकज्ञानाभावात् तद्विषयकव्यवहाराभावज्ञानं, तद्विषयकज्ञानाभावश्च तद्विषयकप्राकट्याभावात्। स च तद्विषयकज्ञानाभावात्, तर्हि चक्रकमित्यर्थः।

नन्वन्येषामज्ञातानामलिङ्गत्वेऽपि प्राकट्याभावः सत्तयैव ज्ञानाभावं गमयिष्यति। न चायोग्यप्रतियोगिकत्वेनायोग्योऽस्याभाव इति वाच्यम्। अनुपलब्धेरेव तद्विशेषणवत्त्वादित्यत आह **न चेति।** स हि व्याप्तिबलेन वा प्रतिपादयेल्लिङ्गाभावत्वमात्रेण वा, कार्याभावमात्रतया वा? तत्र न मध्यमान्तिमावित्याह **लिङ्गाभावस्येति।** धूमाभावस्यापि सत्तया गमकत्वापातादित्यर्थः।

**मकरन्दः– आद्ययोरिति।** यद्यपि व्यवहाराभावो न ज्ञानाभावान्तर्भूतस्तस्य ततोऽन्यत्वात्। तथापि ज्ञानाभावेनैव सोऽप्यनुमेयस्तज्ज्ञानञ्चात्माश्रयादिनाऽसम्भवीति व्यवहाराभावोऽशक्य निश्चयः। एवञ्च **तदाश्रयधर्म्माभावस्तद्विषय**प्राकट्याभावः, तस्यापि तदनुमापकत्वे चक्रकादिना सोऽशक्यनिश्चय इत्यत्र तात्पर्यम्। ज्ञानाभावान्तर्भूतो ज्ञानघटितप्रतियोगिकतया ज्ञानाभाववदतीन्द्रिय इत्यर्थः। **ज्ञानाभावश्चेति।** तज्ज्ञानमित्यर्थः। यद्वा अनुमेय इतिपूर्वोक्तमनुषञ्जनीयम्। **अनुपलब्धेरेवेति।** प्राकट्याभावस्त्वयोग्यमपि गमयिष्यतीत्यर्थः।

सत्तामात्रेणोपलम्भाभावमावेदयतीति युक्तम्, लिङ्गाभावस्य तथात्वेऽतिप्रसङ्गात्। अविनाभावबलेन तु नियमे तत्प्रतिसन्धानापत्तेः। न ह्यविनाभावः सत्तामात्रेण ज्ञानहेतुं नियमयति, धूमादावपि तथाभावप्रसङ्गादिति। ज्ञानप्रत्यक्षत्वेन त्वद्दिशा भविष्यतीति चेन्न। शब्दध्वंसादिनोक्तोत्तरत्वात्।

अपि च प्रतियोगिग्राहकेन्द्रियेणाधिकरणधर्मप्रतीतिरनुपलब्धेरङ्गमिति। तद्रहितायास्तस्याः कार्यव्यभिचाराद्व्यवस्थाप्येत, व्याप्तिबलाद्वा? न तावदुक्तरूपानुपलब्धिस्तां विना अभावप्रत्ययमजनयन्ती दृश्यते। नापि व्याप्तेः। तथा सति वायौ रूपाभावप्रत्ययस्तामाक्षिपेत्, एवम्भूतत्वात्। अनाक्षेपे वा, न तत्कारणको भेवत्, न वा भवेत्।

आमोदः- भावः। एतदेव विशदयति लिङ्गेति। स्वरूपतोलिङ्गाभावेन यत्र कुत्रचिद् वह्न्यनुमानप्रसङ्गात्। यद्वा, समव्याप्तिस्थले लिङ्गाभावोऽपि साध्याभावबोधक इति प्रकृतानुरूपमिति भावः। अविज्ञानभावोऽपि तत्र बलं(?) ज्ञात एव वाच्योऽन्यथानुमानाभासानवकाशोऽतिप्रसङ्गश्चेत्याह अविनाभावेति। ननु ज्ञानं योग्यमस्तु तदभावं योग्यानुपलम्भेन स्वरूपसत्तां गृहीत्वा तेन रूपाभावो वायावनुमीयतामित्याह ज्ञानेति। त्वद्दिशेत्यपसिद्धान्तवारणाय। शब्दध्वंसादीति। पक्षादिविकल्पग्रस्तत्वादिति भावः। अधिकरणागतधर्मान्तरग्रहे चक्षुरन्यथासिद्धमिति यदुक्तं तत्प्रकारान्तरेण दूषयति अपि चेति। तामिति। अधिकरणवृत्ति-धर्मप्रतीतिमित्यर्थः। तथा सतीति। रूपाभावप्रतीतिस्तावदुभय-सिद्धव्याप्तिश्चेत्तदाधिकरणवृत्तिधर्मान्तरप्रतीतिं सैवाक्षिपेदित्यर्थः। यदि नाक्षिपेत् तदा कारणमेव न स्यादथवा रूपाभावप्रतीतिरेव न स्यादित्याह अनाक्षेप इति।

प्रकाशः- आद्यमाशङ्क्य निराकरोति अविनाभावेति। न ह्युपलम्भाभावो भवताम-भावोपलम्भ इत्यत्र शङ्कते ज्ञानेति। प्रत्यक्षेण ज्ञानाभावं ज्ञात्वा तस्माल्लिङ्गाद्वायौ रूपाभावानुमानं स्यादित्यर्थः। मन्मते प्रतियोगिमत्तयाऽनुपलम्भाद्वायौ रूपाभावः प्रत्यक्षत्वान्नानुमेयः। शब्दाभावप्रत्यक्षत्वव्यवस्थापनया आश्रययोग्यता-यास्तद्धर्मग्रहस्य चाभावप्रत्यक्षताऽङ्गत्वनिरासादिति परिहरति शब्देति। व्याप्तिबलाद्वेति। कार्यकारणभावस्य व्याप्तिविशेषत्वेन गोवृषन्यायात् तां विना या व्याप्तिस्तद्बलादित्यर्थः। तां विनेति। अधिकरणवृत्तिधर्मप्रतीतिं विनेत्यर्थः। एवम्भूतत्वाद् व्याप्यत्वादित्यर्थः। अनाक्षेपे वेति।

ततो न भवत्येव, लिङ्गात्तदुत्पत्तिरिति चेत्, ननु लिङ्गमपि सैव, न तत्त्वान्तरम्। यथा योनिसम्बन्धोऽलिङ्गदशायामिन्द्रियसन्निकर्षमपेक्षते, लिङ्गदशायां तु तदनपेक्ष एव ब्राह्मण्यज्ञाने। तथैतत् स्यादिति चेन्न। कार्यजातिभेदात्तदुपपत्तेः। प्रकृते च तदनभ्युपगमात्। पारोक्ष्यापारोक्ष्ये विहायान्यथाप्यसौ भविष्यतीति चेन्न, अनुपलम्भात्। सम्भाव्यते तावदिति चेत्, सम्भाव्यतां, न त्वेतावताऽपि तमाश्रित्य करणनियमनिश्चयः।

---

**आमोदः**- तत इति। स्वरूपसदनुपलब्धेरित्यर्थः। लिङ्गादिति। ज्ञायमानानुपलब्धे-रित्यर्थः। सैवेति। अनुपलब्धिरेवेत्यर्थः। तद्ग्रहानुपपत्तिश्चोक्तेति भावः। यथेति। विशुद्धमानापि(?) नृयोनिजत्वं स्वरूपसत् प्रत्यक्षसहकारि ज्ञातं तु लिङ्गं यथा त्वयोच्यते तथानुपलब्धिरपि ज्ञाता चाज्ञाता भावधियं जनयेदित्यर्थः। कार्येति। दृष्टान्ते साक्षात्त्वमनुमितित्वं जातिभेदोऽस्ति। प्रकृते तु नास्तीत्यर्थः। अन्यथापीति। पारोक्ष्यमनुपलब्धं च जातिभेदः प्रकृतेऽपीति शङ्कते पारोक्ष्येति। अनुपलम्भादिति। वायौ रूपाभावग्रहे भूतले घटाद्यभावग्रहे च साक्षात्त्वस्यैवोपलम्भात्। वैजात्यस्यानुपलम्भादित्यर्थः। करणेति। एकत्र ज्ञाताऽन्यत्राज्ञाताऽनुपलब्धिः

---

**प्रकाशः**- अधिकरणवृत्तिधर्मप्रतीत्यनाक्षेपे वा नाभावधीस्तद्धेतुका तद्व्याप्या वा। तथात्वे वा हेतुं विना व्यापकं विना वा न भवेदित्यर्थः। ततः अधिकरणधर्मप्रतीतित इत्यर्थः। सैव - अनुपलब्धिरेवेत्यर्थः। यथेति। यथा विशुद्धमातापितृयोनिजत्वं लिङ्गालिङ्गदशायामिन्द्रियसम्बन्धनिरपेक्षसापेक्षं, तथानुपलब्धिरपि स्यादित्यर्थः। कार्येति। दृष्टान्तस्य तत्सापेक्षस्यापरोक्षज्ञानजनकत्वं तन्निरपेक्षस्य च परोक्षज्ञानजनकत्वम्। अत्र तु लिङ्गानुपलब्धिजन्याभावज्ञाने जातिभेदाभावाल्लिङ्गजानुमितौ व्यभिचारात्सा कारणं न स्यात्। तद्वदपरोक्ष-जात्यङ्गीकारे च तत्रेन्द्रियजन्यत्वमावश्यकमित्यर्थः। न च जातिं विनापि व्याप्त्यादिज्ञानविनाकृतानुपलब्धिजन्याभावज्ञाने सा कारणमिति वाच्यम्। अनुपलब्धिजन्यज्ञानत्वेनैव तल्लिङ्गकानुमितिवद्विवादपदेऽपि तदकारणत्वानुमानात्। इन्द्रियान्यथासिद्धेर्निरासादिति भावः। सम्भाव्यतामिति। कार्यजातिसम्भावनया तज्जातीयनियतस्य कारणत्वसम्भावनायामपि तत्रानिश्चयादित्यर्थः।

---

**मकरन्दः**- सैवेति। तच्च दूषितमिति भावः। तथेति। अनुपलब्धिरप्यधि-करणधर्म्मज्ञाननिरपेक्षसापेक्षा स्यादित्यर्थः।

**अज्ञातकरणत्वाच्च। यदज्ञायमानकरणजं ज्ञानं तत्साक्षादिन्द्रियजं, यथा रूपप्रत्यक्षम्। तथा चेह भूतले घटो नास्तीति ज्ञानमिति। यथा वा स्मरणमज्ञायमानकरणजं साक्षान्मनोजन्म। कुतस्तर्हि न साक्षात्कार्यनुभव रूपम्? संस्कारातिरिक्तसन्निकर्षाभावादिति वक्ष्यामः।**

---

**आमोदः**–करणमिति वैजात्यमन्तरेण व्यवस्थापयितुमशक्यमित्यर्थः। अभावज्ञानस्य इन्द्रियकरणकत्वे साध्ये कारिकया संगृहीतम् **अज्ञातकरणत्वादिति**। हेतुं विवृणोति **अज्ञातेति। यदज्ञायमानेति।** ज्ञायमानकरणाजन्यं यदज्ञायमानकरणजन्यं तत् साक्षादिन्द्रियजमिति व्याप्तिः। तेनाज्ञायमानमनोजन्यानुमित्यादौ न व्यभिचार इति भावः। **कुतस्तर्हीति।** साक्षान्मनोजन्यत्वे स्मृतिरपि साक्षात्कारिणी स्यादित्यर्थः। **संस्कारेति।** स्मृतौ संयुक्तसमवेतविशेषणतासंस्कारद्वारैव मनःप्रत्यासत्तिरित्यर्थः। प्रत्यभिज्ञा तु चक्षुरादिसन्निकर्षजन्या तन्नाशेऽपि संयुक्तविशेषणतायाः प्रत्यासत्तेः सत्त्वात्। असन्निकृष्टैव वा तन्नाभासते। न हि यावत्प्रत्येतव्येन्द्रियसन्निकर्षः

---

**प्रकाशः**- **यदज्ञायमानेति।** नन्विदमनुमित्यादावनैकान्तिकं तस्याज्ञायमानमनःकरणकत्वात्। न च ज्ञायमानकरणजन्यत्वं लिङ्गं, लिङ्गादेरजनकतया तज्ज्ञानस्याज्ञायमानस्यैव करणत्वात्। नापि ज्ञानासाधारणकारणकत्वाभावो लिङ्गम्, अभावज्ञाने प्रतियोग्यादिज्ञानजन्यतया तदसिद्धेः। सविकल्पकमात्रस्यैव विशेषणज्ञानजन्यत्वाच्च। मैवम्। लिङ्गादिज्ञानाजन्यानुभवत्वस्य लिङ्गत्वात्। **साक्षादिति,** मनसा व्यवहितव्यापारेण सिद्धसाधननिरासार्थम्, उपनीतभाननिरासार्थं वा। **कुत इति।** साक्षादिन्द्रियसन्निकर्षजन्यस्य प्रत्यक्षत्वव्याप्तत्वादित्यर्थः। **संस्कारेति।** संस्कारान्यः सन्निकर्षः प्रत्यक्षत्वप्रयोजकः, स्मरणे तु स एव सन्निकर्षः। प्रत्यभिज्ञाने तु तत्ता स्मृत्युपनीता भासते, न तु संस्कारस्तत्सन्निकर्षः। तज्जन्यत्वे स्मृतित्वापत्तेरित्यर्थः।

---

**मकरन्दः**- **लिङ्गादीति।** अत्रानुभवपदं व्यर्थं स्मरणस्यापि दृष्टान्तत्वेन साध्यवत्त्वाभ्युपगमात्। अत एव *परिमले* ज्ञानत्वस्येति पाठ इति वदन्ति। वस्तुतो यथाश्रुतसाध्ये मनसैव सिद्धसाधनप्रसङ्गान्मनोभिन्नेन्द्रियजत्वमिन्द्रियत्वेनेन्द्रियजत्वं वा तदर्थः। तथा च स्मरणे व्यभिचारादनुभवपदमिति। द्वितीयदृष्टान्तेऽनुशयप्रकाश एवायं *प्रकाशकृत* इति प्रतिभाति। अत एवाह **साक्षादिति।** यद्यप्यात्ममनोयोगलक्षणतद्व्यापारस्य न व्यवधानमन्यथा चक्षुरादावपि तथात्वेन बाधापत्तेः, तथापि निरुक्त एव तात्पर्य्यम्। यथाश्रुतमभिप्रेत्याह **साक्षादिति।**

**तथापि भावविषये इयं व्यवस्था, अभावज्ञानं त्वज्ञातकरणत्वेऽपि न साक्षादिन्द्रियजं भविष्यतीति चेन्न। उत्सर्गस्य बाधकाभावेन सङ्कोचानुपपत्तेः। अन्यथा सर्वव्याप्तीनां भावमात्रविषयत्वप्रसङ्गोऽविशेषात्। तथापि विपक्षे किं बाधकमिति चेत्, नन्विदमेव तावत्। अन्यदप्युच्यमानमाकर्णय। तद् यथा – अकारणककार्यप्रसङ्गो, रूपाद्युपलब्धीनामपि वानिन्द्रियकरणत्वप्रसङ्गः।**

---

**आमोदः**– कारणमिति *टीकाकृ*दभिधानादिति भावः। **इयमिति।** यदज्ञातकरणकं तत् साक्षात्कारीति व्यवस्थेत्यर्थः। **उत्सर्गस्येति।** भावाभावसाधारणव्यवस्थायां बाधकाभावादित्यर्थः। **अन्यथेति।** कार्यं सकारणकमेवेत्यादिव्याप्तीनामपि इत्यर्थः। तथा च तद्ध्वंसेऽपि कारणापेक्षा न स्यादिति भावः। **विपक्ष इति।** अभावज्ञानमज्ञातकरणजमप्यस्तु, साक्षात्कारि च न स्यादित्यत्र किं बाधकमित्यर्थः। **ननु इदमेवेति।** निर्बीजशङ्कयाप्यनौपाधिकत्वभङ्गप्रसङ्ग एवेत्यर्थः। उत्सर्गस्य बाधकं विनाप्यपवादप्रसङ्गश्चेति वार्थः। **अकारणकेति।** अज्ञातकारकं ज्ञानमिन्द्रियमन्तरेण भवत् कारणं विनैव स्यादित्यर्थः। **रूपादीति।** एवं रूपाद्युपलब्धावपीन्द्रियं करणं न स्यादित्यर्थः। तस्मादनुपलभ्यमान–करणकज्ञानत्वावच्छिन्नं प्रत्येवेन्द्रियजत्वकल्पनमावश्यकं, तथा

---

**प्रकाशः**–**तथापीति।** विपक्षे बाधकाभावादित्यर्थः। न च भावविषय–त्वमुपाधिः, अभावज्ञानेऽपि प्रतियोग्यादिभावविषयतया साधनव्यापकत्वात्। नाप्यभावाविषयत्वं, अभावस्मरणे साध्याव्यापकत्वात्। **उत्सर्गस्येति।** सामान्यत एव व्याप्तिर्भाव विषयत्वस्य गुरुत्वादित्यर्थः। तथाप्युत्सर्गस्य बाध्यत्वशङ्कानिवारकं किमित्याह, **तथापीति।** निर्बीजतादृशशङ्कायां सर्वत्र सामान्यव्याप्त्युच्छेद इत्याह **नन्विदमिति।** उत्सर्गस्य बाधकं विनेत्याद्येवेत्यर्थः। **अकारणकेति।** अज्ञातकरणकत्वावच्छिन्नज्ञानं प्रतीन्द्रियस्य करणत्वादिन्द्रियं विना तन्न स्यादित्यर्थः।

---

**मकरन्दः**– **विपक्ष इति।** तथा चाप्रयोजकत्वपरोऽयं ग्रन्थ इत्यर्थः। भावविषयत्वोपाधिपरस्तु नेत्याह **न चेति।** न त्वित्यर्थः। इत्यर्थ इति शेषः, भावाभावविषयतयेति यदि पाठः, क्व चित्तदाऽभावपदं सम्पातायातम्। **अभावस्मरण इति।** एतच्च यथाश्रुते। वस्तुत उपनीताभावप्रत्यक्षे तथात्वम्। अदृष्टादिना अर्थान्तरादाह **लिङ्गादिति।**

न ह्यनुमित्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्। अपि त्वनुपलभ्यमानकरणिकाभी रूपाद्युपलब्धिभिरेव। यद्यपि साक्षात्कारितापि तत्रैव पर्यवस्यति, तथापि प्रथमतोऽनुपलभ्यमानकरणत्वमेव प्रयोजकं चक्षुरादिकल्पने। न ह्युपलभ्यमाने करणान्तरे साक्षात्कारिणीष्वपि तासु चक्षुराद्यनुपलभ्यमानं कश्चिदकल्पयिष्यत्। अत एव साक्षात्कारित्वेऽपि स्मृतेर्मन एव करणमुपागमन् धीराः। संस्कारस्त्वर्थविशेष प्रत्यासत्तावुपयुज्यते, इन्द्रियाणां प्राप्यकारित्वव्यवस्थापनात्।

---

आमोदः- चाज्ञातानुपलब्धिजन्यमभावज्ञानमपि तथा स्यादित्याह न हीत्यादि। नन्वनुपलभ्यमानकरणत्वं नेन्द्रियकल्पने तन्त्रं, किन्तु साक्षात्कारित्वं, तच्चानुपलभ्यमानानुपलब्धिजन्याभावज्ञाने नास्तीति तत्रेन्द्रियजन्यत्वं न स्यादित्याह यद्यपीतिं। तत्रैवेति। इन्द्रियकल्पन एवेत्यर्थः। तथापीति। उपलभ्यमान-करणस्थलेऽनुपलभ्यमानस्य करणस्य केनाप्यकल्पनादनुपलभ्य-मानकरणकत्वमेवेन्द्रियकल्पकमित्यर्थः। नन्वनुपलभ्यमानकरणकत्वेन चेदिन्द्रियजन्यत्वं साक्षात्त्वं वा, तदा स्मृतिरपि तथा स्यादित्यत आह अत एवेति। इन्द्रियजन्यत्वं तु तत्रास्त्येव, न तु साक्षात्त्वं तत्तु मनसः, षोढाप्रत्यासत्तिविरहादिति भावः। ननु संस्कारस्तत्र न कुतः करणमत आह संस्कारस्त्विति। निर्व्यापारत्वेन तस्याकरणत्वादिति भावः। ननु मनोजन्यायां स्मृतौ संस्कारः किमिति कल्प्यत इत्यत आह इन्द्रियाणामिति। ननु षोढाप्रत्यासत्तिविरहेऽप्यलौकिकप्रत्यक्षत्वं स्मृतौ स्यादिति चेन्न, इन्द्रियजत्वेऽपि स्मृतौ जनकत्वावच्छेदकं नेन्द्रियत्वं, किन्तु मनस्त्वमिति न साक्षात्त्वं तत्रेति भावः।

---

प्रकाशः- न हीति। ज्ञातकरणकज्ञानेन करणतया नेन्द्रियं कल्प्यते, किन्त्वज्ञातकरणज्ञानेनेत्यर्थः। ननु नाज्ञायमानकरणकज्ञानत्वेन चक्षुरादिकल्पनम्, अपि तु साक्षात्कारिज्ञानत्वेनेत्यत आह यद्यपीति। तत्रैव इन्द्रियकरणकत्व एवेत्यर्थः। यदि च साक्षात्कारिज्ञानमेवेन्द्रियसिद्धौ मानं स्यात्, तदा स्मृतेस्तदभावान्मनःकरणत्वं नानुमीयेतेत्याह अत एवेति। न चैवं स्मृतेः साक्षात्कारित्वापत्तिः। संस्कारातिरिक्तसन्निकर्षाभावादित्युक्तत्वात्। ननु स्मृतौ संस्कार एव कुतो न करणमित्यत आह संस्कारस्त्विति। इन्द्रियाणामप्राप्तानां ज्ञानाजनकत्वात्, संस्कारस्य च निर्व्यापारत्वेनाकरणत्वादित्यर्थः।

**भावावेशाच्च चेतसः।** सर्वत्र हि बाह्यार्थानुभवे जनयितव्ये भावभूतप्रमाणाविष्टमेव चेत् उपयुज्यते, नातोऽन्यथेति व्याप्तिः। तथैव शक्तेरवधारणात्। न ह्यनुपलब्धिमात्रसहायं तदभावेऽप्यनुभव माधातुमुत्सहते। शब्दलिङ्गादेरपेक्षादर्शनात्। न च यत्र यदपेक्षं यस्य जनकत्वमुपलब्धं, तदेव तस्यैव तदनपेक्षं जनकमिति न्यायसहम्। आर्द्रेन्धनसंबन्धमन्तरेणापि दहनात् धूमसम्भावनापत्तेः। तथा च गतं कार्यकारणभावपरिग्रहव्यसनेन।२०।

---

**आमोदः-** भावावेशादिति। भावस्यासाधारणकरणस्यावेशः प्रवेश इत्यर्थः। तथा च बहिः प्रमायां मनसो भावरूपकरण-सहकारित्वनियमस्य दृष्टत्वादिन्द्रिय-लिङ्गसादृश्येष्वपि तदेव कल्पनीयमिति भावः। एवं च घटाभावो भूतल इत्यभावप्रमा मनोभिन्नभावरूपकरणजन्यप्रमात्वान्मतवत् इत्यनुमानादिन्द्रियकरणत्वसिद्धिः। तदेवाह **सर्वत्र हीति।** आविष्टं सहकृतं कथमेवमत आह **तथैवेति।** अवधारणस्थलमाह **न हीति।** तदिति। मन इत्यर्थः। ननु शाब्दज्ञानादौ मनसो भावसहकारित्वमस्तु, अभावप्रमान्तु भावनिरपेक्षमनुपलब्धिमात्रसहायं जनयतु, को दोष इत्यत आह **न चेति।** यत्र यस्य यत्सहकारि तन्निरपेक्षेणापि तज्जातीयजन्यजनकविप्लव इत्यर्थः।

---

**प्रकाशः-** भावावेशादिति। भावरूपासाधारणकारणसाहित्यनियमादित्यर्थः। तथा चाभावप्रमायां मनो भावभूतासाधारणकारणसहकृतमेव करणमिति भावः। प्रयोगश्च लिङ्गाद्यजन्या अभावप्रमा भावभूताऽसाधारणकरणसहकृतमनोजन्या अस्मदाद्यभाव-प्रमात्वात् लिङ्गादिजन्याभावप्रमावदिति। अत एव भावप्रमायां तथात्वेऽप्यभाव-प्रमायां योग्यानुपलब्धिमात्रापेक्षं मनः करणं स्याद् विपक्षे बाधकाभावादित्यपि निरस्तमित्याह न हीति। न च भावत्वमतन्त्रं गौरवात्, अन्यथा लिङ्गाद्यपि तत्र

---

**मकरन्दः-** एतच्चानुमित्याद्यंशे सिद्धसाधनवारणाय। घटादिप्रमांशे तद्वारणायाभावेति। स्मृत्यंशे बाधवारणायाह **प्रमेति।** अनुपलब्ध्या अर्थान्तरादाह **भावेति।** शरीरादिनार्थान्तरादाह **असाधारणेति।** प्रतियोगिज्ञानादिनार्थान्तरादाह **करणेति।** अनुभवकरणेत्यर्थः। अन्यथा पक्षे हेतौ च प्रमात्वपर्य्यन्तस्य वैयर्थ्यापत्तेः। यदि च कारणेति पाठः, तदापि तत्रैव तात्पर्य्यम्। ईश्वरप्रमायां व्यभिचारादाह **अस्मदादीति।** सुखाद्यभावप्रमायां व्यभिचारादाह **अभावेति।** बाह्याभावेत्यर्थः। प्रमापदं स्मृतौ व्यभिचारवारणाय अनुभवपरं, भ्रमेऽपि साध्यसत्वात्।२०।

अपि च –

**प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः।**
**अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात्।।२१।।**

**यद्धि प्रमाणं यद्भावावगाहि, तत् तदभावावगाहि, यथा लिङ्गं शब्दो**

---

**आमोदः**– तथा च बहिः प्रमात्वावच्छेदेनैव भावसापेक्षत्वमित्यर्थः। यद्यपि परामृष्यमाणलिङ्गकरणतापक्षेऽभावस्यापि सहकारित्वं, तथापि भावघटितकरणसापेक्षत्वमित्यर्थः। प्रकृते परामृष्यताघटितत्वान्न दोषः। अनुपलब्धिस्तु न परामृष्यताघटितेति न सा कारणमिति भावः।।२०।।

किञ्चाभावप्रमायामिन्द्रियाण्येव करणमित्याह **प्रतियोगिनीति।** अधिकरणग्रहे च नेन्द्रियमन्यथासिद्धमित्याह **व्यापारेति। अक्षाश्रयत्वादिति।** येन दुष्टेन यदप्रमा जन्यते तेनैवादुष्टेन तत्प्रमापीत्यन्यत्र दृष्टमिह च इन्द्रियमेव दुष्टमभावाप्रमाजनकमनुपलब्धेर्दोषाभावात्। तथा चाभावप्रमापि तेनैव जननीयेत्यर्थः। इन्द्रियाणि करणमिति शेषः। **विकल्पनादिति।** घटाभाववद् भूतलमिति विशिष्टज्ञानस्य भावविषयत्वेनानुपलब्धिजन्यत्वाभावादिन्द्रियमेव करणं वाच्यम्। तथा चाभावांशेऽपि तदेव करणमित्यर्थः।

**यद्धीति।** उपमानभिन्नमिति शेषः। तेनोपमानेन व्यभिचारः। घटाद्यभावावगाहि चेन्द्रियमित्युपनयः। तस्मात्तदभावावगाहीति निगमनं बोध्यम्।

---

**प्रकाशः**– मानं न स्यादिन्द्रियसहकृतस्यैव मनसो बाह्यानुभावकत्वादिति वाच्यम्। वायौ रूपाभावबुद्धेरनुपलब्धिकरणत्वाभावव्यवस्थापनेन गौरवस्यापि न्याय्यत्वादिति भावः।२०।

**प्रतियोगिनीति।** इन्द्रियाणीति धर्मिनिर्देशः, करणमिति साध्यं, प्रकरणात्। प्रतियोगि ग्राहकं मानं तदभावग्राहकमपि। यथा लिङ्गाद्यतीन्द्रियभावग्राहकमभावधीकरणमित्यर्थः। ननु प्रतियोगिग्राहकत्वमतन्त्रम्, अनन्यथा-सिद्धत्वस्योपाधित्वात्। इन्द्रियं त्वाश्रयग्रहे अन्यथासिद्धमित्यत आह **व्यापारेति।** अभावभ्रमस्य दुष्टकरणजन्यत्वादनुपलब्धेश्च स्वरूपतो दुष्टत्वाभावात् पित्तादिना दुष्टमिन्द्रियं तत्करणमित्याह **अक्षेति।** किञ्चाधिकरणाभावयोर्विशिष्टधीर्नेन्द्रियजन्या अभावबुद्धित्वात्, नानुपलब्धिजन्या भावबुद्धित्वात्, नोभयजन्या जातिसङ्कर प्रसङ्गादित्युभयग्राहकमिन्द्रियं मन्तव्यमित्याह **विकल्पनादिति।**

**यद्धीति।** ननु न व्यक्तिगर्भोऽयं नियमः। भावग्राहकलिङ्गादिव्यक्तेरेवा

वा। घटाद्यवगाहि चेन्द्रियमिति। अन्यथा हि शब्दादिकमपि नाभावमावेदयेत्, भाव एव सामर्थ्यावधारणात्। न चैवमेव न्याय्यम्। 'देवदत्तो गेहे नास्ती'ति शब्दात्, मया तत्र जिज्ञासमानेनापि न दृष्टो मैत्र इत्यवगतानुपलब्ध्याऽनुमानादप्यवगतेः। ग्राहयतु वाश्रयमिन्द्रियम्। तथापि न तेनेदं व्यवधीयते, व्यापारत्वात्। अन्यथा सर्वसविकल्पकानां प्रत्यक्षत्वाय दत्तो जलाञ्जलिः स्यात्।

नन्वेवं सति धूमोपलम्भोऽप्यस्य व्यापारः स्यात्। तथा च गतमनुमानेनापीति चेन्न। यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात्। न च धूमाद्युपलब्धिमन्तरेण चक्षुषो वह्निज्ञानकारणत्वं न निर्वहति, संयोगवदिति।

**आमोदः**– अन्यथा हीति। तत्रापि प्रमाणान्तरं कल्पनीयं स्यादित्यर्थः। न चैवमेवेति। शब्दादीनामभावाग्राहकत्वमेवेत्यर्थः। ग्राहयतु वेत्यनास्थायाम्, अधिकरण–साहित्येनैवाभावग्रहणान्नाधिकरणग्रहपुरःसरमेवाभावज्ञानमिति भावः। अन्यथा इन्द्रियसन्निकर्षेण निर्विकल्पकेन वा व्यवहितमिन्द्रियमपि सविकल्पकं न जनयेदित्याह अन्यथेति। धूमोपलम्भ इति। तृतीयलिङ्गपरामर्श इत्यर्थः। अस्येति। चक्षुष इत्यर्थः। लिङ्गपरामर्षो न चक्षुर्व्यापारः, तेन विनापि इन्द्रियेण लैङ्गिकज्ञानजननादित्याह ययेति। क्रियापदं व्यापारपरम्। संयोगवदिति। व्यतिरेकदृष्टान्तः। इन्द्रियसंयोगवदित्यर्थः। तन्तुसंयोगवदिति वा।

**प्रकाशः**– भावाग्राहकत्वात्। नापि तज्जातीयं तथा, उपमाने व्यभिचारात्, सुरभि चन्दनमितिवदुपनीताभावभानेन सिद्धसाधानञ्च। मैवम्। चक्षुष्ट्वादिकमभाव ग्राहकवृत्ति भावग्राहकवृत्तिजातित्वात् शब्दत्ववत्। उपमानत्वञ्च न जातिः, योगजधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्यसामान्यलक्षणप्रत्यासत्त्य जन्यजन्याभावप्रमित्यसाधारणकारणतावच्छेदकं चात्र साध्यं विवक्षितमिति नोपनीताभावभानेन सिद्धसाधनमित्याशयात्। अन्यथेति। इन्द्रियस्य निर्विकल्पके नान्यथासिद्धेरित्यर्थः। नन्वेवमिति। वह्न्यनुमितावपि धूमज्ञानं चक्षुषो व्यापार एवेति नानुमानसम्भव इत्यर्थः। क्रियया व्यापारेणेत्यर्थः। संयोगवदिति, व्यतिरेकदृष्टान्तः। यथा संयोगं व्यापारं विना चक्षुषो वह्निसाक्षात्कारकरणत्वं न निर्वहति, न तथा धूमपरामर्शं विनेत्यर्थः। न च वह्निज्ञानमात्रे तस्य व्यापारत्वाभावेऽपि वह्न्यनुमितौ व्यापारत्वं स्यादिति वाच्यम्। शाब्दलिङ्गपरामर्शादपि वह्न्यनुमानादिति भावः।

**अस्ति च भावाभावविपर्ययः। सोऽयं यस्य दोषमनुविधत्ते, तदेवात्र करणमिति न्याय्यम्। न चानुपलब्धिः स्वभावतो दुष्टा, नाप्यधिकरणग्रहणं प्रतियोगिस्मरणं वा स्वभावतो दुष्टम्। अनुत्पत्तिदशायामनुत्पत्ते रुत्पत्तिदशायाञ्च स्वार्थप्रकाशनस्वभावताया अपरावृत्तेः। असंसृष्टयोर धिकरणप्रतियोगिनोः संसृष्टतया प्रतिभानं दुष्टम्। संसृष्टयोश्चासंसृष्टतयेति चेत्, नन्वयमेव विपर्ययः। तथा च आत्माश्रयो दोषः। तस्मात्, दुष्टेन्द्रियस्य तद्विपर्ययसामर्थ्ये अदुष्टस्य तत्समीचीनज्ञानसामर्थ्यमपि। तथा च प्रयोगः – इन्द्रियमभावप्रमाकरणं, तद्विपर्ययकरणत्वात्। यत् यद्विपर्ययकरणं तत् तत्प्रमाकरणं, यथा रूपप्रमाकरणं चक्षुरिति।**

---

**आमोदः**– अक्षाश्रयत्वादिति व्याचष्टे **अस्ति चेति**। अनुपलब्धिरेव दुष्टा स्यादित्याह **न चेति**। **स्वभावत इति**। इन्द्रियगतदोषद्वारा तु दुष्टैवेत्यर्थः। एवमुत्तरत्रापि। न च चक्षुर्गतपित्तादिसहकारितैवानुपलब्धेर्दुष्टत्वमिति वाच्यम्। विवादपदमभावभ्रम इन्द्रियजन्यः लिङ्गाभासाद्यजन्यभ्रमत्वादित्यत्र तात्पर्यात्। **अनुत्पत्तीति**। अभावादेव तदा दुष्टत्वाभावादित्यर्थः। **उत्पत्तीति**। स्वार्थविषयकस्य तदानपायात् क्व दुष्टत्वमित्यर्थः। अभाववति भावविपर्ययमधिकृत्य दोषमाह **असंसृष्टयोरिति**। भाववत्यभावविपर्यये दुष्टत्वमाह **संसृष्टयोरिति**। **नन्विति**। सम्बोधने प्रतिभासनमिह विपर्ययः। न च स एव दोषः सन् आत्मानमपि जनयतीत्यर्थः। स्वाभिमतमुपसंहरति **तस्मादिति**। **अभावप्रमाकरणमिति**। विवादाध्यासिताभावप्रमाकरणमित्यर्थः। अतो न भागबाधः। **यद्यदिति** दोषस्य करणत्वाभावान्न तेन व्यभिचार इति भावः।

---

**प्रकाशः**– **न चेति**। न चानुपलब्धेर्लिङ्गाभासादिवद् दोषस्वभावत्वाभावेऽपि पित्तादिदोष साहित्यमेवेन्द्रियस्येव दुष्टत्वं स्यादिति वाच्यम्। लिङ्गाभासाद्यजन्य-भ्रमत्वेन इन्द्रियकरणकत्वानुमानादित्यर्थात्। **अनुत्पत्तीति**। अधिकरणादि-ज्ञानाभावकाले स्वाभावादेव दुष्टत्वाभावात्, तदुत्पत्तिकाले तु स्वार्थविषयत्वम-बाधितमेवेत्यर्थः। **आत्माश्रय इति**। दोषाद् भ्रमो भ्रमस्यैव दोषत्वमिति। तस्मादेव स स्यादित्यात्माश्रय इत्यर्थः। **तद्विपर्य्ययेति**। न च यद् यद्विपर्ययजनकं तत्तत्प्रमाजनकमिति पित्तादिदोषेऽनैकान्तिकम्। इन्द्रियत्वेन दोषान्यत्वेन वा हेतुविशेषणात्। किं प्रमाणयोः समाहारः, समाहृतयोर्वा प्रामाण्यम्? तत्र नाद्य इत्याह **विषयभेदे इति**। भिन्नभिन्नप्रमाजनकत्वेन तयोः पर्यवसितयोः प्रमान्तरजनकत्वानुपपत्तेरित्यर्थः।

विकल्पनात् खल्वपि। 'अघटं भूतलमि'ति हि विशिष्ट धीरवश्यमिन्द्रियकरणिका स्वीकर्तव्या, प्रमाणान्तरं वा सप्तममास्थेयम्। यथा हि, विशेष्यमात्रोपक्षीणमिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणा अनुपलब्धिरपि न करणं स्यात्। स्वस्वविषयमात्रप्रवृत्तयोः प्रमाणयोः समाहारः कारणमिति चेन्न। विषयभेदे फलवैजात्ये च तदनुपपत्तेः। न हि मृत्सु तन्तुषु च व्याप्रियमाणयोः कुलालकुविन्दयोः समाहारः स्यात्। नापि घटपटादिकारिणां चक्रवेमादीनां समाहारः क्वचिदुपयुज्यते। तत्र कर्बुरकार्याभावान्न तथा। प्रकृते तु विशिष्टप्रत्ययस्य परोक्षापरोक्षरूपस्य दर्शनात्तथेति चेन्न। विरुद्धजातिसमावेशाभावात्। भावे वा करम्बित एव कार्ये द्वयोरपि शक्तिरभ्युपगन्तव्या, दर्शनबलात्। न हि नियतविषयेण सामर्थ्येन कर्बुरकार्यसिद्धिः, अन्यत्रापि तथाप्रसङ्गात्। ननूभयोरप्युभयत्र

---

**आमोदः**– इदं खल्वपीति निपातसमुदाय उदाह्रियत इत्यर्थे। अघटमिति। भावविशेष्यका अभावविशेषणिका धीरित्यर्थः। यथेति। इन्द्रियानुपलम्भयोः प्रत्येक-मात्रसामर्थ्यादित्यर्थः। नन्विन्द्रियसंस्कारयोर्यथा प्रत्यभिज्ञानजनकत्वं तथेहेन्द्रियानुपलम्भयोः स्यादित्याह स्वस्वेति। विषयभेद इति। घटयोर्भावाभाव-मात्रविषयपर्यवसन्नत्वात् न विशिष्टावगाहनसामर्थ्यमित्यर्थः। फलभेद इति। इन्द्रियस्यापरोक्षज्ञानं फलम्, अनुपलब्धेस्तु परोक्षमित्यर्थः। प्रत्यभिज्ञाने तु संस्कारस्य करणत्वाभावादिन्द्रियस्यैव करणत्वमतः सर्वांशे साक्षात्कारित्वम्। तत्त्वांशे च इन्द्रियसम्बद्धविशेषणतैव प्रत्यासत्तिरिति भावः। विषयभेदोदाहरणमाह मृदिति। फलभेदोदाहरणमाह घटेति। तत्रेति। अकर्बुरत्वं घटपटात्मकस्य कार्यस्य, प्रकृते तु कर्बुरत्वमेवेत्याह प्रकृत इति। अत्रापि न कर्बुरत्वं बाधादित्याह विरुद्धेति। अभ्युपेत्याह भावे वेति। तथा च अभावांशेऽपि चक्षुषः सामर्थ्यं त्वयावगतमिति सिद्धं समीहितमित्यर्थः। अन्यत्रापीति। घटपटादावपीत्यर्थः। कोऽर्थ इति। केवलेनेन्द्रियेणानुपलम्भेनैव वा विशिष्टप्रत्ययसम्भवादित्यर्थः। तत्सहितस्यैवेति। अनुपलब्धिसहितस्यैवेन्द्रियस्य विशिष्टबुद्धौ सामर्थ्यादित्यर्थः।

---

**प्रकाशः**– विषयभेदफलभेदयोः क्रमेण समाहाराभावमुदाहरति न हीति। तत्रेति। इन्द्रियजन्यत्वेन साक्षात्कारित्वे सत्यनुपलब्धिकरणकत्वेन परोक्षत्वे कर्बुरत्वमित्यर्थः। अन्त्ये त्वभावज्ञानेऽपीन्द्रियस्य सामर्थ्यं सिद्धमित्याह भावे वेति। अन्यत्रापीति। घटपटसामग्रीतोऽपि करम्बितकार्यं स्यादित्यर्थः।

सामर्थ्ये कोऽर्थो मिथः सन्निधानेनेति चेन्न। तत्सहितस्यैव तस्य तत्र सामर्थ्यादिति। एतेन 'सुरभि चन्दनमि'त्यादयो व्याख्याताः। तथा चाभावविषयेऽपीन्द्रियसामर्थ्यस्य दुरपह्नवत्वादलमसद्ग्रहेणेति।२१।

स्यादेतत्, नागृहीते विशेषणे विशिष्टबुद्धिरुदेति, तत्कार्यत्वात्। न च विशिष्टसामर्थ्ये केवलविशेषणेऽपि सामर्थ्यम्, केवलसौरभेऽपि चक्षुषो वृत्तिप्रसङ्गात्। अतोऽभावविशेषणग्रहणाय मानान्तरसम्भवः। अपि च कथमनालोचितोऽर्थ इन्द्रियेण विकल्प्येत? न च मानान्तरस्याप्येषा रीतिः, अनुमानादिभिरनालोचितस्याप्यर्थस्य विकल्पनात्, अप्राप्तेश्च। न

---

आमोदः- एतेनेति। सौरभविशेषणत्वेऽपि चन्दनविशेष्यकत्वेन तदपि चाक्षुषमित्यर्थः। तथा चेति। यथा सुरभि चन्दनमित्यत्र सौरभांशेऽपि चाक्षुषत्वं तथात्राप्यभावांशेऽपि चाक्षुषत्वमित्यर्थः। ननु सौरभस्य चाक्षुषत्वेऽपि तदुपनायकं घ्राणं प्रमाणान्तरमेव तथाभावस्य विशेषणस्य ग्रहार्थमनुपलब्धिः प्रमाणं स्यादिति शङ्कते स्यादेतदिति। किञ्चेन्द्रियजे विशिष्टज्ञाने तदाभावो विशेषणं भासेत यदि पूर्वं निर्विकल्पकविषयता स्यान्न चैवमित्याह अपि चेति। न वा इन्द्रियेण सहास्य प्रत्यासत्तिः संयोगसमवायात्मिका सम्भवतीत्याह अप्राप्तिश्चेति। तदेवाह न हीति। समवायस्तु नातिरिक्तो न वा प्रत्यक्ष इति न तदर्थमपि विशेषणताकल्पनमिति भावः। किञ्चानुपलब्धिस्त्वयापि तत्राभ्युपगन्तव्येत्याह अवश्याभ्युपगन्तव्यत्वादिति।२१।

---

प्रकाशः- एतेनेति। घ्राणजसौरभज्ञानसहकृतेन चक्षुषा सुरभि चन्दनमिति ज्ञानं सौरभविशेषणकं चन्दनविशेष्यकं जन्यते, चन्दनसौरभमिति ज्ञानं चक्षुरुपनीतचन्दनविशेषणकं सौरभविशेष्यकं घ्राणेन जन्यते, यदिन्द्रियजन्यं यज्ज्ञानं तत्तदिन्द्रिययोग्यविशेष्यकमिति व्याप्तेरित्यर्थः।२१।

ननु घटाभाववद्भूतलमित्यपि धीरनुपलब्ध्युपनीताभावविशिष्टबुद्धिरिन्द्रियेण जन्यते। तथा च विशिष्टज्ञानस्यैन्द्रियकत्वेऽपि विशेषणज्ञानायानुपलब्धिर्मानान्तरं सौरभज्ञानाय घ्राणमिवेत्याह नागृहीतेति। प्रत्यक्षविशिष्टज्ञानस्य निर्विकल्पकजन्यत्वेन व्याप्तेर्नाभावे सविकल्पकैकवेद्ये तदस्तीति नाभावज्ञानं प्रत्यक्षमित्याह अपि चेति। अनुपलब्धिजन्याभावज्ञाने तु न तज्जन्यत्वमसाक्षात्कारित्वाच्छब्दादाविवेत्याह न चेति। अप्राप्तेश्चेति। इन्द्रियाणां प्राप्तार्थग्राहकत्वादित्यर्थः। न च तत एव

---

मकरन्दः- चक्षुष्ट्वादिकमित्यनुमानमन्यच्च सर्वं *प्रत्यक्षप्रकाशे* विपञ्चितम्।।२१।।

ह्यभावेनेन्द्रियस्य संयोगादिः संभवति। न च विशेषणत्वं, संबन्धान्तरपूर्वकत्वात्तस्य। अवश्याभ्युपगन्तव्यत्वाच्चानुपलब्धेः। न हि तदुपलब्धौ तस्याभावोपलम्भ इति चेत्?

उच्यते –

**अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्।**
**प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः।।२२।।**

**आमोदः–** अभावस्य निर्विकल्पकवेद्यताप्रसङ्गमपाकरोति **अवच्छेदेति**। प्रतियोग्यादिविशिष्ट एव तत्र प्रमाणप्रवृत्तेः प्राथमिकविशिष्टज्ञान सामग्रीसत्त्वान्निर्विकल्पकवेद्यतैव नेत्यर्थः। ननु प्रतियोगिस्मरणं तटस्थम् अधिकरणोपरागोऽपि नावश्यक इति केवलाभावोऽपि निर्विकल्पकेन गृह्यतां, को दोष इत्याह **अध्रौव्य** इति। तर्हि इन्द्रियेण तन्निर्विकल्पकमस्तु, को दोष इत्यर्थः।

**प्रकाशः–** संयोगादिबाधेनेहैव विशेषणताप्राप्तिः कल्प्येत्याह **न चेति**। विशेषणतायाः समवायादिसम्बन्धान्तरव्याप्तत्वात्तद्बाधे विशेषणत्वस्यापि बाधादित्यर्थः। सम्बन्धस्य सम्बन्धिभिन्नत्वनियमेन ग्राह्यस्वरूपस्यासम्बन्धत्वनिश्चयात् समवायानभ्युपगमेनान्यत्र तदकल्पनाच्च। न चाभावस्येन्द्रियग्राह्यत्वसिद्धाविहैव तत्कल्पनम्। विशेषणताकल्पने सत्यभावः प्रत्यक्षः, तत्सिद्धौ च तत्कल्पनमित्यन्योन्याश्रयादिति भावः। एवमभावबुद्धौ इन्द्रियाणां करणत्वं निरस्यानुपलब्धेः करणत्वमनन्यगतिकतयोपपादयति **अवश्येति**। शुक्तौ रजतानुलब्धेरभावादिन्द्रियसंबद्धस्यापि रजताभावस्याग्रहेणावश्यकत्वादित्यर्थः।

**विशिष्टज्ञानमात्रस्य** न विशेषणज्ञानजन्यत्वनियमः, अवच्छेदग्रहानियत-ज्ञानविषयत्वस्योपाधित्वादित्याह **अवच्छेदेति**। **ध्रौव्यं** नियमः। अभावत्वेन अभावज्ञानस्य प्रतियोग्यादिज्ञानजन्यतया विशिष्टज्ञानसामग्र्यस्त्येवेति न केवलमभावो भासते, अतो न निर्विकल्पकविषय इत्यर्थः। अथाभावज्ञानं प्रतियोग्यादिज्ञानानपेक्षं, तर्ह्यभावोऽपि निर्विकल्पकविषय एवेति सिद्धसाधनमित्याह **अध्रौव्ये** इति। अभावश्च सम्बन्धान्तरं विनापि स्वरूपेणैव विशेषणं, सम्बन्धान्तरसत्त्वे तत्रापि तत्कल्पनादनवस्थापत्तेः। यदि च नैवं, तदा *त्वन्मते*ऽपि वक्ष्यमाणो दोष इत्याह **प्राप्त्यन्तरे** इति।

स ह्यर्थविशेषणीभविष्यन् केवलोऽपि विस्फुरेत्, यस्यावच्छेदकज्ञानं न व्यञ्जकम्। स च विकल्पयितव्य आलोच्यते, यो विशेषणज्ञाननिरपेक्षेणेन्द्रियेण विज्ञाप्यते। यस्तु तत्पुरःसर एव प्रकाशते, तत्र तस्य विकल्पसामग्रीसमवधानवत एव सामर्थ्यान्नायं विधिः। स्वभावप्राप्तौ सत्यामप्यधिका प्राप्तिः प्रतिपत्तिबलेन रूपादावभ्युपगता। इह त्वनवस्थादुस्थतया न तदभ्युपगमो, न तु स्वभावप्रत्यासत्तिरेतावतैव

---

आमोदः- विषयमुखीं व्याप्तिमाह स हीति। प्रमाणमुखीं व्याप्तिमाह स चेति। व्याप्त्योस्त्ववच्छेदमात्रं फलतस्तु न कोऽपि विशेषः, निर्विकल्पक-विषयोऽप्यभावश्चाक्षुषज्ञाने विशेषणतया भासत इत्युभयत्रैव विवक्षितम्। नायं विधिरिति। निर्विकल्पकपूर्वकत्वनियम इत्यर्थः। व्याप्त्यन्तरेऽनवस्थानादित्युप-पादयति स्वभावेति। स्वभावसम्बन्धेनैवाभावो भूतलादौ विशेषणं रूपादौ च प्राप्त्यन्तरमनुभवबलादित्यर्थः। ननु इहापि वैशिष्ट्यानुभवबलात् सम्बन्धान्तरं स्यादित्यत आह इह त्विति। अत एव समवायेऽपि न समवायान्तरं तद्विरहेऽपि स्वभावविशेषणतैवेति भावः। यद्यप्येवं समवायवद् वैशिष्ट्यमप्यायाति तथाप्यन्यत्र

---

प्रकाशः- स हीति। अवच्छेदकस्य प्रतियोग्यादेर्विशेषणस्य जन्यज्ञानं विना यत्र विशिष्टज्ञानसामग्री प्रथमतो न भवति, स एवार्थोऽग्रे विशिष्टज्ञानविषयः पूर्वं निर्विकल्पकविषय इति विषयमुखी व्याप्तिरित्यर्थः। स चेति। जन्यविशेषणज्ञानासहकृतेन्द्रियजन्यज्ञानगोचरत्वं निर्विकल्पकप्रयोजकमिति प्रमाणमुखी व्याप्तिरित्यर्थः। अभावस्तु प्रतियोग्यादिविशेषणज्ञाननियतज्ञानविषयत्वेन विशिष्टज्ञानैकविषयत्वान्न तथेत्याह यस्त्विति। प्राप्त्यन्तरे इति व्याचष्टे स्वभावेति। यद्यपि घटे रूपसमवाय इति नानुभवः, तथापि रूपादेः प्रत्यक्षत्वेनेन्द्रिय-सन्निकर्षाश्रयत्वात् संयोगबाधेनेन्द्रियसम्बन्धघटकतया संयुक्तसमवायादि-कल्पनादित्यर्थः। ननु ज्ञानघटयोरिव द्रव्येण रूपादिभिः स्वरूपसम्बन्धे नार्थान्तरम्, इन्द्रियसंयुक्तविशेषणतयैव रूपादिभानोपपत्तेः। मैवम्, सम्बन्धानुमितौ हि न स्वरूपसम्बन्धो विषयः, तत्स्वरूपाणस्मनन्तत्वेन गौरवात्। किन्तु पक्षधर्मताबलात् एक एव संबन्धस्तद्विषयो लाघवादिति भावः। इह त्विति। यद्यपि सम्बन्धद्वयसिद्धौ नानवस्था, तथात्वे वा समवायोऽपि न स्यादनवस्थाऽऽपादकत्वात्, तथाप्यभावो

---

मकरन्दः- विशिष्टज्ञानमात्रस्येति। विशिष्टप्रत्यक्षमात्रस्य न विशेषणनिर्विकल्पक-जन्यत्वनियम इत्यर्थः। सम्बन्धघटकतयेति। सम्बन्धरूपतयेत्यर्थः।

विफलायते। न चेदेवं, प्रमाणान्तरेऽपि सर्वमेतद् दुर्घटं स्यात्। तथा हि सर्वमेव मानं साक्षात्परम्परया वा निर्विकल्पकविश्रान्तम्। न ह्यनुमानादिकमप्यनालोचनपूर्वकम्। ततोऽनालोचितोऽभावः कथमनुपलब्ध्यापि विकल्प्येत। न च तया तदालोचनमेव जन्यते, प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात्। शक्यते वा किमपराद्धमिन्द्रियेण? तथा, सम्बन्धान्तरगर्भत्वनियमेन विशेषणत्वस्य, मानान्तरेऽपि कः प्रतीकारः? तदभावस्य तदानीमपि समानत्वात्।

परस्य तादात्म्यमस्तीति चेत्, ननु यद्यसावस्ति, अस्त्येव, न चेन्नैव।

---

आमोदः- विस्तरेण प्रतिपादितमनुसन्धेयम्। निर्विकल्पकागोचरोऽभावोऽनुपलब्ध्याऽपि प्रमाणेन ग्रहीतुं शक्य इत्याह सर्वमेवेति। यद् यत् प्रमाणं तत् सर्वं निर्विकल्पकविषयविषयकमेवेति व्याप्तेरित्यर्थः। अनालोचनपूर्वकमिति। निर्विकल्पकविषयविषयकमित्यर्थः। यद्वा, प्रत्यक्षेण व्याप्तिग्रहे तत्रापि निर्विकल्पकापेक्षास्त्येवेत्यनुमानमपि निर्विकल्पकपूर्वकमेव परम्परयेत्यर्थः। अन्यत्रापि दुर्घटत्वं योजयति सम्बन्धान्तरेति। तवाप्यनुपलब्ध्या अभाववैशिष्ट्यप्रतीतिः स्वरूपसम्बन्धेनैव निर्वहेत्, न तु वैशिष्ट्येन, तत्रापि वैशिष्ट्यान्तराभ्युपगमेऽनवस्थानादित्यर्थः। परस्य भट्टस्य। तन्मतेऽधिकरण रूपत्वादभावस्य। अस्त्येवेति। ममापि तेनैवाभिमतनिर्वाहात् परन्तु

---

**प्रकाशः**–यद्यतिरिक्तसम्बन्धवान् स्यात् सत्तावान् स्यादित्यव्यवस्थैवानवस्थेत्यर्थः। इन्द्रियञ्च ना प्राप्तग्राहकमिति संयोगादिबाधेनेहैव तत्प्राप्तिर्विशेषणता कल्प्येति भावः। **प्रमाणान्तरेऽपीति**। अनुपलब्ध्याख्य मानान्तरस्वीकारेऽपीत्यर्थः। **निर्विकल्पकेति**। प्रमाणविषयत्वं निर्विकल्पकविषयत्वव्याप्यमित्यर्थः। **तदभावस्य** सम्बन्धान्तराभावस्य। **तदानीमपि** मानान्तरस्वीकारेऽपि। **परस्येति**। *भट्टाना*मधिकरणे विशेषणत्वं नाभावस्य, किन्तु तादात्म्यमित्यर्थः।

---

**मकरन्दः- सत्तावानिति**। न च सामान्यविशेषाभ्यां व्यभिचारः, तद्भिन्नत्वे सतीत्यापादकविशेषणात्। वस्तुतो भावः स्यादित्यर्थः, तेन नोक्तदोषः। ननु साक्षात्परम्परासाधारणमालोचनपूर्वकत्वमनुमानादिवदभावज्ञानेऽप्यस्त्येव, तद्धेतु-प्रतियोग्यादिज्ञानस्य तत्पूर्वकत्वनियमादिति परस्य नानिष्टमित्यत आह **प्रमाणविषयत्वमिति**। तथा चाप्रयोजकत्वादिना यथा नेयं व्याप्तिस्तथा प्रत्यक्षविशिष्टज्ञानस्य

न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्तन्ते इति। अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिद्ध्येत्, न तु मानान्तरत्वम्। अन्यथा भावोपलम्भेऽप्यभावानुपलब्धिरेव प्रमाणं स्यात्, नेन्द्रियम्। अभावोपलम्भे भावानुपलम्भवत् भावोपलम्भे अभावानुपलम्भस्यापि वज्रलेपायमानत्वादिति।२२।

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे।।२३।।

।। इति श्रीमदुदयानाचार्यप्रणीते न्यायकुसुमाञ्जलौ तृतीयस्तबकः।।

---

आमोदः- भावाभावयोस्तादात्म्यं नास्तीति भावः। ननूक्तं त्वयाप्यनुपलब्धिरप्यवश्याभ्युपगन्तव्या इत्यत आह **अवश्येति**। सहकारिता तस्या अस्त्येवेति भावः। ननु भावोपलब्धौ कथमभावोपलब्धिः कारणमत आह **वज्रलेपेति**। नियतपूर्ववर्तित्वादित्यर्थः।२२।

एभिः प्रत्यक्षादिभि र्यन्मुखवीक्षणैकविधुरै' र्धर्मिग्राहकमानबाधितै रात्मापि नासाद्यते स्वरूपमपि न लभ्यते, तैर्विरोधोदयस्तावद्दूरेऽधरोऽधमः, एवं प्रमाणविरोधे निरस्ते उद्भवदतिश्रद्धाः वयं तमेकं प्रपद्यामहे'। देवानाम'पीन्द्रोपेन्द्रादीनां 'देव'माराध्यं सर्वमनुविधेयं व्याप्यं यस्य असमा विलक्षणा स्वच्छन्दाऽप्रतिहता लीला इच्छा कृतिर्वा सैव उत्सवो यस्य।

इतिमहामहोपाध्यायशङ्करमिश्रकृत कुसुमाञ्जल्यामोदव्याख्यायां
तृतीयः स्तबकः

---

प्रकाशः- भावाभावयोर्विरोधान्न तादात्म्यं, तथात्वे वा संयोगादिनैवाभावग्रहः स्यादित्याशयेनाह **नन्विति**। यद्यभावोऽस्ति तदा विशेषणत्वमस्त्येवेत्यर्थः। अवश्याभ्युपगन्तव्यत्वादित्यत्राह **अवश्येति**। **अन्यथेति**। अभावज्ञाने यथा भावोपलम्भः प्रतिबन्धकस्तथा भावज्ञानोऽप्यभावोपलम्भः प्रतिबन्धकः स्यादित्यर्थः। एतच्च भावोपलब्धावभावानुपलब्धिः पृष्ठलग्नैवेति व्याचक्षाणैरस्माभिः *परिशिष्टप्रकाशे* विपञ्चितमिति तत्रैवानुसन्धेयम्।२२।

**प्रकाशः**

स्तबकार्थमुपसंहरन्नेवेश्वरनतिं निबध्नाति **प्रत्यक्षादिभिरिति।** **यस्येश्वरस्य मुखवीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैः प्रत्यक्षादिभिर्विरोधोदयोऽधरः।** अत **एव, दूरे। सर्वमनुविधेयं वश्यं यस्य। असमा** चासौ स्वच्छन्दा चेतनान्तराप्रयोज्या या लीला, सैवोत्सवो यस्य, स तथा। दुःखाभावैकनिदानत्वात्। अत एवोद्भवदतिश्रद्धा वयं, तं देवानामपि देवं स्तुत्यं प्रपद्यामहे इत्यर्थः।२३।

*इति श्रीमहामहोपाध्यायश्रीवर्धमानविरचिते न्यायकुसुमाञ्जलिप्रकाशे तृतीयः स्तबकः।।३।।*

---

**मकरन्दः**

निर्विकल्पकजन्यत्वव्याप्तिरपीति भावः। लिङ्गासङ्गतेराह **यद्यभावोऽस्तीति।** भावरूपत्वे च तस्य संयोगादिनैव ग्रहापत्तेरित्युक्तत्वादिति भावः। **तथेति।** तथा च भावज्ञानेऽप्यभावानुपलब्धिरेव प्रमाणं स्यादिति भावः।।२२-२३।।

*इति महामहोपाध्यायश्रीरुचिदत्तविरचिते कुसुमाञ्जलिमकरन्दे तृतीयः स्तबकः।।*

□□

# चतुर्थः स्तबकः

ननु सदपीश्वरज्ञानं न प्रमाणम्, तल्लक्षणायोगात्। अनधिगतार्थगन्तुस्तथाभावात्। अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात्। न च नित्यस्य सर्वविषयस्य चानधिगतार्थता, व्याघातात्। अत्रोच्यते –

**अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।**
**यथार्थानुभवो मानमनपेक्षतयेष्यते।।१।।**

**आमोदः**– सत्त्वेऽपि तस्याप्रमाणत्वादिति चतुर्थीं विप्रतिपत्तिमुपस्थाप्य निराकरोति। – **नन्विति। न प्रमाणमिति।** न प्रमेत्यर्थः। तथा चाप्रमामूलकत्वान्न वेदः प्रमाणमित्यर्थः। न वा तन्मात्रप्रमाणकं स्वर्गापूर्वाद्यपि परमार्थसदित्यायातम्। अलौकिकं परलोकसाधनं नास्तीति भावः। **अनधिगतार्थगन्तुरिति** अगृहीतग्राहिणो ज्ञानस्येत्यर्थः। **तथाभावात्** प्रमात्वात्। अनधिगतार्थत्वविशेषणव्यावृत्त्यर्थमाह **अन्यथेति। व्याघातादिति।** अनधिगतार्थत्वे नित्यत्वव्याघातादित्यर्थः।

**अव्याप्तेरिति।** धारावहनबुद्धिषु। **अधिकव्याप्तेरिति।** संशयविपर्यय-स्वप्नबुद्धिषु। **अपूर्वदृगिति।** अपूर्वार्थदर्शनमित्यर्थः। *परमतं* दूषयित्वा *स्वमते* लक्षणमाह **यथार्थ इति। यथार्थ इति** विपर्ययव्यावर्तनाय। **अनुभव इति** स्मृतिव्यावर्तनाय। विशेष्यावृत्त्यप्रकारकं ज्ञानम्, व्यधिकरण–

**प्रकाशः**– सत्त्वेऽपि तस्याप्रमाणत्वादिति चतुर्थीं विप्रतिपत्तिमुत्थापयति **नन्विति।** गन्तुर्बोधकस्य। अनधिगतार्थगन्तृत्वञ्च फलप्राक्कालिकसमानाधिकरण-ज्ञानाविषयविषयकत्वम्। *वेदो* न प्रमाणमप्रमानुभवमूलकत्वादिति भावः। तदेतल्लक्षणं यथार्थत्वेन विशेषितं, न वा? आद्ये, प्रमाभूतधारावहनबुद्धावव्यापकम्। अन्त्ये च भ्रमेऽतिव्याप्तिरित्याह **अव्याप्तेरिति। दृग्** दर्शनं, भावपरतया। अनधिगतार्थविषयकत्वं न लक्षणमित्यर्थः। *स्वमते* प्रमाणलक्षणमाह **यथार्थेति।** अत्रोक्तदोषाभावादित्यर्थः। ननु यथार्थानुभववद् यथार्थस्मृतिरपि प्रमा किं न स्यात्? यथार्थत्वस्यैव तन्त्रत्वादनुभवत्वस्य व्यर्थत्वादित्यत आह **अनपेक्षतयेति।**

**मकरन्दः**– ननु *पराधिगते*ऽर्थे *परस्य* प्रमोत्पत्तेरनधिगतार्थगन्तृत्वं तत्राव्याप्तमत आह **फलेति।** उत्तरकालीनस्वज्ञानमादायाव्याप्तेराह **कालिकान्तम्।** एतावता किमित्यत आह **वेद इति।** यद्यप्येवं *भट्टस्य* स्वतोऽसिद्धिः, तथाप्येवमप्रमानुभव-मूलको वेदः स्यात्। तथा चाप्रमाणं स्यादिति तर्कविधयैतद् द्रष्टव्यम्। **प्रमाणेति।** प्रमालक्षणमित्यर्थः।

**न ह्यधिगतेऽर्थे अधिगतिरेव नोत्पद्यते, कारणानामप्रतिबन्धात्। न चोत्पद्यमानापि प्रमातुरनपेक्षितेति न प्रमा, प्रामाण्यस्यातदधीनत्वात्। नापि पूर्वाविशिष्टतामात्रेणाप्रामाण्यम्, उत्तराविशिष्टतया पूर्वस्याप्य प्रामाण्यप्रसङ्गात्। तदनपेक्षत्वेन तु तस्य प्रामाण्ये तदुत्तरस्यापि तथैव**

---

**आमोदः**– प्रकारानवच्छिन्नविषयताप्रतियोगिज्ञानं वा, यत्र यदस्ति तत्र तस्यानुभवो वेत्यर्थः। ननु स्मृतिरपि यथार्था प्रमास्तु, किमनुभवपदेन इत्यत आह अनपेक्षतयेति। स्वजनकानुभवयाथार्थ्यानपेक्षतयेत्यर्थः। स्मृतेस्तु तत्सापेक्षत्वमिति भावः।

नन्वधिगतेऽर्थेऽधिगत्यन्तरोत्पादे पिष्टपेषणं स्यादत आह न हीति। कारणबलेन तथा सम्भवादित्यर्थः। ननु द्वितीयज्ञानकर्तव्यं प्रथमेनैव कृतमिति न तत् प्रमाणं प्रमातुरपेक्षितमित्याह न चेति। प्रामाण्यस्य स्वकारणाधीनस्य प्रमातुरपेक्षामन्तरेणाप्युपपत्तेरन्यथा शत्रुवैभवादिज्ञानमप्रमैव स्यादित्यर्थः। **पूर्वाविशिष्टेति।** पूर्वज्ञानान्यूनानतिरिक्तविषयतेत्यर्थः। ननु त्वयैवोक्त मनपेक्षतयेति। तथा च सर्वज्ञानं द्वितीयानपेक्षं प्रमाद्वितीयं तु पूर्वापेक्षमिति न प्रमेत्यत आह तदिति। उत्तरज्ञानस्यापि पूर्वज्ञानानपेक्षतया प्रामाण्यं स्यादेव।

---

**प्रकाशः**–स्मृतेर्याथार्थ्येऽपि स्वकारणीभूतान्यूनानतिरिक्तविषयकानुभवयाथार्थ्यापेक्षा, न त्वनुभवस्येत्यर्थः। **अतदधीनत्वात्**– प्रमात्रपेक्षानधीनत्वादित्यर्थः। **पूर्वाविशिष्टता** पूर्वज्ञानान्यूनानतिरिक्तविषयतेत्यर्थः। यदि चोत्तरज्ञानानपेक्षं पूर्वज्ञानमिति स्वविषये तत् प्रमाणं, तदा पूर्वज्ञानानपेक्षमुत्तरमपि तथेत्याह तदनपेक्षत्वेनेति। यद्यप्युत्तरज्ञानं विशिष्टज्ञानत्वेन विशेषणज्ञानाऽऽत्मकपूर्वज्ञानापेक्षम्। अन्यथा सामग्रीतौल्ये

---

**मकरन्दः**– नन्वेवमनुभवोऽपि प्रमा न स्यात्, तस्यापि विशेषणज्ञानादिसापेक्षत्वादित्यत आह **स्वकारणीभूतेति।** एतच्च धारावाहिके तादृशपूर्वज्ञानयाथार्थ्यापेक्षयाथार्थ्यतया उत्तरकालेऽतिव्याप्तिवारणायान्यूनानतिरिक्तविषयकत्वेन कारणत्वं विवक्षितम्। तस्य च विशेषणमात्रविषयतया तथात्वमिति नोक्तदोषः। न च तत्सापेक्षमेव याथार्थ्यं तस्येति वाच्यम्। तत्सापेक्षत्वं हि तन्नियतत्वम्, तच्च तत्रापि। स्मृतावपि तदेव तत्। लिङ्गज्ञानयाथार्थ्यापेक्षित्वमादायातिव्याप्तिवारणायान्यूनेति। वस्तुतः पूर्वोक्तातिव्याप्तिवारणार्थमपि तत्। अनतिरिक्तपदं चिन्त्यम्। अतएव *परिमले* नास्तीति। किञ्च स्मृतावपि पूर्वानुभवस्यान्यूनविषतयैव जनकत्वम्। अतिरिक्तविषयानुभवादपि तदंशे संस्कारानुद्बोधे स्मृतिदर्शनात्। एवञ्च वक्तृवाक्यार्थज्ञानयाथार्थ्यापेक्षित्वमादाय शाब्दानुभवेऽतिव्याप्तिरित्यपि चिन्त्यम्।

**स्यादविशेषात्। छिन्ने कुठारादीनामिव परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति, फलोत्पादानुत्पादाभ्यां विशेषात्। तत्फलं प्रमैव न भवति, गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेन्न। यथार्थानुभवत्वनिषेधे साध्ये बाधितत्वात्। अनधिगतार्थत्वे सिद्धसाधनात्, साध्यसमत्वाच्च। व्यवहारनिषेधे तन्निमित्तविरहौपाधिकत्वात्, बाधितत्वाच्च। न चानधिगतार्थत्वमेव तन्निमित्तम्, विपर्ययेऽपि प्रमाव्यवहारप्रसङ्गात्। नापि यथार्थत्वविशिष्टमेतदेव, धारावहनबुद्ध्यव्याप्तेः। न च**

---

**आमोदः–** *तन्मते* विशिष्टज्ञानस्याव्यवहितविशेषणज्ञानजन्यत्वाभावात्। ननु निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायातिपातात्, द्वितीयादिज्ञानं यद्युत्पद्यते, तदा प्रमाणाजन्यत्वान्न प्रमा इत्यत आह **छिन्नेति**। **गृहीतमात्रेति**। मात्रपदमनुमित्यादौ व्यभिचारवारणार्थम्। **बाधितत्वादिति**। द्वितीयादिज्ञानेऽपि यथार्थत्वस्यानुभवत्वस्य चानुभवसिद्धत्वादित्यर्थः। ननु धारावहने द्वितीयादिज्ञानं प्रमात्वेन न व्यवहर्तव्यम्, अधिगतार्थगन्तृत्वात् स्मृतिवदित्यभिमतम्। अत आह **व्यवहारेति**। निमित्तं च यथार्थानुभवत्वं तत्रास्त्येवेत्यर्थः। **बाधितत्वादिति**। तत्र प्रामाण्यव्यवहारस्य सर्वसिद्धत्वादित्यर्थः। **विपर्यय इति**। तद्वैशिष्ट्यांश इत्यर्थः। **नापीति**। यथार्थत्वे सत्यगृहीतग्राहित्वमित्यर्थः। ननु स्वोत्पत्तिक्षणगोचरत्वात् धारावाहिकबुद्धिष्वप्य गृहीतार्थगन्तृत्वमस्त्येवेत्याह **न चेति**।

---

**प्रकाशः–** धारावाहिधियां क्रमो न स्यात्। तथापि विशेषणमात्रविषयतया तथा, न विशिष्टविषयतयेति भावः। **फलोत्पादेति**। छिन्ने छिदा न सम्भवति, ज्ञाते तु ज्ञानान्तरं सम्भवत्येवेत्यर्थः। **साध्यसमत्वादिति**। प्रमात्वाभावस्य गृहीतमात्रग्राहित्वरूपतया साध्याविशेषादित्यर्थः। **व्यवहारेति**। प्रमाशब्दवाच्यत्वव्यतिरेके साध्ये तत्प्रवृत्तिनिमित्तरहितत्वमुपाधिरित्यर्थः। न चायमुपाधिः साधनाव्यापक इत्याह **न चेति**। **धारावहनेति**। इन्द्रियार्थसन्निकर्षाधारस्तृतीयक्षणस्तदिन्द्रियार्थ सन्निकर्षजज्ञानोत्पत्त्याधारः। अव्यासक्तमनसो यावत्सहकारिसाकल्ये सत्यनाद्येन्द्रियसन्निकर्षाधारक्षणत्वाद् द्वितीयक्षणवदिति धारावहनबुद्धौ मानमाहुः।

---

**मकरन्दः – अन्यथेति**। यद्यपि विशेषणज्ञानत्वेनैव हेतुत्वम् तथापि क्रमासम्भवः, तथापि फलबलेन तत्तद्विशेषणज्ञानत्वेन विशेषसामग्रीत्वमिति क्रम इति भावः। न च स्वरूपसत्क्रमिकक्षणोत्पत्तिकत्वेन क्रमः, सामग्रीतौल्ये तदेव नेत्याशयात्।

**तृतीयक्षण इति** सन्निकर्षापेक्षया। एवञ्च विनश्यदवस्थप्रथमज्ञानाधारत्वेना

तत्तत्कालकलाविशिष्टतया तत्राप्यनधिगतार्थत्वमुपपादनयीम्। क्षणोपाधीनामनाकलनात्। न चाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टता प्रकाशते इति कल्पनीयम्, स्वरूपेण तज्जननेऽनागतादि विशिष्टतानुभवविरोधात्। तज्ज्ञानेन तु तज्जनने सूर्यगत्यादीनामज्ञाने

आमोदः- अनाकलनात् अप्रत्यक्षत्वात्। ननु कालकलानाकलनेऽपि तद्वैशिष्ट्याकलनादगृहीतग्राहित्वं स्यादित्यत आह न चेति। विशेषणानां स्वसत्तामात्रेण स्वविशिष्टप्रत्ययजननेऽनागतविशेषणवैशिष्ट्यं क्वापि नानुभूयेतेत्यर्थः। ननु ज्ञानमात्रं विशेषणस्य तन्त्रं, न तु तत्स्वरूपमपीत्यदोष इत्यत आह तदिति। सूर्यगत्यादीनां क्षणावच्छेदकानां *भट्टाभिम*तविशिष्टतां दूषयति न चेति। ननु विशेषणेन विशेष्ये वैशिष्ट्यमुपकारो यदि नाधीयते, तदा

प्रकाशः– ननु सूर्यगत्यादिरूपकालावच्छेदकोपाधिविशिष्टतत्तदर्थविषयत्वेन तासामप्यधिकविषयकत्वम्। एकस्मिन् क्षणे यौगपद्यनिषेधेन तस्यावश्यकत्वादित्यत आह न चेति। घटोऽयं घटोऽयमित्यादिबुद्धिधारायां विषयभेदानुपलम्भाज्ज्ञानायौगपद्यं स्वरूपसत्क्रमिकक्षणभेदमादायेति भावः। उपाधयो यदि स्वसत्तया विशिष्टतां जनयेयुः, तदानधिगतधर्माणामविद्यमानतया तद्विशिष्टितयाऽनुभवो न स्यादित्याह **स्वरूपेणेति**।

अथ स्वासत्त्वेऽपि ज्ञानसत्तया ते तां जनयन्ति, तत्राह तज्ज्ञानेनेति। नन्वसन्तस्ते सत्तामात्रेण, नासन्तश्च स्वज्ञानसत्तया तां जनयन्तीति नोक्तदोष इत्यत आह न चैतस्यामिति। एतस्यां विशिष्टतायाम्। विशेषणविशेष्यभावानुपपत्तिं

मकरन्दः- र्थान्तरप्रसङ्गनिरासाय मध्ये उत्पत्तीति। व्यासङ्गाधारक्षणे व्यभिचारवारणाय **अव्यासक्तेति**। यद्यपि तदा ज्ञानमुत्पद्यत एव, तथापि तदिन्द्रियार्थसन्निकर्ष जज्ज्ञानाभावाद् व्यभिचारः।

यद्यप्येवं व्यासङ्गाभावस्यापि हेतुत्वाद् यावत्सहकारीत्यादिविशेषणाभावादेव न व्यभिचार इति तद्वैयर्थ्यम्। अन्यथा तदा ज्ञानोत्पत्त्यवश्यम्भावापत्तेः। तथापि तदतिरिक्तयावत्सहकारिविवक्षापक्षे तद् द्रष्टव्यम्। प्रतिबन्धकाभावकारणतावच्छेदकत्ववादिमतेनेदमि*त्यन्ये*। आलोकादिकिञ्चित्सहकारिविरहदशायां व्यभिचारादाह **यावदिति**। साकल्यसमवधान इत्यर्थः। सन्निकर्षोत्पत्त्याधारक्षणे व्यभिचारादाह **अनाद्येति** क्षणविशेषणम्। इन्द्रियपदं तदिन्द्रियपरम्, अतो नेन्द्रियान्तरसन्निकर्षमादाय व्यभिचारः। ज्ञानोत्पत्त्यनाधारेन्द्रिये व्यभिचारादाह क्षणेति।

तद्विशिष्टतानुत्पादात्। न चैतस्यां प्रमाणमस्ति। नन्वनुपकार्यानुपकारकयोर्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः? व्यवच्छित्तिप्रत्यायनेन व्यवच्छित्तौ स्वभावेन। अन्यथा तवाप्यनवस्थानादिति।

आमोदः- विशेषणविशेष्यभाव एव न स्यादित्याह नन्विति। विशेषणविशेष्यभावेऽन्यथोपपत्तिमाह **व्यवच्छित्तीति**। **व्यवच्छित्तिर**'तद्व्यावृत्तिः, विशेषणात्यन्ताभाववदन्योन्याभाव इति यावत्। विशेषणस्य चोपकारकत्वम् अतद्व्यावृत्तिबोधजनकज्ञानविषयत्वमिति भावः। ननु वैशिष्ट्याधानमन्तरेण व्यवच्छित्तिप्रत्यायनमेव कथं स्यादित्यत आह **व्यवच्छित्ताविति**। विशेषणस्वाभाव्यादेव तदुत्पत्तेरित्यर्थः। तत्रापीति। वैशिष्ट्येऽपि वैशिष्ट्यान्तराधाने-ऽनवस्थानादन्यथा वैशिष्ट्यस्यापि तदीयत्वनियमो न स्यादिति भावः। ननु भूतलादौ स्वभाववैशिष्ट्यं प्रतीयते, न तु संयोगसमवायौ तत्र सम्भवत इति चेन्न; स्वरूपसम्बन्धेनैव तद्व्यवहारोपपत्तेः। अन्यथा वैशिष्ट्यस्यैकत्वे घटवत्यपि घटाभाववैशिष्ट्याधीनो घटाभावव्यवहारोऽपि स्यात्। प्रत्यभावव्यक्ति वैशिष्ट्यभेदे च स्वरूपसम्बन्धेनैवान्यथासिद्धौ किमनन्तवैशिष्ट्यकल्पनया? न चात्र समवायप्रतिबन्दिः, वैशिष्ट्ये वैशिष्ट्याभावप्रतीतेः स्वरूपसम्बन्धेनैव त्वयाप्युपपादनात्। अन्यथाऽनवस्थाप्रसङ्गात्। वस्तुतस्तु

प्रकाशः- तत्र मानमाह नन्विति। विशेषणेन विशेष्ये विशिष्टताख्यधर्मोत्पादनं विनैव स्वसम्बन्धादेव व्यावृत्तिबुद्धिजननेन तदुपपत्तिरित्याह **व्यवच्छित्तीति**। न च विशिष्टज्ञाने सा भासते, विशेषणविशेष्यसम्बन्धातिरिक्तायास्तस्या अननुभवात्।

ननु चाभावविशिष्टबुद्धेर्विशिष्टज्ञानत्वात् संयोगादिबाधेन वैशिष्ट्यमेव सम्बन्धो विषयोऽस्तु। मैवम्, तद्धि प्रत्यभावव्यक्ति भिन्नमभिन्नं वा? आद्ये, तत्तत्स्वरूपरूपा विशेषणतैवास्तु, किमनन्तवैशिष्ट्येन। अन्त्ये घटाभाववति पटवति घटाभावधीप्रसङ्गः। घटाभावपटाभाववैशिष्ट्ययोरभेदात्। तद्वैशिष्ट्यसत्त्वेऽपि तत्र पटाभावो नास्तीति चेन्न। पटाभावाभावस्य भावत्वे पटस्य प्रतिबन्धकतया तदभावस्य हेतुत्वात्। तस्य च वैशिष्ट्यसम्बन्धेन तत्र सत्त्वात्। अभावत्वे च तस्यापि वैशिष्ट्यसंबन्धेन तत्र सत्त्वात्। न चाभावेऽपि समवाय एव सम्बन्धः,

मकरन्दः- अभावत्वे चेति। अभावात्मनः पटाभावाभावस्य वैशिष्ट्यसम्बन्धेन सत्त्वं स्यात्। वैशिष्ट्यस्यैकत्वाभ्युपगमादित्यर्थः। अधिकं *प्रत्यक्षप्रकाशे*।

ज्ञाततैवोपाधिरिति चेन्न निराकरिष्यमाणत्वात्। तत्सद्भावेऽपि वा स्मृतेरपि तथैव प्रामाण्यप्रसङ्गात्। जनकागोचरत्वेऽप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञाततावभासनात्। अस्तु वा प्रत्यक्षे यथा तथा, गृहीतविस्मृतार्थश्रुतौ कां वार्ता? अप्रमैवासाविति चेत्, गतमिदानीं

आमोदः– प्रत्यक्षमपि सखेऽन्वेष्टव्यम्। न चाभाववैशिष्ट्यानुभवादस्तु समवाय इति वाच्यम्। प्रध्वंसस्यापि समवेतकार्यत्वेन नाशे भावोन्मज्जनापत्तेरिति धारावाहिकबुद्धिषु पूर्वपूर्वज्ञानादिना ज्ञाततैवानधिगतार्था भासते इति शङ्कते ज्ञाततैवेति। स्मृतेरपीति। तत्राप्यनुभवाहितज्ञातताभावात् अनधिगतार्थगन्तृत्वं स्यादित्यर्थः। ननु जनकीभूतानुभवविषयस्यैव स्मरणे भानम्। तथा च कथं ज्ञातता स्मरणे भासतामित्यत आह जनकेति। अनुभवेन स्मरणजननेऽयं नियमो यदनुभव-विषयस्यैव स्मरणे भानं, न तु स्मृत्या स्मृतिजनन इति भावः। ननु स्मरणजनने जनकस्मरणाविषयस्य जन्यस्मृतिविषयत्वेऽतिप्रसङ्ग इत्याह अस्तु वेति। का वार्तेति। सा प्रमाऽप्रमेवेत्यर्थः। किञ्चित्समयागृहीतग्राहित्वेन प्रमा चेत्तदा व्याप्तिरिति। सर्वपूर्वकालागृहीतग्राहित्वमेव प्रामाण्यं तस्याञ्च तदभावात् अस्या अपि अप्रमात्वमेवेत्याह अप्रमैवेति। गतमिति। *वेदार्थ*स्यापि कस्मिंश्चज्जन्मनि

प्रकाशः– तत्साधकविशिष्टबुद्धेरविशेषादिति वाच्यम्। समवेतकार्यत्वाद् ध्वंसनाशे पटाद्युन्मज्जनप्रसङ्गात्। न च तत्र भावत्वं तन्त्रं, गौरवाद्वैपरीत्यापत्तेश्चेति सङ्क्षेपः।

ज्ञाततैवेति। पूर्वपूर्वज्ञानाहितज्ञातताविशिष्टमुत्तरोत्तरज्ञानविषय इत्यनधिगतार्थतैव धारावहनबुद्धीनामित्यर्थः। तत्सद्भावेऽपीति। स्मृति-व्यावृत्त्यर्थमनधिगतेति व्यर्थविशेषणम्। तेनापि च न तद्व्यवच्छेदः। तत्रापि कारणीभूतानुभवजनितज्ञाततासत्त्वेनानधिगतार्थतानपायादित्यर्थः।

अथ स्मृतेर्जनकज्ञानविषयमात्रविषयत्वात् सा स्मृतौ न भासते, तथापि पूर्वपूर्वस्मृतिजनितज्ञातताविशिष्टस्योत्तरोत्तरस्मृतौ भानादनधिगतार्थत्वसत्त्वादित्याह जनकेति। न च स्मृतता नोत्तरोत्तरस्मृतिविषयोऽनुभवाविषयत्वादिति वाच्यम्। धारावहनबुद्धावप्युत्तरोत्तरबुद्धेः पूर्वपूर्वज्ञानाहितज्ञाततासमानकालोत्पत्तिकत्वेन तत्रापि तद्विषयत्वाभावापातादिति भावः। अन्यत्र तत्सन्देहेऽप्युभयसिद्धप्रामाण्ये वेदे अधिगतार्थगोचरे प्रामाण्यासम्भव इति दुरुत्तरं समाधानमित्याह अस्तु वेति।

मकरन्दः- तथापीति। यद्यपि जनकागोचरत्वमत्रापि तुल्यं, तथाप्यनुपदमेवाशङ्क्य परिहरिष्यतीति ध्येयम्।

वेदप्रामाण्यप्रत्याशया। न ह्यनादौ संसारे 'स्वर्गकामो यजेते'ति वाक्यार्थः केनचिन्नावगतः। सन्देहेऽपि प्रामाण्यसन्देहात्। न च तत्रापि कालकलाविशेषाः परिस्फुरन्ति। न चैकजन्मावच्छेदपरिभाषयेदं लक्षणम्। तत्राप्यनुभूतविस्मृतवेदार्थं प्रति अप्रामाण्यप्रसङ्गात्। कथं तर्हि स्मृतेर्व्यवच्छेदः? अननुभवत्वेनैव। यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्यन्ति। 'तत्त्वज्ञानात्' इति सूत्रणात्। 'अव्यभिचारि ज्ञानमि'ति च।

ननु स्मृतिः प्रमैव किं न स्यात्, यथार्थज्ञानत्वात्, प्रत्यक्षाद्यनुभूतिवदिति चेन्न। सिद्धे व्यवहारे निमित्तानुसरणात्। न च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्, अव्यवस्था लोकव्यवहारविप्लवप्रसङ्गात्।

---

आमोदः- पुरुषेणानुभवात्। न च तत्रापीति। कलकलानामपदार्थत्वेन वाक्यार्थाविषयत्वादित्यर्थः। ननु तज्जन्मनि अगृहीतग्राहित्वं लक्षणं विवक्षितमत आह न चेति। अनभूतेति। तज्जन्मन्येवानुभूतः अप्यविस्मृतो येन पुंसा यस्य वेदस्यार्थस्तं प्रति तस्य वेदस्याप्रामाण्यप्रसङ्गादित्यर्थः। कथमिति। यद्यनधिगतार्थत्वं न विशेषणमित्यर्थः। अनुभत्वेनेति। तद्व्यवच्छेदार्थमेव लक्षणेऽनुभवत्व प्रक्षेपादित्यर्थः। अननुभवत्वेनेत्यपि क्वचित् पाठः। स्मृतेरननुभवत्वादनु-भवत्वविशेषणेनैव वारणादित्यर्थः। प्रामाणिका'इति। प्रामाणिकानाम् एतादृशं दर्शनमित्यर्थः। तत्त्वज्ञानादिति। तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या शास्त्रस्याभिधानात्। शास्त्रञ्च वाक्यतयाऽनुभवमेव जनयतीति भावः। अव्यभिचारि ज्ञानमिति। 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति। (न्यायसूत्र० १।१।४) प्रत्यक्षलक्षणे ज्ञानपदस्यानुभवपरत्वस्यावश्यकत्वात्, स्मृतेः प्रत्यक्षभिन्नत्वादिति भावः। नन्विति। तथा च किमनुभवोपादानेन इत्यर्थः। स्मृतौ प्रमाव्यवहाराभावात् तत्करणे संस्कारे प्रमाणव्यवहाराभावाच्च न तथेत्याह सिद्ध इति। अव्यवस्थयेति। अनुभवपदवद् यथार्थपदमपि तर्हि त्यज्यताम्। अस्तु ज्ञानत्वमेव प्रमात्वम्, एवं सति भ्रमेऽपि

---

प्रकाशः- तत्रापीति। एकजन्मनीत्यर्थः। अननुभवत्वेनैवेति। इममर्थ-मनुभवामीममर्थं स्मरामीत्यनुभवसाक्षिकावेवानुभवत्वस्मृतित्वे जातिविशेषावित्यर्थः। तत्त्वज्ञानादिति। ज्ञानपदमनुभवपरम्। एवमग्रेऽपि। नन्विति। यथार्थज्ञानत्वमेव प्रमापदप्रवृत्तिनिमित्तं लाघवाद्, न तु तद्विशेषोऽनुभवत्वमपीत्यर्थः। सिद्ध इति। स्मृतेः प्रमात्वं यदि यथार्थज्ञानत्वमेव साध्यं, तदा सिद्धसाधनं साध्याविशेषश्च स्यादिति प्रमापदवाच्यत्वं साध्यम्, तत्र च तन्निमित्तत्वमुपाधिरित्यर्थः।

**न च स्मृतिहेतौ प्रमाणाभियुक्तानां महर्षीणां प्रमाणव्यवहारोऽस्ति, पृथगनुपदेशात्। उक्तेष्वन्तर्भावादनुपदेश इति चेन्न। प्रत्यक्षस्या साक्षात्कारिफलत्वानुपपत्तेः, लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्य साधनत्वादिति।**

**एवं व्यवस्थिते तर्क्यतेऽपि - यदियमनुभवैकविषया सती तन्मुखनिरीक्षणेन तद्यथार्थत्वायथार्थत्वे अनुविधीयमाना तत्प्रामाण्यमव्यवस्थाप्य न यथार्थतया व्यवहर्तुं शक्यते इति। व्यवहारेऽपि पूर्वानुभव एव प्रमितिरनपेक्षत्वात्, न तु स्मृतिः, नित्यं तदपेक्षणात्। असमीचीने ह्यनुभवे स्मृतिरपि तथैव।**

---

आमोदः- किन्न स्यात् प्रामाण्यमित्यर्थः। **पृथगिति।** प्रत्यक्षादिभ्य इत्यर्थः। **उक्तेष्विति।** प्रत्यक्षादिष्वित्यर्थः। **प्रत्यक्षस्येति।** स्मृतेरसाक्षात्कारित्वस्य सर्वमतसिद्धत्वादित्यर्थः। **लिङ्गशब्दादेरिति।** ज्ञांयमानलिङ्गादेः स्मृतौ व्यभिचारादिति भावः। अनपेक्षतयेति विवृणोति **तर्क्यतेऽपीति।** **अनुविधीयमानेति** कर्तरि प्रत्ययः। **व्यवहारेऽपीति।** यथार्थव्यवहारेऽपीत्यर्थः। **असमीचीन'इति।** रज्जुं भुजङ्गतयाऽनुभूतपलायितस्य तथैव स्मृतिदर्शनादित्यर्थः।

---

**प्रकाशः**- ननु यथार्थज्ञानत्वमेव तन्निमित्तमित्युक्तमित्यत आह न चेति। **न च स्मृतीति।** यदि स्मृतौ प्रमापदस्येश्वरसङ्केतः स्यात्, तदा प्रमाणाभियुक्तानां संस्कारे प्रमाकरणत्वव्यवहारः स्यात्, न चैवमित्यर्थः। **उक्तेषु** प्रत्यक्षादिष्वित्यर्थः।

अनपेक्षतयेति विवृणोति – **तर्क्यतेऽपीति।** **अनुभवैकविषया,** अनुभवमात्रविषयेत्यर्थः। तेनास्या विषयान्तरेऽपि न प्रमात्वमिति भावः। **तद्यथार्थत्वेति।** स्वजनकानुभवयथार्थत्वायथार्थत्वव्याप्तयथार्थत्वायथार्थत्वेत्यर्थः। **तत्प्रामाण्यमिति।** स्वजनकानुभवप्रामाण्यमित्यर्थः। **अव्यवस्थाप्य** अनवधार्य। यद्यपि स्वजनकानुभवप्रामाण्यमनिश्चित्यापि प्रवृत्तिसंवादादिना अनुभवस्येव स्मृतेरपि प्रामाण्यग्रहः सम्भवत्येव, तथापि यदि स्मृतिः प्रमा स्यात्, तदा स्वान्यूनानतिरिक्त विषयकस्वजनकानुभवप्रामाण्यव्याप्तप्रामाण्या न स्यात्। व्यतिरेके इच्छादिर्दृष्टान्तः। धारावहनबुद्धिषु पूर्वपूर्वबुद्धेर्विशेषणमात्रविषयतयोत्तरोत्तरबुद्धिष्वपेक्षा, स्मृतौ त्वन्यूनानतिरिक्तविषयतयेति न तत्र व्यभिचारः। धारावहनबुद्ध्यन्यत्वेन वा विशेषणम्। **शक्यते** इतीत्यस्यानन्तरं, न स्मृतिः प्रमेति शेषः। तदपेक्षणमेवाह **असमीचीने हीति।**

**नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात्। न, विषयभेदात्। आगमस्तर्हि न प्रमाणं, तद्विषयमानान्तरानुविधानात्। न, प्रमातृभेदात्। धारावाहिकबुद्धयस्तर्हि न प्रमाणम्, आद्यप्रमाणानुविधानात्। न, कारणविशुद्धिमात्रापेक्षया प्रथमवदुत्तरासामपि पूर्वमुखनिरीक्षणाभावात्। कारणबलायातं काकतालीयं पौर्वापर्यमिति।**

**आमोदः**- अनुमानेऽप्यतादृशं सापेक्षत्वमस्तीत्यप्रामाण्यापत्तिरित्याह **नन्विति। विषयेति।** जनकज्ञानस्य लिङ्गविषयत्वात् जन्यस्य च लैङ्गिकविषयत्वादित्यर्थः। **आगम इति।** शब्दजन्यज्ञानस्य मूलभूतकर्तृज्ञानसमानविषयत्वादित्यर्थः। परिहरति **प्रमात्रिति।** स्मृतौ त्वेकप्रमातृकत्वमिति भावः। ननु विषयप्रमातृभेदाद्धारावाहिधियः पूर्वव्यपेक्षाः प्रमाणं स्युरित्यत आह **धारेति।** न चात्र मानाभावः। अयं वक्तृज्ञाना-न्यूनानतिरिक्त विषयकतद्भिन्नतत्समानकालीनतादृशज्ञानवान्, अनीश्वरात्मत्वात्, मैत्रवदिति धारावहनबुद्धौ मानात्। यद्वेन्द्रियार्थसन्निकर्षाधार-स्तृतीयक्षणः तदिन्द्रियार्थ सन्निकर्षजज्ञानोत्पत्त्याधारः, अव्यासक्तमनसो यावत्सहकारिसाकल्ये सत्यनाद्येन्द्रियसन्निकर्षाधारत्वात्, द्वितीयक्षणवदित्यनुमानात्। तत्रापि स्मृतिवत् सापेक्षत्वात्। **प्रमातृभेदादिति** वक्तुरेव तादृशं ज्ञानं न तु श्रोतुः। तथा च श्रोतारं प्रति तत्प्रमाणमेवेति भावः। **कारणेति।** विशेषणांशविषयत्वमत्र कारणविशुद्धिः। विशेष्यांशविषयत्वं तु नोत्तरोत्तरज्ञाने प्रयोजकं, तस्य स्वकारणबलायातत्वात्।

**प्रकाशः**- **मूलेति।** कारणव्याप्त्यादिप्रत्यक्षप्रामाण्यव्याप्यप्रामाण्यादित्यर्थः। **विषयेति।** व्याप्त्यादिप्रत्यक्षस्य लिङ्गलिङ्गिविषयत्वादनुमितौ च पक्षतावच्छेदक-धर्मभाननैयत्येन तस्याधिकस्य भानादित्यर्थः।

तथापि श्रोतुर्वाक्यार्थप्रमाया वाक्यप्रयोगमूलतदर्थविषयकज्ञान प्रामाण्यापेक्षित्वान्न प्रमात्वं स्यादित्याह **आगम इति।** तथात्वेऽपि वक्तृश्रोतृरूपप्रमातृभेदोऽस्ति, स्मृतौ त्वेकस्यैव तथात्वमित्याह **प्रमात्रिति।**

तर्हि विषयप्रमात्रोरभेदाद्धारावहनबुद्धयः पूर्वबुद्ध्यपेक्षाः प्रमा न स्युरित्याह **धारेति।** यद्यपि बुद्धिक्रमान्यथानुपपत्त्या पूर्वबुद्धेर्विशेषणज्ञानत्वेनोत्तरबुद्धिकारणत्वं, तथापि स्मृतिवदन्यूनविषयतया न कारणत्वं किन्तु विशेषणमात्रविषयत्वेनेत्युक्तम्। अन्यूनानतिरिक्तविषयत्वन्तु काकतालीयमित्याह **कारणेति।**

**मकरन्दः**-तदा स्वान्यूनानतिरिक्तेति। एतच्च प्रागेव विवृतप्रायम्। नन्वापादकस्य प्रामाण्यस्य वैकल्यादिच्छादिकं नान्वयदृष्टान्तः, व्यतिरेकदृष्टान्तोऽपि न स्यात्। तादृशानुभवव्याप्तप्रामाण्यवत्त्वस्यापाद्यव्यतिरेकस्य व्याप्यत्वाभिमतवैकल्यादिति

**यदि हि स्मृतिर्न प्रमितिः, पूर्वानुभवे किं प्रमाणम्? स्मृत्यन्यथाऽनुपपत्तिरिति चेन्न। तया कारणमात्रसिद्धेः, न तु तेनानुभवेनैव भवितव्यमिति नियामकमस्ति। अननुभूतेऽपि तर्हि स्मरणं स्यादिति चेत्, किं न स्यात्? न ह्यत्र प्रमाणमस्ति। पूर्वानुभवाकारोल्लेखः स्मृतेर्दृश्यते, सोऽन्यथा न स्यादिति चेत्, तत्किं *बौद्धवद्विषयाकारान्यथानुपपत्त्या* विषय सिद्धिस्त्वयापीष्यते, तथाभूतं ज्ञानमेव वा तत्सिद्धिः? आद्ये,**

---

**आमोदः**– एतदेवाह **कारणवशादिति। यदि हीति।** पूर्वानुभवः स्मृतिरूपप्रमाविषयतयैव सिद्ध्यति, पूर्वानुभववैशिष्ट्यं हि तत्ता, तथा च स्मृतेरप्रामाण्ये स कथं सिद्ध्येदित्यर्थः। न हि तत्तायां पूर्वानुभववैशिष्ट्यरूपायां न प्रमा इति भावः। **स्मृतीति।** पूर्वानुभवं विना स्मृतिरेव नोत्पद्यत इत्यर्थापत्तिरेव तत्र मानमित्यर्थः। अर्थापत्तावन्यथोपपत्तिमाह **तवेति। किन्न स्यादिति।** स्मृतानुभवजन्यत्वस्यासिद्धेरित्यर्थः। एतदेवाह **न ह्यस्तीति। पूर्वानुभवोल्लेखस्तत्तोल्लेख** इत्यर्थः। **तत् किमिति।** यथा *सौत्रान्तिकैर्नीलाद्याकारकादाचित्कत्वान्यथानुपपत्त्यानुभवस्य* नीलादेः सिद्धिरिष्यते, तथा *नैयायिकेनापीष्यते।* **तथाभूतं ज्ञानमिति।**

---

**प्रकाशः**– नन्वतीतानुभववैशिष्ट्यरूपा तत्ता न मानसप्रत्यक्षवेद्या, अनुभवसत्त्वकाले तदतीतत्वाभावात्। तदत्ययकाले च विशेष्यासत्त्वादिति स्मृतिरेव तत्र मानमित्यगृहीतविषयतया सा प्रमा स्यादित्याह **यदीत्यादिना, न तर्हीत्यन्तेन। तत्किमिति।** *सौत्रान्तिकानां* घटाद्याकारज्ञानकादाचित्कत्वान्यथानुपपत्त्या घटादिकल्पनवत् तत्ताकारान्यथानुपपत्त्या पूर्वानुभवकल्पनमित्यर्थः। **तथाभूतमिति।** *सौत्रान्तिकमते* यथानैकान्तिकत्वं, तथा *त्वन्मतेऽपीत्यर्थः।*

---

**मकरन्दः**– **चेत्, मैवम्।** आपाद्ये प्रामाण्यपदद्वयस्य यथार्थत्वमात्रपरत्वात्, आपादके च यथार्थानुभवपरत्वात्। एवञ्चेच्छादेरापाद्यव्यतिरेकस्य व्याप्यस्यापाद्यव्यतिरेकस्य व्यापकस्य च सत्त्वाद्व्यतिरेकदृष्टान्तत्वमिति। **विशेष्यस्येति।** अतीतादि-विशेष्यकस्यानुभवस्येत्यर्थः। **अतीतानुभववैशिष्ट्येति।** यद्यप्येवं पौर्वापर्य्यमात्रं सिध्यति, न तु कार्य्यकारणभावः। अन्यथा योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यादावपि तथा स्यात्। तथाप्यननुभूते स्मरणाभावादन्वयव्यतिरेकादिसहकृतमनसा तद्ग्रह इति भावः।

**तद्वदेवानैकान्तिकत्वम्। न हि यदाकारं ज्ञानं, तत्पूर्वकत्वं तस्येति नियमः, अनागतज्ञाने विभ्रमे च व्यभिचारात्। द्वितीये तु, स्मृतिप्रामाण्यमवर्जनीयम्।**

**मा भूत्पूर्वानुभवसिद्धिः, किं नश्छिन्नमिति चेत्, न तर्हि स्मृत्यनुभवयोः कार्यकारणभावसिद्धिरिति। न, तदप्रामाण्येऽपि पूर्वापरावस्था वदात्मप्रत्यभिज्ञानप्रामाण्यादेव तदुपपत्तेः। 'योऽहमन्वभवममुमर्थं सोऽहं स्मरामी'ति मानसप्रत्यक्षमस्तीति।**

---

**आमोदः**– तद्विषयकज्ञानमित्यर्थः। आद्ये **तद्वदेवेति**। यथा *सौत्रान्तिक*मतेऽनैकान्तिकत्वं, तथा *तवापि* मते तत् प्रसज्यत इत्यर्थः। अनैकान्तिकत्वमेवाह **न हीति**। अतीतानागताकारं ज्ञानं न तु तत्पूर्वकमित्याकारककादाचित्कत्वं विषयसत्त्वेऽनैकान्तिकमित्यर्थः। **विभ्रम इति**। रजताकारस्य रजताजन्यत्वाद् व्यभिचार इत्यर्थः। **स्मृतिप्रामाण्यमिति**। तत्तांशः स्मृतिविषयतयैव प्रमेय इति स्मृतिरेव तत्र प्रमेत्यर्थः। ननु पूर्वानुभववैशिष्ट्यं न तत्ता, किन्त्वतीतधर्मवैशिष्ट्यम्। तथा च तत्तांशे न स्मृतिः प्रमा स्यादित्याह **मा भूदिति**। एवं सति अनुभवः स्मृतिजनक इत्यत्र प्रमाणमेव सिद्धान्तिनो न किमपि स्यादिति स्मृतिप्रामाण्यवादी पूर्वपक्षमाह **न तर्हीति**। सिद्धान्ती सिद्धान्तमुपक्रमते **नेति**। प्रत्यभिज्ञानस्वरूपमाह **योऽहमिति**। तथा च पूर्वानुभववैशिष्ट्यमेव तत्ता प्रत्यभिज्ञान एव भासते

---

**प्रकाशः**– तदेवाह **न हीति**। आकारेण ज्ञानस्यार्थजन्यत्वमनुमेयमर्थसत्त्वमात्रं वा? आद्ये अनागतार्थस्य वर्त्तमानज्ञानाकारणत्वादनैकान्तिकम्। अन्त्ये अनागतस्य कादाचित्कत्वेऽपि शुक्तौ सर्वदा रजतत्वाकारत्वासत्त्वाद्रजतत्वाकार भ्रमेऽनैकान्तिकमित्यर्थः। **द्वितीये त्विति**। तत्ताविषया स्मृतिरेव तत्तासिद्धिरिति सा प्रमा स्यादेवेत्यर्थः। तथा च स्मृत्यनुभवयोः कार्यकारणभावान्यथानुपपत्तेः स्मृतिः प्रमेति भावः।

अतीतानुभवविशिष्टे स्मृतिवैशिष्ट्यप्रत्यभिज्ञानं स्मृत्यनुभवयोः कार्यकारणभावग्राहकमित्यन्यथोपपत्त्या न स्मृतिः प्रमेत्याह **तदप्रामाण्येऽपीति**। प्रत्यभिज्ञानस्वरूपमाह **योऽहमिति**।

ननु केयं तत्ता? न तावदतीतानुभवविषयत्वम्। अतीतानुभवविषयत्वस्यानु भवाविषयतया स्मृत्या तदनुल्लेखापत्तेः। न च तस्यानुभवाविषयत्वेऽपि यदा ज्ञानान्तरेण ग्रहणं तदा स घट इति स्मृतिः, अन्यथा प्रमुष्टतत्तांशा घट इतीति वाच्यम्। अतीतानुभवविषयत्वस्यानुमितौ भानेऽपि स इति बुद्धेरभावात्।

न च गृहीतग्राहित्वमीश्वरज्ञानस्य, तदीयज्ञानान्तरागोचरत्वाद् विश्वस्य। न च तदेव ज्ञानं कालभेदेनाप्रमाणम्, अनपेक्षत्वस्यापरावृत्तेः। तथापि वा अप्रामाण्येऽतिप्रसङ्गादिति।

---

**आमोदः**– तत्प्रामाण्यादेवानुभवसिद्धिर्न तदर्थं स्मृतिप्रामाण्यापेक्षेति। अनुभवानन्तर-मनुव्यवसायेन संस्कारजननात्तेन च स्मृतिजननम्, ततः प्रत्यभिज्ञानं, तदुक्तं *तृतीयाध्याये टीकाकृता* 'प्रागनुभवः, पुनरनुभवोऽथ संस्कारोऽथ स्मृतिरथ प्रत्यभिज्ञानमिति।' वस्तुतस्तु स्मृतेः पारिभाषिकाप्रामाण्यविरहेऽपि तद्वति तत्प्रकारकत्वरूपं वस्तुसाधकं प्रमात्वमस्त्येवेति नोक्तदोषः। ईश्वरज्ञानेऽगृहीतग्राहित्वमुपपादयति न चेति। गृहीतत्वं चातीतग्रहणविषयत्वमेव वाच्यं प्रत्ययानुरोधात्। अतीतत्वं च ईश्वरज्ञाने नास्तीत्यर्थः।

---

**प्रकाशः**– नाप्यतीतधर्मवैशिष्ट्यम्। यदि हि यो वस्तुतोऽतीतो धर्मस्तद्वैशिष्ट्यं तत्ता, तदानुभवेऽपि तद्विषयत्वात्तत्तोल्लेखापत्तिः। अतीतधर्मविशिष्टः स इति सहप्रयोगानुपपत्तिश्च। नाप्यतीतत्वेन भासते यो धर्मस्तद्वैशिष्ट्यम्। भासमानधर्मस्यातीतत्वेनानुभवाविषयत्वात्, प्रत्युत वर्त्तमानत्वेनानुभवात्, स्मृतौ तत्तोल्लेखानापत्तेः। नाप्यतीतसमयसम्बन्धः। अनागतगोचरस्मृति प्रत्यभिज्ञयोस्तत्तोल्लेखानापत्तेः। इदन्तापि न तद्वृत्तिगुणादि। गुणादावभावात्। नापि प्रत्यक्षज्ञानगोचरत्वम्। अचाक्षुषत्वापत्तेः।

उच्यते। अनुभवे य एव धर्मः कालो वा वर्त्तमानत्वेन भासते स एव स्मृतावपि। तयोरेकविषयत्वेऽपि स्मृतावेव तच्छब्दोल्लेखः, संस्कारजज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वात्, प्रत्यभिज्ञाने तथा कल्पनात्। तत्रैव च प्रत्यक्षानुभवेनेदं-शब्दप्रयोगः। विषयकृतश्च स्मृत्यनुभवयोर्विशेषो नास्त्येव। अत एवायं घट इत्यनुभवादयं घट इति न स्मृतिः। स घट इति स्मृतेश्च स घट इति नानुभवः। सह प्रयोगस्तु धर्मविशेषमादायेत्य*स्मत्पितृचरणाः*।

परलक्षणमभ्युपगम्य अनधिगतार्थगन्तृत्वमीश्वरज्ञानेऽप्यस्तीत्याह न चेति। ईश्वरस्य ज्ञानान्तराभावान्न तज्ज्ञानं गृहीतग्राहीत्यर्थः। पुरुषान्तरज्ञानान्तरगोचरत्वेन

---

**मकरन्दः**– तद्विषयेति। न चोत्तरकालत्वं व्यवहितकालत्वं विवक्षितमिति वाच्यम्। मासाद्यनन्तरतद्विषयज्ञानस्याप्यप्रमात्वव्यवहारादिति भावः। यद्यपि बुद्धिमात्रस्येत्यादिना निरासान्नेयं शङ्का, तथापि मूले तदनिरासात्तत्र तदविरोध इति भावः।

**स्यादेतत्, अनुपकारकं विषयस्य, तदीयमेतदीयं वा न भवितुमर्हत्यविशेषात्। न च तस्येत्यनियतं तत्र प्रमाणमतिप्रसङ्गात्। न च तदभिज्ञमन्तरेण तदुपकारस्योत्पत्तिः, तथानभ्युपगमात्। अभ्युपगमे वा, कार्यत्वस्यानैकान्तिकत्वात्।१। अत्रोच्यते –**

**आमोदः**–अतिप्रसङ्गादिति। द्वितीयलक्षणे सर्वज्ञानाप्रामाण्यप्रसङ्गादित्यर्थः। पूर्वं ज्ञाततानिराकरणं प्रतिज्ञातम्, इदानीमवसरं प्राप्य तां निराकर्तुं *भट्टमत* मुत्थापयति **स्यादेतदिति**। यदि घटज्ञानेन घटविषये कश्चिदुपकारो ज्ञाततालक्षणो न जननीयः, तदा घटज्ञानस्य पटविषयता किन्न स्यान्नियामकाभावादित्यर्थः। ननु किं नियामकेनेत्यत आह **न चेति**। एवं सर्वं ज्ञानं सर्वविषयकं स्यादित्यर्थः। ननु घटज्ञानं घटे ज्ञाततां मा जनयतु, चक्षुरादिना ज्ञानजनकेनैव ज्ञातता जन्यतामत आह **न चेति**। यस्मिन्नुपादाने ज्ञाततालक्षणं कार्यं स्यात् तज्ज्ञानमावश्यकमित्यर्थः। **कार्यत्वस्येति**। क्षित्यादिकमुपादानगोचरज्ञानजन्यं कार्यत्वादिति। तज्ज्ञाततायामनैकान्तिकं स्यादित्यर्थः।१।

**प्रकाशः**– गृहीतग्राहित्वे अभिमतापि प्रमा न स्यात्।

अथ तद्विषयज्ञानोत्तरकालवर्त्तिसमानाश्रयतद्विषयकज्ञानत्वमेव गृहीतग्राहित्वम्। तन्न, बुद्धिमात्रस्य प्रमात्वाभावापत्तेः। यद्विषया बुद्धिरुत्पन्ना तद्विषयाया एव तस्याः स्वोत्पत्त्युत्तरक्षणेऽपि सत्त्वादिति भावः। नन्वीश्वरस्य ज्ञानान्तराभावेऽपि प्रथमक्षणे गृहीतस्यैव द्वितीयादिक्षणे ज्ञानाद् गृहीतग्राहित्वमस्त्येवेत्यत आह **न चेति**। **अनपेक्षत्वस्येति**। न हि स्मृतिवदुत्तरकालबुद्धिविषयत्वे पूर्वकालीनतद्विषयज्ञानापेक्षा ईश्वरज्ञानेऽस्तीत्यर्थः। **अतिप्रसङ्गादिति**। सर्वज्ञानानां द्वितीयादिक्षणे ग्रहणरूपत्वेनाप्रमात्वापातादित्यर्थः। वस्तुतो गृहीतेत्यत्र निष्ठार्थस्य ध्वंसस्यासम्भव एवेति भावः।१।

ननु विषयनियमान्यथानुपपत्त्या तदुपपादको विषयनिष्ठो ज्ञानजन्यो धर्मः स्वीकार्यः, तस्य च तदुपादानज्ञानजन्यत्वे तदुत्पत्तेः प्राक् तद्विषयत्वाभावात् कथं तदुत्पत्तिः, तदुपादानज्ञानाजन्यत्वे च क्षित्यादिसकर्तृकत्वग्राहकं कार्यत्वं तत्रैवानैकान्तिकमित्याह **स्यादेतदिति**। **न चेति**। तदीयोऽयं विषय इति नानियतं, किन्तु नियतमेव। तन्नियामकस्तज्जन्यधर्म एव वाच्यः। तेन तज्जन्यज्ञातता–

**मकरन्दः**– **नन्विति**। ननु कार्यत्वानैकान्तिकोद्भावनस्य नायमवसरः। न च ज्ञाततामादायागृहीतग्राहित्वमुपपादयितुं तत्साधनमेवेदमिति वाच्यम्। पूर्वनिरस्तत्वात्।

**स्वभावनियमाभावादुपकारोऽपि दुर्घटः।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा।।२।।**

विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः। स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः। अवश्यञ्चै तदनुमन्तव्यम्, अतीतादिविषयत्वानुरोधात्। न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्, असत्त्वात्। न च तद्धर्मसामान्याधारं किञ्चित् क्रियते इति युक्तम्, तेन तस्यैव विषयत्वप्राप्तेः। तादात्म्याद्विशेषस्यापि सैव ज्ञाततेति चेत्, तत्किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्?

**आमोदः**– **स्वभावेति।** स्वभावसम्बन्धो यदि न नियामकः, तदा ज्ञाततापि घटीया न स्यात्। न हि सा सम्बन्धान्तरेण तस्य, तथा सति अनवस्थाप्रसङ्गात्। तथा च स्वभावसम्बन्धेन ज्ञानमेव घटीयमस्तु, किमुपकारेणेत्यर्थः। ननु घटो ज्ञात इत्यनुभवबलात् तत्रैव स्वभावसम्बन्धोऽस्तु, न तु ज्ञानविषययोरपीत्यत आह **सुघटत्वेऽपीति। सतीति।** विद्यमान इत्यर्थः। **असति** अतीतेऽनागते व। **का गतिरिति।** समवायिकारणं विना कार्यानुत्पत्तेरित्यर्थः।

ननु द्रव्यत्वं घटत्वं वा यद्विद्यमानं तत्रैव ज्ञातताधानमस्तु इत्याह **न चेति।** तादात्म्याच्च ज्ञाततैव तत्त्वतो ज्ञातता स्यादित्याह **तत् किमिति।** घटघटत्वयोरिव घटरसयोरपि तादत्म्याविशेषादित्यर्थः। **अथेति।** तेनाप्याकारेण तादात्म्यादित्यर्थः।

**प्रकाशः**– श्रयत्वमेव तद्विषयत्वमित्यर्थः।

ज्ञानस्य ज्ञेयनिष्ठोपकाराधानेऽपि नियामकः स्वभाव एव वाच्यः। तथा च तत एव विषयनियमोपपत्तौ किमुपकाराधानेनेत्याह **स्वभावेति।** विद्यमानेऽर्थे ज्ञानजन्योपकारसम्भवेऽप्यतीताद्यर्थे तदसम्भवाद् यथा तत्र स्वभाव एव विषयत्वनियामकः, तथा विद्यमानेऽप्यर्थेऽस्त्वित्याह **सुघटत्वेऽपीति।**

अतीतादिघटादौ भासमाने घटत्वादेरपि भासनात्तत्रैव ज्ञाततोत्पत्तिः स्यादित्यपि नास्तीत्याह **न चेति।** तथा सति ज्ञातनाश्रयत्वाद् घटादिर्विषयो न स्यात्, घटत्वादौ ज्ञातताधानात्तस्यैव तद्विषयत्वादित्यर्थः। ननु धर्मधर्मिणोस्तादात्म्या-त्तद्धर्मज्ञातता तस्यैवेत्याह **तादात्म्यादिति। तत्किमिति।** ननु धर्मिणो धर्माभेदेऽपि

**मकरन्दः**–न च तदभिज्ञानमित्यादिना तदुत्पत्त्यसम्भवोपन्यासस्य विरुद्धत्वापाताच्च इति चेत्, मैवम्। यथार्थानुभवत्वादिकं प्रामाण्यं ज्ञानस्य स्वविषये स्यात्। विषयता च नियामकं विनानुपपन्ना। ज्ञाततायास्तथात्वे कार्यत्वानैकान्तिकत्वापत्त्या तदुपादानज्ञानजन्यत्वमवश्यं वाच्यम्। तच्च तदुत्पत्तेः प्राक् तद्विषयत्वाभावाद

घटाकारेण ज्ञायत एवासौ रस इति चेत्, अथ रसाकारेण किं न ज्ञायते? तेन रूपेण ज्ञाततानाधारत्वादिति चेत्, न तर्हि वर्तमानसामान्य ज्ञानेऽप्यतीतानागतादिज्ञानम्। तेनाकारेण प्राकट्यानाधारत्वादिति।२।

ननु क्रियया कर्मणि किञ्चित् कर्तव्यमिति व्याप्तेरस्त्वनुमानम्? न।

**अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया।**
**तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके।।३।।**

---

आमोदः– ननु येन रूपेण ज्ञातताधानं तेनैव तादात्म्यबलात्तज्ज्ञानं भवति, न त्वन्येनेति शङ्कते तेनेति। वर्तमानसामान्येति। वर्तमानञ्च तत्सामान्यञ्चेत्यर्थः। तेनाकारेणेति। अतीतानागताकारेणेत्यर्थः। प्राकट्यं ज्ञातता।२।

ज्ञाततासाधकं प्रकारान्तरं शङ्कते नन्विति। ज्ञानस्यापि क्रियात्वेन तेनापि कर्मणि विषये घटादौ किमपि जननीयं तेन धात्वर्थावच्छेदकपरसमवेत क्रियाफलशालित्वं कर्मत्वं विषयस्य निर्वहतीत्यर्थः। अनैकान्त्यादसिद्धेर्वेति व्यवस्थितो विकल्पः। धात्वर्थविवक्षायामनैकान्तिकत्वमेव, स्पन्दविवक्षायां स्वरूपासिद्धिरेव। ननु ज्ञातो घट इत्यनुभव एव ज्ञाततायां प्रमाणमित्यत आह तद्वैशिष्ट्येति। तदिति ज्ञानं परामृशति। तेन ज्ञातो घट इत्यत्र ज्ञानवैशिष्ट्यमेव प्रकाशते, न तु ज्ञाततावैशिष्ट्यम्। अधिके ज्ञाततायाम्।

---

प्रकाशः– धर्मस्य न धर्म्यभेदः। भेदाभेदाङ्गीकारात्। तथा च धर्मे ज्ञायमाने तदभिन्नो धर्मी ज्ञायतां, धर्मिणि ज्ञायमाने तद्भिन्नो धर्मः कथं ज्ञायेत। मैवम्। भेदाभेदस्य विरोधेनासम्भवात्।२।

ननु धात्वर्थावच्छेदकपरसमवेतक्रियाफलशालित्वं कर्मत्वमिति ज्ञानक्रियायाः स्वकर्मनिष्ठफलजनकत्वाज्ज्ञातता स्यादित्याह नन्विति। क्रिया न धात्वर्थमात्रं, शरसंयोगादिना धात्वर्थेन कर्मणि गगनादौ तदजननादनैकान्तिकत्वात्। नापि स्पन्दः, ज्ञाने स्पन्दत्वाभावात्। नापि करणव्यापारत्वं, शब्दादिव्यापारपदार्थ स्मृत्यादिभिरनैकान्तिकत्वादित्याह अनैकान्त्यादिति। इह ज्ञाततायाम्। ननु प्रत्यक्षैव ज्ञातता, संयुक्त इतिवज्ज्ञात इत्यनुभवादित्यत आह तद्वैशिष्ट्येति। ज्ञातानुभवो

---

मकरन्दः–सम्भवीति न प्रामाण्यव्यवस्थितिरिति तटस्थशङ्कापरत्वेनास्य सङ्गतत्वात्।

ननु चैत्रो गच्छतीत्यत्र परसमवेतगमनक्रियायाः फलमुत्तरदेशसंयोगवत् पूर्वदेशविभागोऽपीति पूर्वदेशेऽतिव्याप्तिरित्यत उक्तं – धात्वर्थतावच्छेदकेति

धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनेकान्तात्। न हि शरसंयोगेन गगने किञ्चित् क्रियते, अन्त्यशब्दाभिव्यक्त्या वा। स्पन्दाभिप्रायेणासिद्धेः। व्यापाराभिप्रायेण शब्दलिङ्गेन्द्रिय व्यापारैर्व्यभिचारात्। न हि तैः प्रमेये किञ्चित् क्रियते, अपि तु प्रमातर्येव। फलाभिप्रायेणापि तथा। अन्ततस्तेनैवानेकान्तात्, अनवस्थानाच्च।

---

**आमोदः**– न हीति। शरेण संयुज्यते गगनमित्यत्र धात्वर्थः संयोगः, न तु तेन गगने कर्मणि धात्वर्थावच्छेदकं किञ्चित् फलं जन्यत इत्यर्थः। 'अन्त्यशब्दाभिव्यक्त्या वेति। अत्रा'भिव्यक्तिरुत्पत्तिः। अनन्त्यशब्देन गगने शब्दस्य जननाद् व्यभिचारः स्यादेवेति भावः। अपव्याख्यानमन्यत्। अन्त्यशब्दस्यातीन्द्रियत्वाभ्युपगमात्। असिद्धेरिति। ज्ञानस्पन्दत्वाभावादिति भावः। शब्दलिङ्गेन्द्रियेति। पदार्थस्मरणसन्निकर्ष लिङ्गपरामर्शैः प्रमेये किमपि न जन्यत इति भवति व्यभिचार इति भावः। फलेति। शब्दादिव्यापाराणामपि फलरूपत्वात् तत्रैव व्यभिचार इत्यर्थः। तेनैवेति। प्राकट्येनैवेत्यर्थः, फलेनैव वा। ननु फलेनैव किञ्चित् किञ्चित् क्रियतामत आह अनवस्थानादिति।

---

**प्रकाशः**– ज्ञानवैशिष्ट्यमात्रविषयको नातिरिक्तविषयतायां मानमित्यर्थः।

अन्त्यशब्देति। न चान्त्यशब्दाभिव्यक्त्या तत्र ज्ञाततैवोत्पद्यते इति वाच्यम्। तस्याव्यवहितोत्तरक्षण एव नाशात्। समवायिकारणस्य च कार्यसमान कालतानियमात्। शब्दनित्यत्वस्य च निषेधादिति भावः। असिद्धेरिति। ज्ञानक्रिया न स्पन्द इत्यर्थः। ननु क्रिया फलमत्र, यद्धि फलं तत्प्रमेयनिष्ठकिञ्चिज्जनकं, प्रयत्नवदात्मसंयोगवदित्यत आह फलेति। अन्तत इति। फलेनापि फलजननेऽनवस्थेति क्वचिद्विश्रान्तौ तेनैव व्यभिचार इत्यर्थः। आशुविनाशित्वं

---

**मकरन्दः**– फलविशेषणम्। उत्तरसंयोगावच्छिन्नस्पन्दस्य धात्वर्थत्वाद्विभागो न तथेत्याहुः। घटं जानाति चैत्र इत्यत्र ज्ञानक्रियाफलमिच्छादि, तच्छालितयात्मन्यति-व्याप्तिरित्यत उक्तं परेति। न चाभावो घटमाश्रयते इत्यादावव्याप्तिः, आश्रयणक्रियाया अभावे समवेतत्वाभावादिति वाच्यम्। परसमवेतपदस्य सम्बन्धपरत्वात्। अतिरिक्तेति। ज्ञाततायामित्यर्थः। तस्येति। नचैवं प्रत्यक्षमपि कथं स्यादिति वाच्यम्। पूर्ववर्त्तितामात्रेणैव तस्य तद्धेतुत्वात्। समवायिकारणमात्रस्यैव कार्यसमानकालत्वनियमादिति भावः।

आशुविनाशिधर्माभिप्रायेण द्वित्वादिभिरनियमात्। आशुकारकाभिप्रायेण कर्मण्यसिद्धेः। कर्मण्याशुकारकं ज्ञानमित्येव हि साध्यम्। कर्त्तर्याशुकारकत्वस्य कर्मोपकारत्वेनाव्याप्तेः। शब्दादिव्यापारै रेवानेकान्तात्।

स्यादेतत्, अनुभवसिद्धमेव प्राकट्यम्। तथा हि – ज्ञातोऽयमर्थ इति सामान्यतः, साक्षात्कृतोऽयमर्थ इति विशेषतो विषयविशेषणमेव किञ्चित् परिस्फुरतीति चेत्, तदसत्।३। यथा हि –

**अर्थेनैव विशेषो हि निकारतया धियाम्।**

तथा –

**क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम्।।४।।**

---

आमोदः- अनियमादिति। व्यभिचारादित्यर्थः। असिद्धेरिति। कर्मण्याशुकारकत्वस्य हेतोः साध्याविशिष्टत्वादित्यर्थः। कर्तर्याशुकारकत्वं च हेतुः शब्दादिव्यापारे व्यभिचारीत्याह कर्तरीति। द्वितीयार्धं व्याख्यातुं शङ्कते अनुभवेति ।३।

प्रत्यक्षमन्यथोपपादयति यथा हीति। यथा यदस्य ज्ञानमित्यत्रार्थो ज्ञानविशेषणं, तथा ज्ञातो घट इत्यत्र ज्ञानमेवार्थविशेषणमित्यर्थः। ननु ज्ञाननिष्ठं घटत्वं ज्ञानाकार इति तदेव ज्ञानं विशेषयति न त्वर्थ इत्यत आह निराकारतयेति। न हि घटत्वादिकमपि ज्ञानाकारो येन ज्ञानं विशिंष्यादित्यर्थः।

---

प्रकाशः- क्षणचतुष्टयानवस्थायित्वम्। अनियमाद्, व्यभिचारादित्यर्थः। कर्मण्याशुकारकत्वं हेतुः, कर्त्तर्याशुकारकत्वं वा, आशुकारकत्वमात्रं वा?। नाद्यः, साध्याविशिष्टतया हेतोरसिद्धत्वादित्याह कर्मणीति। न द्वितीयतृतीयावनेकान्तादित्याह कर्त्तरीति। शब्दादिव्यापारैः पदार्थस्मृतिलिङ्गपरामर्शादिभिर्वाक्यार्थज्ञानानुमित्यादिकं कर्त्तर्याशुक्रियते। न च कर्मणि वाक्यार्थे अनुमेयादौ वा किञ्चित् क्रियते इत्यनैकान्तिकमित्यर्थः।३।

कारिकोत्तरार्द्धं व्याख्यातुं शङ्कते अनुभवेति। निराकारमपि ज्ञानं यथा विषयेण नीलत्वादिना नीलज्ञानाद्युच्यते, तथा ज्ञानरूपक्रिययैव ज्ञातो घट इति धीव्यपदेशौ, इत्थमनभ्युपगमे च कृतो घट इत्यादावपि कृत्यादिजनितधर्माधारो घटः स्यात्। न चैतत् त्वयेष्यते, इति परिहरति यथा हीति। घटक्रियेत्यत्र क्रियायामर्थो विशेषकः, कृतो घट इत्यत्रार्थे क्रिया विशेषिकेति भेदः। एवं घटज्ञानमित्यत्रार्थो ज्ञाने विशेषणं,

**किं न पश्यसि, घटक्रिया घटक्रियेतिवत् कृतो घटः, करिष्यते घट इत्यादि। तथैव गृहाण, घटज्ञानं पटज्ञानमितिवत् ज्ञातो घटो ज्ञास्यते ज्ञायते इति। कथमसम्बद्धयोर्धर्मधर्मिभाव इति चेत्, ध्वस्तो घट इति यथा। एतदपि कथमिति चेत्, नूनं ध्वंसेनापि घटे किञ्चित् क्रियते इति वक्तुमध्यवसितोऽसि। तन्निरूपणाधीननिरूपणो ध्वंसः स्वभावादेव तदीय इति किमत्र सम्बन्धान्तरेणेति चेत्, प्रकृतेऽप्येवमेव।**

---

**आमोदः-** कृतो घट इति। अन्यथा ज्ञाततावत् कृततादीनामपि स्वीकारापत्तेरिति भावः। न च यथापेक्षाबुद्धिः द्वित्वादिकमाधत्ते, तथा ज्ञानावच्छेदेनैवं कर्मणि किञ्चिदाधायकत्वमङ्गीकर्तव्यमिति वाच्यम्। तत्रानुभवबलात् तथास्तु, अन्यत्रानुभवोऽन्यथासिद्धो ज्ञानत्वञ्च हेतुरप्रयोजक इति भावः। **असम्बद्धयो**र्ज्ञानार्थयोरित्यर्थः। **ध्वस्त** इति। तत्राप्यसम्बन्धेन भिन्नकालेनैव ध्वंसेन यथा धर्मधर्मिभाव इत्यर्थः। परमुखेन प्रकृते धर्मधर्मिभावं समर्थयति **स्वभावादे**वेति। स्वरूपसम्बन्धादेवेत्यर्थः। स्वरूपादेवेति क्वचित् पाठः, तस्याप्ययमर्थः।

---

**प्रकाशः-** ज्ञातो घट इत्यत्रार्थे ज्ञानं विशेषणम्।

ननु घटोऽयमिति ज्ञानं घटधर्मिककिञ्चिद्धर्मजनकं घटज्ञानत्वाद् अपेक्षाबुद्धिवत्। न चापेक्षाबुद्धित्वमुपाधिः। घटसंयोगादिजनकावयवसंयोगादौ साध्याव्यापकत्वात्। मैवम्, अप्रयोजकत्वात्। अन्यथेच्छा स्वविषयनिष्ठ किञ्चिद्धर्मजनिका सविषयकत्वात् बुद्धिवदित्यादेरापत्तेः। तथापि ज्ञातो घट इति ज्ञानं विशेषणविशेष्ययोः सम्बन्धविषयकं विशिष्टज्ञानत्वात्, गौरिति ज्ञानवत्। वर्त्तमानेऽर्थे बाधकाभावात्। अन्यथा समवायोऽपि न सिद्ध्येदिति चेन्न। अतीतानागतयोर्ज्ञातताया अभावेन ज्ञातव्यवहाराभावापत्तेः। तस्य ज्ञाततासाध्यत्वात्। तत्र ज्ञानविषयावेव तद्विषयाविति चेन्न। वर्त्तमानेऽपि तयोरेव तद्विषयत्वापत्तेः। अतीतादिवर्त्तमानतत्प्रतीत्योर्वैलक्षण्याननुभवात्। अथ घटपटयोरेकज्ञानविषयत्वेऽपि घटत्वेन घटो ज्ञातः, पटत्वेन पटो ज्ञात इति ज्ञातताभेदभानाज्ज्ञानभिन्ना ज्ञाततेति चेन्न। तस्यैव ज्ञानस्य सम्बन्धस्तत्र तत्र तेन तेन धर्मेण निरूप्यते इति ज्ञानस्वभावादेव नियमादिति भावः। प्रतिबन्धिमुक्त्वा मूलयुक्तिमाह **तन्निरूपणे**ति।

---

**मकरन्दः-** अप्रयोजकत्वादित्युपलक्षणम्। पक्षधर्मावच्छिन्नसाध्यव्यापकमपेक्षाबुद्धित्वमुपाधिरित्यपि द्रष्टव्यम्। **अन्यथे**ति। यदि सम्बन्धं विना विशिष्टधीः, तदेत्यर्थः।

एतेन फलानाधारत्वादर्थः कथं कर्मेति निरस्तम्। विनाश्यवत् करणव्यापारविषयत्वेन तदुपपत्तेः। स्वाभाविकफलनिरूपकत्वञ्च तुल्यम्।

ननु ज्ञानमतीन्द्रियत्वादसाधारणकार्यानुमेयं तदभावे कथमनुमीयेत। अप्रतीतञ्च कथं व्यवहारपथमवतरेदिति ज्ञानव्यवहारान्यथानुपपत्त्या ज्ञाततकल्पनम्। तदप्यसत्, परस्पराश्रयप्रसङ्गात्। ज्ञाततया हि ज्ञानमनुमीयेत, ज्ञाते च तद्व्यवहारान्यथानुपपत्तिस्तां ज्ञापयेत्। कुतश्च ज्ञानमतीन्द्रियम्?। इन्द्रियेणानुपलभ्यमानत्वादिति चेन्न। अनुमानोपन्यासे साध्याविशिष्टत्वात्। अनुपलब्धिमात्रोपन्यासे तु योग्यताऽविशेषिताऽसौ कथमैन्द्रियकोपलम्भाभावं गमयेत्? तद्विशेषणे तु कथमतीन्द्रियं ज्ञानमिति।

आमोदः- एतेनेति। परसमवेतक्रियाफलशलिन एव कर्मत्वादित्यर्थः। विनाश्यवदिति। मुद्गरेण घटं नाशयतीत्यत्र मुद्गरस्य करणस्य यो व्यापारो नाशस्तेन सह स्वरूपसम्बन्धेन तद्विषयत्वं यथोपपाद्यते तथा प्रकृतेऽपीत्यर्थः। यथात्र द्वितीया प्रयोगमात्रसाधुस्तथा प्रकृतेऽपि स्यादिति भावः। न च घटपटयोरेकज्ञानविषयत्वे घटो ज्ञातः पटो ज्ञात इति भिन्नभिन्नज्ञाततानुभवः, कथमिति चेत्, न। तत्रैकस्यैव ज्ञानस्योभयविशेषणत्वेन प्रतीतेरिति भावः। असाधारणेति। स चासाधारणो धर्मः प्राकट्यमेवेत्यर्थः। ननु याज्ञायि (?) ज्ञानं किमतः स्यादित्याह अप्रतीतमिति। अनुपलब्धिमात्रेति। अनुपलब्धिमात्रमेवैन्द्रियकस्य उपलम्भस्याभावं गमयेद् यदि, तदा परमाण्वाद्यभावमपि गमयेदित्यर्थः। अनुपलब्धिमात्रमुपलम्भाभावः न गमयति, किन्त्वैन्द्रियकत्वाभावं गमयतीति चेत्, न। ऐन्द्रियकत्वस्याप्यतीन्द्रियतया अनुपलब्धिमात्रेण तदभावावगमे परमाण्वाद्यभावमपि गमयेदिति भावः। योग्यानुपलम्भस्य तूपलम्भाभावबोधकत्वाभ्युपगमे ज्ञानयोग्यत्वस्य *त्वयैव* स्वीकारादित्याह तद्विशेषणे त्विति।

प्रकाशः- ननु ज्ञानजन्यफलानाश्रयत्वादर्थः कर्म न स्यादित्यत आह एतेनेति। परसमवेतक्रियाफलशालित्वं न कर्मत्वम्। आत्मानं जानातीत्यत्राव्याप्तेः, किन्तु करणव्यापारविषयत्वम्। तच्चात्रास्त्येवेत्याह विनाश्यवदिति। अर्थो ज्ञानस्य कर्मैव न भवति, अतीतादेरप्यर्थत्वात्, कारकविशेषस्य च कर्मत्वात्। अतीतानागतं जानामीति द्वितीयाप्रयोगः साधुरिति तु तत्त्वम्। स्वाभाविकेति। यथा कर्तृव्यापारफलं विनाशः प्रतियोगिनिरूप्यः, तथा ज्ञानमपि विषयनिरूप्यमित्यर्थः।

तद्विशेषणे त्विति। यदि योग्यानुपलब्ध्या योग्यस्य ज्ञानस्याभावो गृह्यते,

तथाविधज्ञातताताश्रयत्वादिति चेन्न। आश्रयासिद्धेः। व्यवहारान्यथानुपपत्त्यैव सिद्ध आश्रय इति चेन्न। ज्ञानहेतुनैव तदुपपत्तेः। तस्याऽऽत्ममनःसंयोगादिरूपस्य सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेन्न। तावन्मात्रस्य व्यवहाराहेतुत्वात्। अन्यथा ज्ञानस्वीकारेऽपि तुल्यत्वात्। स्मरणान्यथानुपपत्त्येति चेन्न। तस्याप्यसिद्धेः।

अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत्, किमतः? न ह्येतावता ज्ञानं तदिति सिद्ध्यति, तस्यैवासिद्धेः।

---

आमोदः– ननु ज्ञानमतीन्द्रियं तथाविधज्ञातताताधारत्वादित्यनुमानमस्तु इत्याह तथाविधेति। साक्षात्कृतताताधारत्वादिति हेत्वर्थः। ज्ञानस्य पक्षस्यासिद्धेरित्याह आश्रयेति। व्यवहारेति। ज्ञानमन्तरेण घटादिव्यवहारोऽपि न स्यादिति सिद्धं ज्ञानमित्यर्थः। तद्धेतोरेव तत्सम्भव इत्याह नेति। व्यवहारं प्रति ज्ञानहेतोरन्वयव्यभिचारं दर्शयति तस्येति। अन्वयव्यभिचारो न दोषः इत्याह तावन्मात्रस्येति। आत्मनः संयोगमात्रस्येत्यर्थः। अन्यथेति। सैव चेत् ज्ञानसामग्री तदा सुषुप्तावस्थायां ज्ञानमेव कुतो नोत्पद्यत इत्यर्थः। स्मरणेति। ज्ञानं विना स्मरणमनुपपन्नमिति ज्ञानकल्पनेत्यर्थः। तस्यापीति। स्मरणस्यापि ज्ञानत्वेनाद्याप्यसिद्धेरित्यर्थः। अस्ति तावदिति। तच्च ज्ञानमेव पर्यवस्यतीति भावः। गूढाभिसन्धिराह न हीति। तस्यैवेति। व्यवहारो ज्ञानजन्य

---

प्रकाशः–तदा सिद्धमैन्द्रियकत्वं ज्ञानस्येत्यर्थः। तथाविधेति। साक्षात्कृतताताश्रयत्वादित्यर्थः। आश्रयेति। ज्ञानस्याप्रत्यक्षत्वे मानान्तरासम्भवेनाश्रयस्य ज्ञानस्यासिद्धेरित्यर्थः। ज्ञानस्य प्रत्यक्षतया स्वरूपासिद्धेश्चेति भावः। अज्ञाते घटादिव्यवहारो न स्यात्, तस्य व्यवहर्तव्यज्ञानसाध्यत्वादिति कार्येण कारणानुमानात् सिद्ध आश्रय इत्याह व्यवहारेति। ज्ञानहेतुत्वेनाभिमतादेवावश्यकाद्व्यवहारोपपत्तौ न तेन ज्ञानानुमानमित्याह ज्ञानेति। ज्ञानहेतुसद्भावेऽपि व्यवहाराभावान्न तेनान्यथासिद्धिरित्याह तस्येति। ज्ञानहेतुसद्भावे सुषुप्तौ कुतो ज्ञानमेव न जायते? तावन्मात्रस्याहेतुत्वादिति यदि, तदा या ज्ञानसामग्री सा व्यवहारसामग्र्यस्तु किमान्तरालिकेन ज्ञानेनेत्याह तावन्मात्रस्येति। अन्यथेति। ज्ञानमेव तदा किं न स्यादित्यर्थः। तस्यापीति। स्मरणस्यापि ज्ञानत्वेनातीन्द्रियत्वादसिद्धिरित्यर्थः। अत्राप्यनुभवकारणादेव स्मरणोत्पत्तिरित्यन्यथासिद्धिरिति भावः। तदिति। व्यवहारनिमित्तमित्यर्थः। तस्यैवेति। ज्ञानासिद्ध्या व्यवहारे तज्जन्यत्वा–

तथापि नियतस्य कर्तुः प्रवृत्तेः कर्तृधर्मेणैव केनचित्प्रवृत्तिहेतुना भवितव्यमिति चेत्, अस्त्विच्छा प्रत्यक्षसिद्धा, न तु ज्ञानम्। सैव कथं नियताधिकरणे उत्पद्यतामिति चेन्न। ज्ञानाभ्युपगमेऽपि तुल्यत्वात्। स्वहेतोः कुतश्चिदिति चेत्, तत एव इच्छा अस्तु, किं ज्ञानकल्पनयेति?

स्यादेतत्। प्रकाशमाने खल्वर्थे तदुपादित्सादिरुपजायते, न तु सुषुप्त्यवस्थायामप्रकाशमानेऽप्यर्थे इत्यनुभवसिद्धम्। तत इच्छायाः कारणं विलक्षणमेव किञ्चित्परिकल्पनीयम्, यस्मिन् सति सुस्वापलक्षण मौदासीन्यमर्थविषयमात्मनो निवर्तते इति चेत्, हन्तैवं सुस्वाप निवृत्तिमनुभवसिद्धां प्रतिजानानेन ज्ञानमेवापरोक्षमिष्यते। अचेतयन्नेव हि

आमोदः-इति कार्यकारणभावग्रहे सति व्यवहाररूपं कार्यं स्वकारणतया ज्ञानं गमयेत्, अयञ्च कार्यकारणभावग्रहो ज्ञानसिद्ध्या सिद्ध्येत्, तदेव तु न सिद्धमस्तीत्यर्थः। कर्तृधर्मेणेति। ज्ञानसामग्री च न कर्तृधर्म इति न तयाऽन्यथासिद्धिः। कर्तृधर्मो हि तत्समवेत इष्यत इत्यर्थः। प्रत्यक्षसिद्धा तन्मतेऽपीति शेषः। कथमिति। ज्ञानमन्तरेणेत्यर्थः। ज्ञानेति। ज्ञानमप्यनियताधिकरणं कथमुत्पद्यतामिति तुल्यमित्यर्थः। कुतश्चिदिति नियतादित्यर्थः। इच्छोत्पत्तिरेव तस्मान्नियामकात् किं न स्यादित्याह तत् इति। विलक्षणमिति। येनार्थस्य प्रकाशमानता सम्भवति, इच्छादिकं तु न तथेत्यर्थः। अनुभवसिद्धमिति। पूर्वपक्षिणा यदुक्तं तत्रानुभवपदं प्रत्यक्षपरतया गृहीत्वा दूषयति हन्तेति। सुस्वापनिवृत्तेर्ज्ञानपरतामाह अचेतयन्निति।

प्रकाशः- निश्चयादित्यर्थः। कर्तृधर्मप्रवृत्तेः कर्तृधर्मकार्यत्वात् कर्तृधर्मतया ज्ञानं सिद्ध्येदित्याह तथापीति। इच्छा स्वविषयविषयकात्मधर्मजन्या नियतविषयक-धर्मत्वात् प्रयत्नवदित्यभिप्रेत्याह सैवेति। अनुमानं ज्ञान एवानैकान्तिकमित्यभिप्रेत्याह ज्ञानेति। न च ज्ञानहेतोरननुगमाद् व्यभिचारेण कारणत्वासम्भवः। परेषामेक-शक्तिमत्त्वेनापि कारणत्वग्रहसम्भवादिति भावः। अनुभवसिद्धमिति। यद्यप्येकत्रात्मन्येकदा आशुतरविनाशिगुणत्रयानवस्थानादिच्छाज्ञानयोः पौर्वापर्यानुभवो न सम्भवति, तथापि ज्ञानव्यतिरेकाव्यवहितोत्तरकाले इच्छाव्यतिरेकनियमात् कार्यकारणभावग्रह इति भावः।

मकरन्दः- अस्तु वा स्मरणं, तथापि तदन्यथानुपपत्त्या नानुभवसिद्धिः। तत्कारणेनान्यथासिद्धेरित्याह अत्रापीति। परेषामिति। तथा च तन्मते ज्ञानहेतुना तदन्यथासिद्धिः स्यादेवेति भावः। तथापीति। अत्र व्यतिरेकपदं प्रागभावपरम्।

सुषुप्त इत्युच्यते, अचैतन्यनिवृत्तिरेव हि चैतन्यं ज्ञानमिति। तथा च कालात्ययापदिष्टो हेतुः। एतेन क्षणिकत्वादिति निरस्तम्।

अपि च – किमिदं क्षणिकत्वं नाम?। यद्याशुतरविनाशित्वं, तदानैकान्तिकम्। अथैकक्षणावस्थायित्वं, तदसिद्धं प्रमाणाभावात्।

ननु स्थायिविज्ञानं यादृशमर्थक्षणं गृह्णदुत्पद्यते, द्वितीयेऽपि क्षणे किं तादृशमेव गृह्णाति, अन्यादृशं वा, न वा कमपीति?। न प्रथमः, तस्य क्षणस्यातीत्वात्। प्रत्यक्षज्ञानस्य च वर्तमानाभत्वात्। न चातीतमेव वर्तमानाभतयोल्लिखति, भ्रान्तत्वप्रसङ्गात्। न द्वितीयः, विरम्य व्यापारायोगात्। प्रथमतोऽपि तथाभ्युपगमेऽनागतावेक्षणप्रसङ्गात्। न तृतीयः, ज्ञानत्वहानेरिति *महाव्रतीयाः*।

---

आमोदः- तथा चेति। ज्ञानस्य प्रत्यक्षत्वे सिद्धे ज्ञानातीन्द्रियत्वसाधकं तथाविधज्ञातताना्श्रयत्वं हेतुर्बाधितमित्यर्थः। एतेनेति। बाधेनेत्यर्थः। अनैकन्तिकमिति। शब्दविभागादाविति शेषः। एकक्षणावस्थायित्वम् एकक्षणमात्रावस्थायित्वमित्यर्थः। तदसिद्धमिति। ज्ञानस्यापि तत्क्षणद्वयाव-स्थायित्वादिति भावः। ज्ञानस्य क्षणिकत्वं प्रमाणयन्नाशङ्कते नन्विति। स्थायिविज्ञानमिति यद्युपनिबन्धेन। अर्थक्षणमिति। अर्थावच्छेदकं कालोपाधिम् अर्थस्वरूपं वा। वर्तमानाभत्वात् वर्तमानाकारत्वात्। भ्रान्तत्वेति। अयथार्थविषयित्वादित्यर्थः। विरम्येति। यमर्थमालम्ब्योत्पद्यते यज्ज्ञानं तस्य तदतिरिक्तार्थानवगाहनस्वाभाव्यपरित्यागादित्यर्थः। ज्ञानत्वेति। अर्थप्रवणस्यैव ज्ञानत्वादिति भावः। महाव्रतीयाः भट्टैकदेशिनः।

---

प्रकाशः- एतेनेति। कालात्ययापदेशेनेत्यर्थः। तदानैकान्तिकमिति। इच्छादावित्यर्थः। यादृशं, वर्त्तमानक्षणावच्छिन्नम्। अन्यादृशं द्वितीयक्षणावच्छिन्नम्। तस्येति। द्वितीये क्षणे इत्यनुषज्ज्यते। वर्त्तमानाभत्वादिति वर्त्तमानविषयत्वादित्यर्थः। विरम्येति। ज्ञानं हि यं विषयीकृत्य उत्पन्नं, न तं जहाति, नान्यं वा विषयीकरोतीति ज्ञानस्वभावादित्यर्थः। न च प्रथमत एव तद्विषयीकरणे हेतुरस्ति, भावित्वेनार्थस्य तदानीमवर्त्तमानत्वादित्याह प्रथमतोऽपीति। द्वितीयक्षणे पूर्वक्षणविषयीभूतस्यार्थस्य वर्त्तमानता भासते, तथा च तत्क्षणनाशेऽपि तथाविधमर्थं विषयीकुर्वज्ज्ञानम-

---

मकरन्दः–अन्यथा ज्ञाननाशेऽपीच्छा सत्त्वान्नियमभङ्गापत्तेः। वर्त्तमानतेति। प्रथमक्षणा-वच्छिन्नता भासते इत्यर्थः। तत्क्षणेति। प्रथमक्षणनाशेऽपीत्यर्थः। तथाविधं प्रथमक्षणा-

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः'।। ( मनुस्मृतिः१२।१०६। )

तमिममर्थमागमः संवदति, विसंवदति तु परेषां विचारम् –

'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः।।'
( श्वेता. उप०३।३। )

अत्र प्रथमेन सर्वज्ञत्वं, चक्षुषा दृष्टेरुपलक्षणात्। द्वितीयेन सर्ववक्तृत्वं, मुखेन वागुपलक्षणात्। तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वोपलक्षणात्। चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात्। पञ्चमेन धर्माधर्मलक्षणप्रधानकारणत्वं, तौ हि लोकयात्रावहनाद्बाहू। षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वं, ते हि गतिशीलत्वात्पतत्रव्यपदेशाः,

आमोदः– प्रथमस्तवकेन तूपनिषदादिसिद्धेऽपीश्वरे किमुक्तानुमानेन, किं वा तर्कोपवर्णनेनेत्यत आह आर्षमिति। न्यायानुसरणमन्तरेणाश्रद्धामलक्षालनमेव न भवतीत्यर्थः। तमिममिति। नित्यसर्वज्ञकर्तृत्वं क्षित्यादेरित्यर्थमित्यर्थः। प्रथमेनेति। विश्वतश्चक्षुरित्यनेन कथमेवमत आह चक्षुषेति। सर्ववक्तृत्वं सहस्रशाखवेदप्रणेतृत्वं, नायमर्थः पदस्य त(?) इत्यत आह मुखेनेति। सर्वसहकारित्वं सर्वकारणसहकारित्वम्। ननु नायं पदार्थ इत्यत आह बाहुपदेनेति। बाहुः पुरुषस्य स्वकृत्ये सहकारीति लक्षणया तत्प्रयोगः। चतुर्थेन विश्वतःपादित्यनेन व्यापकत्वं सकलमूर्तसंयोगित्वम्। ननु नायं पदार्थ इत्यत आह पदेति। बाहुपदेन धर्माधर्माभिधानाय यौगिकमर्थमाह तौ हीति।

प्रकाशः– नन्वागमादेवेश्वरसिद्धौ तत्र न्यायप्रदर्शनं व्यर्थमित्यत आह आर्षमिति। तर्कानुसन्धानं विनाऽर्षधर्मोपदेशे तात्पर्यमेव निश्चेतुमशक्यमित्यर्थः। यद्वा आगमाविरोधं न्यायमाह आर्षमिति। अस्मन्न्याये नागमविरोधोऽपि तु तत्संवादः।

मकरन्दः– शृङ्गत्वस्येति। यद्यपि शृङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यत्ववदात्मनोऽपि योग्योपाधिमत्त्वनियमः। यदि च तत्संसारिमात्रविश्रान्तं तदा तदपि योग्यशृङ्ग-विश्रान्तमिति अयोग्यस्य न बाधः प्रत्यक्षेणापि, तथापि विपक्षबाधकाभाव एव मूलम्। अन्यथा पशुत्वस्य केवलान्वयित्वापत्तेः। तस्य च त्वयाऽनभ्युपगमादिति भावः। नन्वेवमपि तर्कोपदर्शनमात्रमर्हं न तु न्यायोपदर्शनमित्यताह यद्वेति। अनेनोभयोः समानविषयत्वप्रतिपादनात् विरोधमाह इत्यर्थः।।३।।

पतन्तीति। सन्धमति, सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः। तेन संयोजयति, समुत्पादयन्नित्यर्थः। द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणं, भूमीत्यधस्तात्, एक इत्यनादितेति। स्मृतिरपि –

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' ( भगवद् गीता १०।८ ) इत्यादि।

एतेन ब्रह्मादिप्रतिपादका आगमा बोद्धव्याः।३।

आयोजनात्खल्वपि –

**स्वातन्त्र्ये जड़ताहानिर्नादृष्टं दृष्टघातकम्।**

---

**आमोदः**– षष्ठेन पतत्रै'रित्यनेन पतन्तीति पतत्राः परमाणवोऽभिमताः। व्यवहितेति। 'छन्दसि परे व्यवहिताश्चेति (पा०सू० १।४।८१-८२) व्यवहितोपसर्गानुशासनं *पाणिनेः*। ननु ब्रह्मणो विश्वकर्तृत्वं श्रूयते, न त्वीश्वरस्येत्यत आह एतेनेति। ईश्वरस्य जगत्कर्तृत्वसाधनेनेत्यर्थः। ब्रह्मादीनामधिकारिपुरुषत्वेन ईश्वरस्यैव प्रयोजककर्तृत्वात् इति भावः।३।

खल्वपीति। उदाह्रियत इत्यर्थः। यद्वा, आयोजनादपि साध्यो विश्वविदव्यय इत्यर्थः। खल्वपीति निपातसमुदायस्य समुच्चयवाचित्वात्। सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यं कर्मत्वात् चेष्टावदित्यनुमानस्योपकुर्वाणं तर्कमाह स्वातन्त्र्य इति। आयोजनं हि परमाणुद्वयसंयोगजनकं कर्म, तद्यदि परमाणुद्वयात् स्वतन्त्रादेव जायते तदा तेषां जड़त्वमचैतन्यं न स्यादित्यर्थः। ननु दृष्टादेव तदुत्पद्यतामत आह नादृष्टमिति। अदृष्टस्यापि दृष्टकारणसहकृतस्यैव जनकत्वादित्यर्थः। दृष्टघातकमिति।

---

**प्रकाशः**– परोक्तन्याये तु नैवमित्याह तमिममिति। व्यवहितेति। व्यवहिताश्चेत्यनेन उपसर्गसंज्ञाविधानादिति भावः। एतेन ब्रह्मादीति। ब्रह्मादिशरीरमधिष्ठाय ईश्वर एव जगत् सृजतीत्यर्थः।।३।।

खल्वपीति निपातसमुदायः उदाह्रियते – इत्यर्थे वर्त्तते, न समुच्चयार्थः। स साध्यो विश्वविदव्यय इत्यनेनान्वीयते इत्येके। साद्ध्यते इत्यनुवर्त्तते इत्यन्ये। एवमग्रेऽपि। आ युज्यते संयुज्यतेऽन्योन्यं द्रव्यमनेनेत्यायोजनं द्व्यणुकारम्भक संयोगजनकं सर्गाद्यकालीनपरमाणुकर्मात्र विवक्षितम्। तद् यदि स्वप्रयत्नादेव तेषां स्यात्, तदा परमाणूनामचैतन्यानुपपत्तिरित्याह स्वातन्त्र्ये इति। यदि च प्रयत्ननिरपेक्षाददृष्टादेव तत् स्यात्, तदा द्व्यणुकादीनामपि तत एवोत्पादः स्यादिति हेत्वन्तरोच्छेद इत्याह नादृष्टमिति। चेतनव्यापारसहितात्तस्मादिति भावः।

**हेत्वभावे फलाभावो विशेषस्तु विशेषवान्।।४।।**

परमाण्वादयो हि चेतनायोजिताः प्रवर्तन्ते, अचेतनत्वात्, वास्यादिवत्। अन्यथा कारणं विना कार्यानुत्पत्तिप्रसङ्गः। अचेतनक्रियायाश्चेतनाधिष्ठानकार्यत्वावधारणात्। क्रियाविशेष-विश्रान्तोऽयमर्थो, न तु तन्मात्रगोचरः। चेष्टा हि चेतनाधिष्ठानमपेक्षते इति चेत्, अथ केयं चेष्टा नाम? यदि प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया, प्रयत्नमात्रकारणिकेति वा विवक्षितम्। तन्न, तस्यैव तत्रानुपाधित्वात्। अथ हिताहितप्राप्तिपरिहारफलत्वं तत्त्वम्। तन्न। विषभक्षणोद्बन्धनाद्य

आमोदः-दृष्टकारणताविघटकमित्यर्थः। अत्र विपक्षबाधकमाह **हेत्वभावे फलाभाव** इति। चेतनव्यापारस्य हेतोरभावे कर्मैव फलं परमाणुषु नोत्पद्यत इत्यर्थः। ननु चेष्टारूपे कर्मणि चेतनापेक्षा, न तु क्रियान्तरेऽपीत्यत आह **विशेष** इति।

तर्कोपकार्यमानमाह **परमाण्वादय** इति। **तन्मात्रेति**। क्रियामात्रेत्यर्थः। **तस्यैवेति**। प्रयत्नवदात्मसंयोगासमवायिकारणत्वमेवात्र साधयितुमुपक्रान्तम्। साध्यञ्च नोपाधिरनुमानमात्रोच्छेदप्रसङ्गादित्यर्थः। **तत्त्वमिति**। चेष्टात्वमित्यर्थः। एतच्चेष्टालक्षणेऽव्याप्तिमाह **विशेषेति**। तत्र हि न हितप्राप्तिर्न

प्रकाशः-तथा च सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यं कर्मत्वाच्चेष्टावदिति मानार्थः। विपक्षे किं बाधकमित्याह **हेत्वभाव** इति। हेतोश्चेतनव्यापार स्यान्यत्रोपलब्धस्याभावे क्रियारूपफलाभाव इत्यर्थः। ननु चेष्टारूपः क्रियाविशेषस्तथा, न तु क्रियामात्रमित्यत आह **विशेषस्त्विति**। चेष्टा हि भोक्तृगतप्रयत्नस्य प्रयोज्या, न तु प्रयत्नमात्रस्येत्यर्थः।

तर्कोपकार्यं मानमाह **परमाण्वादयो हीति**। आयोजिता उत्पादितकर्माणः प्रवर्त्तन्ते कार्यमारभन्ते इत्यर्थः। विशेषणीभूतकर्मपक्षत्वे पूर्वदर्शितानुमाने तात्पर्यम्। विशेषस्त्वित्यनिराकार्यं चेष्टात्वमुपाधिमाह **क्रियाविशेषेति**। **तस्यैवेति**। प्रयत्नवदात्मसंयोगासमवायिकारणत्वे हि परमाणुक्रियायां चेतनायोजितत्वमिति साध्यम्। तच्च नोपाधिः, साधनव्यापकत्वादित्यर्थः। **विषेति**। विषभक्षणादिक्रियाया

मकरन्दः- मूलोक्तस्य तस्य व्योमादौव्यभिचारात्तत्रापरितुष्यन् स्वयं तर्कोपकार्य्यमानमाह **सर्गाद्यकालीनेति**। अत एवाह **विशेषणीभूतेति**। अत एव चेष्टात्वस्योपाधित्वशङ्कापीति भावः।

व्यापनात्। इष्टानिष्टप्राप्तिपरिहारफलत्वमिति चेत्, कर्तारं प्रत्यन्यं वा? उभयथाऽपि परमाण्वादिक्रियासाधारण्यादविशेषः। भ्रान्तसमीहाया अतथाभूताया अपि चेतनव्यापारापेक्षणाच्च। शरीरसमवायिक्रियात्वं तदिति चेन्न। मृतशरीरक्रियाया अपि चेतनपूर्वकत्वप्रसक्तेः। जीवत इति चेन्न।

---

**आमोदः**–वाऽहितनिवृत्तिरित्यर्थः। उद्बन्धनादेरपि तत्कालमिष्यमाणत्वात्तत्संग्रहार्थं लक्षणान्तरं शङ्कते **इष्टानिष्टेति**। पक्षादव्यावृत्तादुपाधेः सधनव्यापकत्वमाह **उभयथेति**। परमाणुक्रियायास्तत्कर्तरीश्वरस्यास्मदादेश्च इच्छाविषयार्थहेतुत्वादित्यर्थः। चेतनाधिष्ठानजन्यत्वस्य साध्यस्य व्यापकोऽपीष्टानिष्टप्राप्तिपरीहारफल क्रियात्वमुपाधिरित्याह अचेतने क्रिया चेतनाधिष्ठानजन्या क्रियात्वात् शरीरक्रियावत् इत्यत्रेष्टानिष्टप्राप्तिपरिहारफलकक्रियात्वस्य साध्याव्यापकत्वमाह **भ्रान्तेति**। समीहा चेष्टा। **अतथाभूताया इति**। इष्टानिष्टप्राप्तिरूपफलरहिताया इत्यर्थः। **तदिति**। चेष्टात्वमित्यर्थः। तथा च न साध्याव्यापकमित्यर्थः। समव्याप्तोपाध्यभिप्रायेणाह **मृतेति**। जीवच्छरीरक्रियात्वमुपाधिरित्याह **जीवत इति**।

---

**प्रकाशः**– अहितमरणादिप्रापकत्वादित्यर्थः। **इष्टेति**। विषभक्षणाद्यनुकूलक्रियाया अपि इच्छाविषयविषभक्षणादिप्रापकत्वमस्त्येव। इच्छां विना तत्र प्रवृत्त्यभावादित्यर्थः। **उभयथाऽपीति**। परमाण्वादिक्रियायास्तत्कर्तुरीश्वरस्यास्मदादेश्चेच्छाविषयार्थ हेतुत्वादित्यर्थः। तथा च साधनव्यापकत्वादनुपाधित्वमिति भावः।

साध्याव्यापकत्वमप्याह **भ्रान्तेति**। भ्रमप्रवृत्तस्पन्दस्येष्टरजताप्रापकत्वादनिष्ट शुक्त्यपरीहारकत्वाच्च तत्र साध्याव्यापकत्वादित्यर्थः। न च रजतत्वेनेच्छाविषयस्य शुक्तेः प्रापकत्वमस्त्येवेति वाच्यम्। येन रूपेणेष्टं तद्रूप्येण प्राप्तेर्विवक्षितत्वादिति भावः। **मृतेति**। वाय्वादिना मृतशरीरक्रियायां साध्याव्याप्तेरित्यर्थः। एतच्च समव्याप्तोपाध्यभिप्रायेण। मृतेत्युपलक्षणं, जीवशरीरस्यापि वायुवशात् क्रियायां तथात्वमिति भावः। विषमव्याप्तोपाधिपक्षे तु शरीरावयवक्रियायां साध्याव्यापकत्वं

---

**मकरन्दः**– **साधनव्यापकत्वादिति**। न च कर्म्ममात्रस्य तत्प्रयत्नजन्यत्वेऽपि तत्संयोगसमवायिकारणत्वे मानाभाव इति वाच्यम्। यः स्पन्द इत्यादिप्रागुक्त व्याप्तेस्तथात्वादिति भावः। मृतशरीरे क्रियैव कथमित्यत आह **वाय्वादिनेति**। तन्नोदनादिनेति भावः। इदमपीत्युपलक्षणं, *त्वन्मतेने*त्यपि द्रष्टव्यम्। मन्मते तत एव साध्यापत्तेरिष्टत्वात्

नेत्रस्पन्दादेश्चेतनाधिष्ठानाभ्युपगमप्रसङ्गात्। स्पर्शवदद्रव्यान्तराप्रयोगे सतीति चेन्न। ज्वलनपवनादौ तथाभावाभ्युपगमापत्तेः। शरीरस्य स्पर्शवदद्रव्यान्तरा प्रयुक्तस्येति चेन्न। चेष्टयैव शरीरस्य लक्ष्यमाणत्वात्। सामान्यविशेषश्चेष्टात्वं, यत उन्नीयते प्रयत्नपूर्विकेयं क्रियेति चेन्न। क्रियामात्रेणैव तदुन्नयनात्। भोक्तृबुद्धिमत्पूर्वकत्वं यत इति चेत्, तर्हि तद्विश्रान्तत्वमेव तस्य। न चैतावतैव क्रियामात्रं प्रत्यचेतनमात्रस्य

**आमोदः**- नेत्रस्पन्दादेरिति। वायुमात्रकृतस्येत्यर्थः। स्पर्शवद्द्रव्यान्तराप्रयुक्त-क्रियात्वमुपाधिरित्याह स्पर्शवदिति। नेत्रक्रिया च स्पर्शवता वायुना क्रियत इत्यर्थः। ज्वलनपवनक्रिययोरदृष्टवदात्मसंयोगासमवायिकारणकयोरपि त्वन्मते चेतनाधिष्ठानप्रसङ्गादित्यपि समव्याप्तोपाध्यभिप्रायं स्पर्शवद्द्रव्यान्तरा-प्रयोज्यशरीरक्रियात्वमुपाधिमाशङ्कते शरीरस्येति। ज्वलनादिक्रियाव्यावर्तनाय, स्पर्शवदित्यादि वा नेत्रस्पन्दादिव्यावर्तनाय। अत्रान्योन्याश्रयमाह चेष्टयैवेति। शरीरावयवक्रियायां साध्याव्यापकत्वमत्रापि द्रष्टव्यम्। क्रियामात्रेणैवेति। स्वमताभिष्टम्भेन यत इति। उन्नीयत इत्यनुषङ्गः। तर्हि या चेष्टा बुद्धिमत्पूर्विका इति विशेषव्याप्तावपि या क्रिया बुद्धिमत्पूर्विकेति सामान्यव्याप्तिबलात् परमाण्वादिक्रियायां बुद्धिमत्पूर्वकत्वं स्यादेवेत्याह तर्हीति।

**प्रकाशः**-मन्तव्यम्। नेत्रेति। इदमपि दूषणं समव्याप्तोपाधिपक्षे। विषमव्याप्ते तु करादिक्रियायां साध्याव्यापकम्। स्पर्शवदिति। नेत्रादिस्पन्दनन्तु स्पर्शवद्वायुनोदनजन्यमिति नोक्तदोष इत्यर्थः। ज्वलनेति। *त्वन्मते* ज्वलनादिक्रिया न प्रयत्नजन्या, किन्त्वदृष्टवदात्मसंयोगजन्येत्यतस्तत्रापि समव्याप्तोपाधिपक्षे साध्यापत्तिरित्यर्थः। चेष्टयैवेति। चेष्टाश्रयः शरीरमिति लक्षणपक्षेऽन्योन्याश्रय इत्यर्थः। लक्षणान्तरे तु करादिक्रियायां साध्याव्याप्तिरिति भावः। सामान्येति। अतो नोक्तदोष इति भावः। तत्र मानमाह यत इति। क्रियामात्रेणेति। क्रियामात्रस्यैव मया प्रयत्नजन्यत्वानुमापकत्वाङ्गीकारादिति न तेनैषा जातिः सिद्ध्यतीत्यर्थः। विशेषस्येति। क्रियाप्रयत्नयोः सामान्यतः कार्यकारणभावनिश्चये साध्याव्यापकत्वमावश्यक-मिति भावः। यद्वा प्रयत्नवदात्मसंयोगजसंयोग एव साध्याव्यापकत्वमिति भावः।

**मकरन्दः**- त्वन्मत इति। यद्यपि सत्यन्तं शरीरगर्भोपाधिविशेषणमिति ज्वलनक्रियायां तदभावादत्रोक्तिसम्भवाभावस्तथापि तद्गर्भतायामिदं, तद्गर्भत्वेऽन्योन्याश्रय इति विकल्प्य दूषणे तात्पर्यम्।

चेतनाधिष्ठानेन व्याप्तिरपसार्यते, विशेषस्य विशेषं प्रति प्रयोजकतया सामान्यव्याप्तिं प्रत्यविरोधकत्वात्। अन्यथा सर्वसामान्य-व्याप्तेरुच्छेदादित्युक्तम्।

एतेनाशरीरत्वादिना सत्प्रतिपक्षत्वमपास्तम्। अत्राप्यागमसंवादः -

''यदा स देवो जागर्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति।। (मनु. १।५२)

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा।। (महा.भा. वनपर्व ३०।२८)

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च''।। इत्यादि।
(भगवद्गीता ९।१०।९।१९।)

अत्र जागरस्वापौ सहकारिलाभालाभौ। ईश्वरप्रेरणाया

---

आमोदः- चेष्टामात्रविश्रान्तत्वमेव भोक्तृबुद्धिमत्पूर्वकत्वस्येत्यर्थः।

ननु परमाणवो न चेतनाधिष्ठिताः प्रवर्तन्ते शरीरत्वादिति सत्प्रतिपक्षः स्यादित्यत आह एतेनेति। सामान्यव्याप्तौ बाधकाभावेनेत्यर्थः। जागर्ति सिसृक्षावान् भवतीत्यर्थः। जगत् परमाणुरूपं चेष्टते क्रियावद् भवतीत्यर्थः। स्वपिति सञ्जिहीर्षुर्भवति। निमीलति निष्क्रियं भवति इत्यर्थः। जनयतीति जन्तुः परमाण्वादिः, स चाचेतनः। तथा च चेतनापेक्षास्यावश्यकी। सुखदुःखाभ्यां प्रवृत्तिनिवृत्ती लक्ष्येते तज्ज्ञानाधीनत्वात् तयोः। मध्याध्यक्षेणेति। मयाधिष्ठात्रा इत्यर्थः प्रकृतिर्मूलकारणं परमाणुः, सूयते आरभते। सचराचरमिति। चरेण जङ्गमेन सह वर्तमानं सचरं स्थावरमित्यर्थः। अन्यत्रापि शक्तिं दर्शयति तपामीति। वर्षातपयोरहमेव कर्ता। वर्षं निगृह्णामि अवग्रहो मदधीन एवेत्यक्षरार्थः। तात्पर्यं तु स्फुटयिष्यति सहकारीति। सिसृक्षासञ्जिहीर्षे सहकारिलाभालाभौ'।

---

प्रकाशः- ननु परमाणवो न चेतनाधिष्ठिताः प्रवर्त्तन्ते शरीरेतरत्वादिति सत्प्रतिपक्षता स्यादित्यत आह - एतेनेति। शरीरेतरक्रियायाश्चेष्टात्वाभावाद्भोक्तृ-प्रयत्नजन्यत्वं निवर्त्तते, क्रियामात्रे तु प्रयत्नजन्यत्वं स्यादेवेत्यर्थः। 'यदा स देव' इत्यादि *परकीयविचारे* आगमविरोधप्रदर्शनम्। अध्यक्षेण अधिष्ठात्रा प्रकृतिः परमाणुः।

मज्ञत्वमप्रयतमानत्वञ्च हेतू दर्शितौ परमाण्वादिसाधारणौ। स्वर्गश्वभ्रे चेष्टानिष्टोपलक्षणे। एतदेव सर्वाधिष्ठानमुत्तरत्र विभाव्यते, मयेत्यादिना। न केवलं प्रेरणायामहमधिष्ठाता, अपि तु प्रतिरोधेऽपि। यो हि यत्र प्रभवति, स तस्य प्रेरणावद्धारणेऽपि समर्थः। यथार्वाचीनः शरीरप्राणप्रेरण-धारणयोरिति दर्शितं तपामीत्यादिना।

धृतेः खल्वपि। क्षित्यादि ब्रह्माण्डपर्यन्तं हि जगत् साक्षात् परम्परया वा विधारकप्रयत्नाधिष्ठितं, गुरुत्वे सत्यपतनधर्मकत्वात्, वियति विहङ्गमशरीरवत्, तत्संयुक्तद्रव्यवच्च। एतेनेन्द्राग्नियमादिलोकपाल प्रतिपादका अप्यागमा व्याख्याताः। सर्वाविशनिबन्धनश्च सर्वतादात्म्य व्यवहारः, 'आत्मैवेदं सर्वमि'ति। यथैक एव मायावी अश्वो, वराहो, व्याघ्रो, वानरः, किन्नरो, भिक्षुस्तापसो, विप्र इत्यादि।

---

आमोदः- अप्रयतमानत्वञ्चेति। ईशिता यत्नः, अनीशोऽयतमानः, इष्टानिष्टे ईश्वरस्यैव, तेनेश्वरस्य यदिष्टं तद् गच्छति। तदारभत इत्यर्थः। अनिष्टं गच्छति ततो निवर्तत इत्यर्थः। धारकस्य प्रयत्नः, धारको वा प्रयत्नः। परम्परयेत्यत्र दृष्टान्तस्तत्संयुक्तद्रव्यवदिति। एवं सति च क्षित्यादिकं प्रत्यक्षप्रतिबद्धपतनम्, गुरुत्वे सति अपातिद्रव्यत्वादिति मानार्थः। कण्ठधृतवस्त्रादौ व्यभिचारवारणाय परम्परयेति। ननु लोकानां धृतिहेतवो लोकपाला एव न त्वीश्वर इत्यत आह एतेनेति। ईश्वरस्यैव साक्षाद्धारकत्वपरम्पराधारकत्वव्युत्पादनेनेत्यर्थः। यमादयोऽपि जगद्धारणे द्वारभूता इत्यर्थः। नन्वेवं सर्वतादात्म्यप्रतिपादकागमविरोधः स्यादित्यत आह सर्वाविशेति। सर्वत्रावेशेन प्रयत्नेनाधिष्ठानमस्येत्युपदर्शनार्थत्वात् तस्येत्यर्थः। *'आत्मैवेदं ब्रह्मैवेदं सर्वमि'*त्यागमोऽपि, अन्यथास्य सकलाभेद-प्रतिपादकत्वे प्रत्यक्षबाधः स्यादिति भावः। यद्वा, इन्द्रादिशरीरमाविश्य सर्वमिदमीश्वर एव धारयतीत्याह एतेनेति। अत्रानुरूपं निदर्शनमाह यथेति।

---

प्रकाशः- क्षित्यादीति। क्षित्यादिकं प्रयत्नप्रतिबद्धपतनं गुरुत्वे सत्यपातित्वादित्यर्थः। विहगादिसंयुक्तद्रव्यान्तरेण व्यभिचारनिरासाय तत् साध्येऽन्तर्भावयति साक्षात् परम्परया वेति। तत्र दृष्टान्तमाह तत्संयुक्तेति। एतेन धारकप्रयत्नधृतत्वव्युत्पादनेन। व्याख्याताः, मुख्यार्थतयेति शेषः। नन्विन्द्रादिदेवताभेदप्रतिपादकागमस्य मुख्यार्थतायामभेदप्रतिपादकागमविरोध इत्यत आह सर्वाविशेति। आवेशो ज्ञानादिमत्संयोग इति वक्ष्यते।

अदृष्टादेव तदुपपत्तेरन्यथासिद्धमिदमिति चेत्; तद्भावेऽपि प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि स्थितिं प्रति कारणत्वात्। कारणैकदेशस्य च कारणान्तरं प्रत्यनुपाधित्वात्। उपाधित्वे वा सर्वेषामकारणत्वप्रसङ्गात्। शरीरस्थितिरेवं, न त्वन्यस्थितिरिति चेन्न। प्राणेन्द्रिययोः स्थितेरव्यापनात्। प्राङ्न्यायेनापास्तत्वाच्च। अत्राप्यागमः।

'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' (बृह०उप० ३।८।९।) इति।

प्रशासनं दण्डभूतः प्रयत्नः।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'।। (भ.गीता १५।१७)

इति स्मृतिः। अत्रोत्तमत्वमसंसारित्वं, सर्वज्ञत्वादि च। परमत्वं सर्वोपास्यता। 'लोकत्रयमि'ति सर्वोपलक्षणम्। आवेशो ज्ञानचिकीर्षा प्रयत्नवतः संयोगः। भरणं धारणम्। अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम्। ऐश्वर्यं सङ्कल्पाप्रतिघात इति। एतेन कूर्मादिविषया अप्यागमा व्याख्याताः।

---

आमोदः- तत्सद्भावेति। नादृष्टं दृष्टघातकमित्युक्तत्वादित्यर्थः। सर्वेषामिति। एकेनान्यस्यान्यथासिद्धशङ्काग्रस्तत्वादित्यर्थः। एवमिति। प्रयत्नप्रतिबद्धगुरुत्वेत्यर्थः। यत्र प्रयत्नप्रतिबन्धागुरुत्वं तत्र शरीरत्वमित्यत्र साध्याव्यापकत्वमाह प्राणेति। शरीरावयवेदन्तादौ च साध्याव्यापकत्वम्। प्राङ्न्यायेनेति। शरीरपदेनात्र साक्षात्प्रयत्नाधिष्ठेयत्वं वा विवक्षितमिन्द्रियाश्रयत्वं वा भोगायतनत्वञ्चेत्यर्थः। यद्वा, विशेषस्तु विशेषवानित्यादिनेत्यर्थः। अक्षरस्य नित्यस्य, द्यौः सुरलोकः, दण्डभूत इत्यभिधानं 'प्रशासन पदार्थतया यत्नमात्रं तु विवक्षितम्। उत्तम-परमपदयोरर्थं भेत्तुमाह अत्रेति। सर्वोपलक्षणमिति। अन्यथा एकादशभुवनानामधार्यत्वमन्यधार्यत्वं व स्यादिति भावः। बिभर्तीति। प्रकृत्यर्थं प्रकृतार्थपरतया व्याचष्टे-भरणमिति। उत्तमपदादेव नित्यत्वे लब्धेऽव्ययपदस्यैव वैयर्थ्यमाशङ्क्याह-अव्ययत्वमिति। संयोगादि शून्यत्वमनुपपन्नमत आह विशेषेति परमपदेनोत्तमपदेन वा ऐश्वर्ये लब्धे तदुपादानवैयर्थ्यमाशङ्क्याह ऐश्वर्यमिति। एतेनेति। कूर्मादिशरीरपरिग्रहेण ईश्वरस्यैव क्षित्यादिधारकत्वादित्यर्थः।

---

प्रकाशः- तद्भावेऽपीति। पतनप्रतिबन्धकसंयोगभेदः स्थितिः। अत एव वायुसंयोगादाकाशपत्रस्थितिवत् सा स्यादित्यपास्तम्। अनुपाधित्वादिति। साधनव्यापकत्वादित्यर्थः। प्राङ्न्यायेन, विशेषश्च विशेषवानिति न्यायेनेत्यर्थः।

**संहरणात् खल्वपि। ब्रह्माण्डादि द्व्यणुकपर्यन्तं जगत्, प्रयत्नवद्विनाश्यं विनाश्यत्वात्, पाट्यमानपटवत्। अत्राप्यागमः –**

**'एष सर्वाणि भूतानि समभिव्याप्य मूर्तिभिः।**
**जन्मवृद्धिक्षयैर्नित्यं सम्भ्रामयति चक्रवत्।।**

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकीम्।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्'।। ( भ.गी. ९।७ )**

**इत्यादि। एतेन रौद्रमंशं प्रतिपादयन्तोऽ*प्यागमा* व्याख्याताः।।४।।**

---

**आमोदः– संहरणादिति। प्रयत्नवद्विनाश्यमिति।** तथा चार्वाचीनस्य तादृशद्वेषाभावे पुरुषधौरेयसिद्धिरित्यर्थः। तथा च प्रयोगः–ब्रह्माण्डादि स्वजनकप्रयत्न समानकालीनचरमकारणकनाशप्रतियोगिजन्यत्वात्, तत्कालघटितविघटित घटवदिति। अन्येषां पक्षसमत्वादेव न व्यभिचारः। **मूर्तिभिरिति।** रुद्रादि-मूर्तिभिरित्यर्थः। **संभ्रामयतीति** उत्पाद्य विनाशयति विनाश्योत्पादयति इत्यर्थः। **सर्वभूतानीति।** प्रलयावस्थायां परमाणुमात्रविशिष्टानीत्यर्थः। **प्रकृतिमिति।** यामादिकारणमाहुस्तां सिसृक्षां यान्ति, पुनः सर्गायापेक्षन्ते इत्यर्थः। **विसृजामि** सर्गानुकूलानि करोमीत्यर्थः। **एतेनेति।** ईश्वरस्यैव संहारकर्तृत्वप्रतिपादनेनेत्यर्थः। **व्याख्याताः** ईश्वरपरतया।४।

---

**प्रकाशः–** किमिदं शरीरत्वं यत्साक्षात्प्रयत्नाधिष्ठितत्वे परमाणूनां प्रसज्ज्यते इत्यादिना वेत्यर्थः। धृत्यादेरित्यादिपदसंग्राह्यमाह **संहरणादिति। ब्रह्माण्डादीति।** ब्रह्माण्डादिकं स्वजनकप्रयत्नसमानकालीनचरमकारणनाशप्रतियोगीति साध्यार्थः। **सर्वभूतानीति।** परमाणुमात्रावशिष्टानीत्यर्थः।

---

**मकरन्दः–** ननु साक्षात् परम्परया वेति न समुच्चयः, एकत्रोभयथाधिष्ठानाभावात्। प्रत्येकगर्भसाध्ये च व्यभिचार इत्यत आह **प्रयत्नप्रतिबद्धपतनमिति।** एतेन मूले व्यर्थविशेषणमपि सूचितम्। **मुख्यार्थतयेति शेष इति।** धारकप्रयत्नात्तदाश्रयाच्च भेदसिद्धावद्वैतनिरासे इन्द्रादि देवतानां परस्परभेद-प्रतिपादकागमा मुख्यार्था एवेत्यर्थः। **आवेश इति।** ज्ञानादिमता ईश्वरेण संयोगः सम्बन्धः साक्षात्परम्परासाधारण इत्यर्थः। **वक्ष्यते इति।** यो लोकत्रय-माविश्येत्यत्रावेशपदव्याख्यानावसरे मूल एव। **अत एवेति।** प्रयत्नान्वय-व्यतिरेकानुविधानेन स्थितिं प्रति तद्धेतुत्वादेवेत्यर्थः। नन्वदृष्टद्वारा अस्मदादि-नाश्यत्वेनार्थान्तरमित्यनुशयादाह **स्वजनकेति। स्वजनकप्रयत्नेत**

पदात् खल्वपि –

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत्।।५।।

पदशब्देनात्र पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति वृद्धव्यवहार एवोच्यते। अतोऽपीश्वरसिद्धिः। तथा हि – यदेतत् पटादिनिर्माणनैपुण्यं कुविन्दादीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रमव्यवहारश्च बालानां, स सर्वः स्वतन्त्रपुरुषविश्रान्तो, व्यवहारत्वात्, निपुणतरशिल्पि निर्मितापूर्वघटघटनानैपुण्यवत्, चैत्रमैत्रादिपदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्चेति।

---

आमोदः– ननु घटादिनाश एव प्रयत्नपूर्वको न तु ब्रह्माण्डनाशोऽपीत्यत्र 'विशेषस्तु विशेषवान्', न तु सामान्यव्याप्तौ विशेषस्योपाधित्वं धूमानुमानादिविप्लवप्रसङ्गादिति यत् पूर्वमुक्तं तदेतद्वर्तिष्यमाणहेतुष्वप्यतिदिशति कार्यत्वादिति।

यथा धृतिविनाशयोः कार्यकारणभावो निरुपाधित्वग्राहकः, एवं पदस्यापि व्यवहारस्यापि न त्वादिमत्वमुपाधिः स्यादत आह विच्छेदेनेति। प्रलये विच्छेदेन प्रयोज्यप्रयोजकवृद्धाभावात्। घटादिनिर्माणे घटादिपदव्युत्पत्त्यभावादाद्य व्यवहारप्रवर्तक ईश्वरोऽभ्युपगन्तव्य इत्यर्थः। 'पद'पदमीश्वरादिपरं सार्थमिति द्वितीयव्याख्यानाद्धेतुं व्युत्पादयति पदशब्देनेति। व्यक्तवाचो मनुष्याः, स्वातन्त्र्यञ्च पुरुषस्य तज्जातीयव्यवहारानुपजीवित्वम्। अत्र पक्षभेदेन दृष्टान्तात् क्रमेणाह निपुणतरेत्यादि। व्यवच्छेदेत्यादि प्रतीकं व्याचष्टे।

---

प्रकाशः– ननु नाशविशेष एव प्रयत्नपूर्वकोऽन्यस्त्वन्यथापि भविष्यतीत्याशङ्क्य वृत्तसमाधानं कुर्वाण एव ग्रन्थलाघवाय वर्त्तिष्यमाणेऽप्यतिदिशति कार्यत्वादिति। यथा धृतिविनाशयोः कार्यकारणभावो विपक्षे बाधको निरूपाधित्वग्राहकः। तथा पदस्यापि स एव तद्ग्राहक इत्यर्थः। न चादिमत्त्वमुपाधिः। प्रलये विच्छेदादनादित्वाभावेन साधनव्यापकत्वादित्याह विच्छेदेनेति। प्रत्ययादिहेतुष्वपि पूर्ववत् कार्यकारणभाव एव विपक्षबाधक इत्यर्थः।

व्यक्तवाचो मनुष्याः। स्वतन्त्रेति। तज्जातीयव्यवहारानुपजीवित्वं पुरुषस्य स्वातन्त्र्यम्। साध्येषु क्रमेण दृष्टान्ताः– निपुणेत्यादि।

---

मकरन्दः– समानकालीनं चरमकारणं यस्य नाशस्य तत्प्रतियोगीत्यर्थः। अदृष्टद्वारकप्रयत्नस्यापि कालादिकारणसमानकालीनतयाऽर्थान्तरतादवस्थ्यमत उक्तं चरमेति। कालीनादिसमानकालीनत्वमादायार्थान्तरत्वमत आह प्रयत्नेति।

आदिमान् व्यवहार एवम्, अयं त्वनादिरन्यथापि भविष्यतीति चेन्न। तदसिद्धेः। आदिमत्तामेव साधयितुमयमारम्भः। न चैवं संसार स्यानादित्वभङ्गप्रसङ्गः, तथापि तस्याविरोधात्। न हि चैत्रादिव्यवहारो ऽयमादिमानिति भवस्याप्यनादिता नास्ति। तदनादित्वे वा न चैत्रादिपदव्यवहारोऽप्यादिमानिति। अस्त्वर्वाग्दर्शी कश्चिदेवात्र मूलमिति चेन्न। तेनाशक्यत्वात्। कल्पादावादर्शाभासस्याप्यसिद्धेः। साधितौ च सर्गप्रलयौ।

ननु व्यवहारयितृवृद्धः शरीरी समधिगतो, न च ईश्वरस्तथा, तत्कथमेवं स्यात्। न, शरीरान्वयव्यतिरेकानुविधायिनि कार्ये तस्यापि तद्वत्त्वात्।

---

आमोदः–अनादित्वमुपाधिमाशङ्कते आदिमानिति। अन्यथापीति। स्वतन्त्रपुरुष-मन्तरेणापीत्यर्थः। तद्सिद्धेरिति। अनादित्वासिद्धेरित्यर्थः। स्वतन्त्रपुरुषाधीनत्वे नादिमत्तैव सेत्स्यतीत्याह आदिमत्तामेवेति। न त्वपसिद्धान्त इत्यत आह न चैवमिति। तथापीति। संसारानादित्वेऽपि प्रकृतव्यवहारस्यादिमत्त्वाविरोधादित्यर्थः। यद्वा, प्रकृतव्यवहारस्यादिमत्त्वेऽपि संसारस्यानादित्वाविरोधादित्यर्थः। सर्गध्वंस व्याप्यप्रागभावप्रतियोगित्वं संसारानादित्वम्। प्रकृतव्यवहारस्य च स्वतन्त्र पुरुषाधीनत्वमादिमत्त्वमिति न विरोध इति भावः। एतदेव दृष्टान्तेनोपपादयति न हीति। प्रकृतहेत्वन्यथासिद्धिं शङ्कते अस्त्विति। लिप्यादिमूलमादर्शः। ननु यदि प्रलयेन विच्छेदः स्यात् तदादर्शाभावः स्यात्। नत्वेवमत आह साधिताविति। अस्मदाद्यदृष्टाधीनमीश्वरस्यापि शरीरमित्याह शरीरेति।

---

प्रकाशः- आदिमानिति। सादिव्यवहारत्वमुपाधिरित्यर्थः। अन्यथापीति। स्वतन्त्रपुरुषं विनापीत्यर्थः। तथापीति। पूर्वपूर्वसर्गेऽपि तज्जातीयव्यवहारस्येश्वर-पूर्वकत्वादित्यनादित्वं न विरुद्ध्यते इत्यर्थः। इदानीन्तनापूर्वव्यवहारस्य सादित्वेऽपि न भवस्यानादित्वं हीयते इत्याह न हीति। तदनादित्वे इत्यत्रापि न हीत्यनुषज्ज्यते। आदर्शेति। यद्व्यवहारं दृष्ट्वा व्यवह्रियते, सोऽपि नास्तीत्यर्थः। शरीरान्वयेति। ईश्वरस्यादृष्टाभावेऽपि तच्छरीरसाध्यहेतुकास्मदादिभोगसम्पादकादृष्टादेवेश्वरस्य शरीरोत्पत्तिरिति भावः।

---

मकरन्दः- उदासीनप्रयत्नसिद्ध्याऽर्थान्तरमत उक्तं स्वजनकेति। *केचित्तु* उदासीनसिद्धावप्रयोजकत्वमिति विपक्षबाधकसूचनाय तदित्याहुः। स्वपदं चरमकारणपरं ध्वंसपरं वा। न चैवं साध्याप्रसिद्धिः, अस्मदादिप्रयत्नस्यैव दृष्टान्तत्वात्। तन्नाशचरमकारणस्य

गृह्णाति हि ईश्वरोऽपि कार्यवशाच्छरीरमन्तरान्तरा, दर्शयति च विभूतिमिति। अत्राप्यागमः –

'पिताऽहमस्य जगतो माता धाता पितामहः' ( भगवद् गीता ९।१७ )

तथा – 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः।।

उत्सीदेयुरमी लोका न कुर्यां कर्म चेदहम्'
( भगवद् गीता ३।२३-२४। ) इति।

एतेन 'नमः कुलालेभ्यः, कर्मरिभ्यः' इत्यादि यजूंषि बोद्धव्यानि।

**आमोदः**– अत्रोपजीव्यसंगतिमाह गृह्णाति हीति। विभूतिरिति। ब्रह्माद्यवतारादीत्यर्थः। पिताहमस्येति। जगतोऽभिनवपटादिनिर्माणरूपस्य पिता जनकः। माता पालकः, धाता रक्षकः, पितामहो जनकस्यापि जनक इत्यर्थः। यद्यहं कर्मण्यतन्द्रितोऽनलसो न वर्तेयं न स्याम, ततश्च यदि कर्म न कुर्यां, तदा अमी लोकाः लोक्यमाना व्यवहारा उत्सीदेयुरुच्छिन्ना भवेयुरित्यर्थः। ननु कथमेतावतैवोत्सीदेयुरत उक्तम् ममे'त्यादि। मदुपदिष्टेन वर्त्मना मनुष्या वर्तन्ते व्यवहरन्तीत्यर्थः। एतेनेति। कुलालादिदेहमुपगृह्य ईश्वर एव प्रवर्तक इति साधनेनेत्यर्थः। प्रत्ययादपीति। साध्यो विश्वविदव्ययः इत्यनुषङ्गः। लिङ्गादिप्रत्ययादिति व्याख्यानान्तराद् व्यवच्छेतुं विषयिणा विषयमुपलक्षयति प्रत्ययशब्देनेति। सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायः। आगमश्चासौ सम्प्रदायश्चेति आगमसम्प्रदायः। प्रवाहो वा सम्प्रदायः। कारणं

**प्रकाशः**– पिताहमस्येति। अस्य जगतोऽहमेव पित्रादिरित्यर्थः। यदि ह्यहमिति। यदि ह्यहं न वर्त्तेयं तदा लोक्यन्ते इति लोकाः प्रामाणिकव्यवहारा उत्सीदेयुरिति व्यवहितेनान्वयः। अत्र हेतुः – मम वर्त्मेति। एतेन–घटादिव्यवहारस्य स्वतन्त्रपुरुषपूर्वकत्वव्युत्पादनेन। कुलालादिदेहवत ईश्वरस्य तथाभावादित्यर्थः।

प्रत्ययपदं समाश्वासशक्तं तत्सम्बन्धि तद्विषयं प्रामाण्यं लक्षयतीत्याह – प्रत्ययशब्देनेति। तथा चेति। *आगमस्य* सम्प्रदायः प्रवाहः प्रमात्व प्रयोजकवाक्यार्थप्रमाणरूपगुणजन्यो यथार्थचिख्यापयिषादिवक्तृगुणजन्यो वा

**मकरन्दः**–स्वविषयकसाक्षात्कारस्य स्वजनकप्रयत्नेन विषयीभूतेन समानकालत्वात्। यत्नध्वंसकारणयत्नसमानकालीनस्वसाक्षात्कारहेतुक नाशप्रतियोगित्वाच्च। पटादिश्च पक्षसम इति न तेषु व्यभिचारः। पित्रादिरिति। व्यवहारयितृत्वादिति भावः। ननु मूले कारणपदवैयर्थ्यं, अदृष्टादिजन्यत्वमादायार्थान्तरं, मनसि व्यभिचारश्चेत्यन्यथा व्याचष्टे प्रमात्वप्रयोजकेति। एतच्च विपक्षबाधकसूचनाय, न तु साध्ये प्रविष्टम्, अत

प्रत्ययोऽपि। प्रत्ययशब्देनात्र समाश्वासविषयप्रामाण्यमुच्यते। तथा च प्रयोगः – आगमसंप्रदायोऽयं कारणगुणपूर्वकः, प्रमाणत्वात्, प्रत्यक्षादिवत्। न हि प्रामाण्यप्रत्ययं विना क्वचित् समाश्वासः। न चासिद्धस्य प्रामाण्यस्य प्रतीतिः। न च स्वतः प्रामाण्यमित्यावेदितम्। न च नेदं प्रमाणं, महाजनपरिग्रहादित्युक्तम्। न चासर्वज्ञो धर्माधर्मयोः स्वातन्त्र्येण प्रभवति। न चासर्वज्ञस्य गुणवत्तेति निःशङ्कमेतत्।

श्रुतेः खल्वपि। तथा हि – सर्वज्ञप्रणीता वेदाः, वेदत्वात्। यत्पुनर्न सर्वज्ञप्रणीतं नाऽसौ वेदो, यथेतरवाक्यम्। ननु किमिदं वेदत्वं नाम? वाक्यत्वस्यादृष्टविषयवाक्यत्वस्य च विरुद्धत्वात्। अदृष्टविषय प्रमाणवाक्यत्वस्य चासिद्धेः। मन्वादिवाक्ये गतत्वेन विरोधाच्चेति चेन्न।

आमोदः–यो गुणस्तत् पूर्वक इत्यर्थः। प्रत्यक्षादिवदिति। प्रत्यक्षे सन्निकर्षे अनुमाने यथार्थपरामर्शः। समाश्वास इदमित्थमेवेति संप्रत्ययः। स च प्रामाण्यग्रहाधीनः, प्रामाण्यस्योत्पत्तौ गुणो हेतुः, गुणश्च शाब्दे ज्ञाने वक्तृयथार्थज्ञानमित्यादि प्रमायाः परतन्त्रत्वादित्यादिना साधितमेवेत्यर्थः। ननु ज्ञानमात्रहेत्वधीनत्वं स्वतस्त्वमेव प्रामाण्यस्य, न तु गुणजन्यत्वमत आह न चेति। ननु वेदजन्या प्रमैव न भवतीत्यत आह न च नेदमिति। ननु तथाप्यस्मदादिगुणजन्यत्वं स्यादित्यत आह न चेति। स्वातन्त्र्येणेति। वेदं विना नास्मदादेर्धर्माधर्मज्ञानमित्यर्थः। हेतूकृतं वेदत्वमाक्षिपति नन्विति। अस्मदादिविसंवादिवाक्ये सर्वज्ञपूर्वकत्वं विरुद्धमदृष्टविषयकास्मदविसंवादिवाक्ये वा दृष्टविषयवाक्यत्वं विरुद्धमत आह वाक्यत्वस्येति। व्यभिचारितो व्यतिरेकी विरुद्ध इति सिद्धान्तानुसारात्।

प्रकाशः– प्रमाणशब्दत्वात् लौकिकप्रमाणशब्दवदित्यर्थः। लक्षणाबीजं सम्बन्धमाह न हीति। न च प्रमाणत्वमसिद्धं, प्रामाण्याज्ञाने पारलौकिके कर्मणि वेदबोधिते प्रेक्षावतां प्रवृत्त्यनुपपत्तेरित्याह न चेति। तथापि तेन वक्तृगुणपूर्वकेणैव भाव्यमित्यसिद्धमित्यत आह न च स्वत इति। तथापि वक्तुः सार्वज्ञ्यं कुतः सिद्ध्यतीत्याह न चेति। तथाहीति। यद्यपि परैः सर्वज्ञानङ्गीकारात्तत्प्रणीतत्वं परं प्रत्यसिद्धं, तथाप्यात्मत्वमसंसारिवृत्ति जातित्वात् पटत्ववत्। स चासंसारी किञ्चिद्वाक्यप्रणेता पुरुषत्वादिति साध्यप्रसिद्धौ, *वेदा* असंसारिपुरुषप्रणीता इति साध्यम्। न चास्मदाद्युच्चरिते वेदे व्यभिचारः। वेदज्ञानाजन्यज्ञानजन्यत्वस्य साध्यत्वादिति भावः। विरुद्धत्वादिति। प्रतारकवाक्यस्याप्यदृष्टविषयत्वादित्यर्थः। मन्वादीति। मन्वादिवाक्यस्याप्य –

अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीत वाक्यत्वस्य तत्त्वात्। न ह्यस्मदादीनां प्रत्यक्षादि मूलम्। नाऽपि भ्रमविप्रलिप्से, महाजन परिग्रहादित्युक्तम्। नापि परम्परैव मूलं, महाप्रलये विच्छेदादित्युक्तम्।

---

आमोदः- अनुपलभ्यमानमूलान्तरत्वे सतीति। मन्वादिवाक्यव्यवच्छेदाय। महाजनपरिगृहीतवाक्यत्वादिति। *सुगताद्यागम*व्यवच्छेदाय। प्रथमविशेषणा सिद्धिमाह न ह्यत्रेति। द्वितीयविशेषणासिद्धिमाह नापीति। अन्यथासिद्धिं निरस्यति नापीति। यद्यपि शाखासहस्रस्य प्रतिपादकत्वाभावात् वाक्यत्वमसिद्धम्। न च शाखासमुदायत्वमेव वेदत्वम्, शाखाया वेदनिरूप्यत्वेनात्माश्रयत्वात्। नापि वेदत्वं शब्दगतोऽपीति विशेषणं देवदत्तीयत्वाद्यनुमापकजातिसङ्करात्। स्वर्गकामादिपद समभिव्याहृतवाक्यत्वं च स्मृतावतिव्यापकत्वात् विरुद्धार्थम्, नापि शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं तत्। यद्यपि शब्दत्वं यत्किञ्चिच्छब्दे विरुद्धं, प्रमाणशब्दत्वं च तथा। ज्ञानाजन्यप्रमाणशब्दत्वमसम्भवि। वाक्यत्वेति विशेषणेऽपि तथा। जन्यवाक्यार्थज्ञानाजन्येत्यत्र जन्यपदव्यावर्त्याभावः।

---

प्रकाशः- दृष्टविषयप्रमाणत्वादित्यर्थः। अनुपलभ्यमानेति। मन्वादिवाक्ये च वेदस्यैव मूलान्तरस्योपलभ्यमानत्वादित्यर्थः। ननु वाक्यत्वमसिद्धम्, समुदायस्याप्रतिपादकत्वात्। न च शाखासमुदायो वेदः। तस्य वेदनिरूप्यत्वात्। नापि महाजनानां *वेदा*कारानुगतव्यवहाराद्वेदत्वं जातिः। देवदत्तीयत्वानुमापकशब्द-वृत्तिजातिभिः सङ्करप्रसङ्गात्। नापि स्वर्गकामादिशब्दः। *स्मृत्यादौ* तथात्वात्।

उच्यते। शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वम्। ईश्वरप्रमाया अजन्यत्वात्।

---

मकरन्दः- एवाग्रिमसाध्ये नोपात्तम्। अव्यापकत्वमादायार्थान्तरमित्यरुचेराह यथार्थेति। न चात्रापि दोषतादवस्थ्यम्, अस्मदादेरनुवक्तृतया वक्तृत्वाभावात्, स्वतन्त्रवक्तृपरत्वाद्वा। न चाप्रयोजकत्वम्, अन्यथा दुःखित्वमसंसारिवृत्ति धर्म्मत्वादित्यादिकमपि स्यादिति वाच्यम्। ईश्वरप्रतिपादकागमादेर्विपक्षबाधकस्य सत्त्वात्तत्र च तदभावात्। न चास्मदादीति। ननु तस्य पक्षत्वात् पक्षसमत्वाद्वा कथं तत्र व्यभिचारः। अन्यथा वेदज्ञानाजन्येत्यादिसिद्धान्ते का गतिः। यदि चाजन्यज्ञानमादाय तत्र

**अन्वयतो वा, वेदवाक्यानि पौरुषेयाणि, वाक्यत्वात्, अस्मदादिवाक्यवत्। अस्मर्यमाणकर्तृकत्वान्नैवमिति चेन्न। असिद्धेः।**

**आमोदः**- शब्दजन्येति कृते प्रत्यक्षदृष्टार्थवक्तृवाक्ये विरुद्धं जन्यप्रमित्यविषयार्थकत्वेऽसम्भवि। जन्यपदव्यावर्त्याभावश्च प्रमाया जन्यप्रमित्यविषयार्थकत्वे सतीत्यसम्भवि। शब्दतदुपजीविप्रमाणातिरिक्तत्वेन प्रमाणविशेषणान्नोक्तदोषः। तथापि प्रमेयत्वसामान्यलक्षणया प्रत्यासत्त्या यत् प्रत्यक्षं योगजधर्माधीनं च यत् प्रत्यक्षं तद्विषयकार्थत्वात् शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वं विशेषणं स्वरूपासिद्धम्। किंस्विद्विश्वस्य भेषजमित्यादौ भागासिद्धं वेदादर्थं प्रतीत्याऽस्मदाद्युदीरितवेदभागे शब्दजन्यवाक्यार्थज्ञानाजन्यमसिद्धमतो यथान्यायेन वा दुष्टं कृतमर्थन्यासेन। **वाक्यादिति**। संगृहीतं हेतुं व्याचष्टे **अन्वयतो वेति। पौरुषेयाणीति**। स्वजातीयोच्चारणानपेक्षोच्चरितजातीयानीत्यर्थः। तेन तदर्थधीजन्यत्वे तदुच्चारणधीजन्यत्वे वा साध्ये व्यापकजन्यत्वेन सिद्धसाधनम्, स्वतन्त्रपुरुषप्रणीतत्वे च साध्ये इदानीं पठ्यमाने वेदे भागासिद्धिः, तज्जातीयत्वे च साध्ये स्मृत्यादौ व्यभिचार इत्यपास्तम्।

**प्रकाशः**- वेदार्थस्यानुमानादिविषयत्वेऽप्यनुमानादे*र्वेदो*पजीवकत्वात्। *स्मृत्या*दीनां वेदसमानार्थत्वेऽपि शब्दजन्यधीजन्यत्वात्। *वेदा*दर्थं प्रतीत्य तत्प्रणयनात्।

वाक्यादिति सङ्गृहीतं हेतुं व्याचष्टे **अन्वयतो वेति**। ननु किं पौरुषेयत्वम्?। न तदर्थधीजन्यत्वं, तदुच्चारणधीजन्यत्वं वा। अध्यापकतदुभयजन्यत्वेन सिद्धसाधनात्। नापि स्वतन्त्रपुरुषप्रणीतत्वम्। इदानीं पठ्यमाने *वेदे* तदभावात्। न च स्वतन्त्रपुरुषप्रणीतजातीयत्वं साध्यम्। आद्यस्मृत्यादौ व्यभिचारात्। तज्जातीयस्य स्वतन्त्रपुरुषप्रणीतत्वाभावात्। नाप्यर्थं प्रतीत्य तदर्थपरतया प्रतिसन्धीयमानपदत्वं पौरुषेयत्वम्। अर्थज्ञानवताध्यापकेन सिद्धसाधनात्।

**मकरन्दः**- साध्यसत्त्वमिति व्यतिरेकित्वमविकलं, तदाश्रयपुरुषमादाय प्रकृतेऽपि तथेति तुल्यमिति चेत्, न। असंसारिपुरुषप्रणीतत्वं तत्कण्ठताल्वाद्युच्चरितत्वमभिप्रेत्य व्यभिचारदर्शनात्। एतदभिप्रायेणैव मूले *मन्वा*दिवाक्ये व्यभिचारोद्भावनम्, अन्यथा तस्यापि सर्वज्ञप्रणीतत्वेन तदभावात्। अन्यथा तु चिन्त्यम्। **वेदज्ञानाजन्येति**। अप्रसिद्धिवारणाय वेदज्ञानेति विशेषणम्। अस्मदाद्युच्चरितवेदस्यापि पक्षत्वादजन्यज्ञानमादाय साध्यसत्त्वात्तत्र न व्यभिचारः। न चैवं वेदत्वहेतुविवेचने व्यर्थविशेषणत्वम्। अखण्डाभावतया व्याप्तिग्रहे तदभावात्। वस्तुतस्तथा सति

'अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः।
प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते'।। ( तन्त्रवार्त्तिकम् १।३।७ )
'वेदान्तकृद्वेदविदेव चाहम्', इति स्मृतेः ( भगवद् गीता १५।१५ )।

'तस्माद् यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इत्यादिश्रुति पाठकस्मृतेश्च।

अर्थवादमात्रमिदमिति चेन्न। कर्तृस्मरणस्य सर्वत्राविध्यर्थत्वात्। तथा

आमोदः–*आद्यस्मृतिपुराणभारतेषु* स्वजातीयोच्चारणानपेक्षोच्चरितजातीयत्वसत्त्वान्न व्यभिचारः। ननु यदि वेदः सकर्तृकः स्यात् तदा *रघुकाव्यादौ कालिदासा*देरिव कर्तुः स्मरणं स्यात् इत्याह स्मर्यमाणेति। प्रकृतेऽपि कर्तुः स्मरणमस्त्येवेत्याह अनन्तरञ्चेति। श्रुतिपाठकेति। श्रुतिपाठकानां या *स्मृति*स्तत इत्यर्थः। तथा चेति। श्रुतेरित्येवार्थः पर्यवस्यति, श्रुत्युपाधिकस्मृतेश्चेति पाठे श्रुत्युपाधिका स्मृत्यर्थप्रतिपादिकेत्यर्थः। ननु कार्यान्वित एव वृद्धव्यवहाराधीना शक्तिरिति तदेव प्रमाणं न त्वर्थवादोऽपीत्याह अर्थवादेति। 'सदेव सौम्येदमग्र आसीत (छान्दोग्य०।६) रुद्रः किल रुरोद इत्याद्यर्थवादानां मुख्यार्थपरत्वे बाधकाभावात् अर्थवादानामपि प्रमाणत्वात्। अत एव 'यन्न दुःखेन सम्भिन्नम्' इत्यादीनामपि प्रमाणत्वमन्यथा स्वर्गपदशक्तिग्रहानुपपत्तेरित्यभि–प्रायवानाह कर्तृस्मरणस्येति।

प्रकाशः– अत्राहुः – सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं पौरुषेयत्वम्। आद्यस्मृतावपि तज्जातीयत्वान्न व्यभिचारः। यद्वा वेदत्वं सजातीयोच्चारणानपेक्षोच्चरितवृत्ति प्रमाणत्वावच्छेदकवाक्यधर्मत्वात्। स्मृतित्ववत्। यज्ञादिति। यज्ञो विष्णुः। ननु वेदे कर्त्तृस्मरणमर्थवादतया न मानम्, कार्यान्वितज्ञानजनकस्यैव पदस्य शक्तिग्रहादित्याह अर्थवादेति। 'आदित्यो वै यूप' इत्यादेरर्थवादस्य मुख्यार्थत्वे बाधकादप्रमाणत्वात्। स्तुतिपरत्वेऽपि प्रकृते बाधकानां निरासादविध्यर्थस्यापि मुख्यार्थत्वमेव। अन्यथा 'यन्न दुःखेन सम्भिन्न'मित्यादेरपि स्वार्थपरित्यागप्रसङ्गात्। *कालिदास*स्मरणेऽपि विध्यभावात् तत्काव्यस्याप्य–कर्त्तृकत्वप्रसङ्गात्। सकर्तृकत्वे वा तत्रैवायं हेतुरनैकान्त इत्याह कर्त्तृस्मरणस्येति।

मकरन्दः– व्यतिरेकिणि व्यर्थविशेषणत्वं नोद्भाव्येत। न चेष्टापत्तिः, कथकसम्प्रदायविरोधात्। नीलधूमस्यापि व्यतिरेकितया गमकत्वापत्तेः। यदि च व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति मतं, तदा प्रकृतेऽपि तुल्यमिति पूर्वास्वरसादेवान्वयतो वेति कल्पान्तरमिति। समुदायस्येति। पदवाक्यसमुदायविशेषो वेदः पक्षः, तत्र विशिष्टैकार्थप्रतिपादकत्वरूपस्य

चास्मरणे *कालिदासादेरस्मरणात्।* एवञ्च *कुमारसम्भवादेर-*कर्तृकत्वप्रसङ्गः। अनैकान्तिकत्वं वा हेतोः। प्रमाणान्तरागोचरार्थत्वात् सत्प्रतिपक्षत्वमिति चेन्न। प्रणेतारं प्रत्यसिद्धेः, अन्यं प्रत्यनैकान्तिकत्वात्। आकस्मिकस्मितबीजसुखानुस्मृतेः कारणविशेषस्यान्यं प्रति प्रमाणान्तरागोचरस्यापि तेनैव वक्त्रा प्रतिपाद्यमानत्वात्। वक्तैव प्रकृते

---

**आमोदः-** अनैकान्तिकत्वमिति। अस्मर्यमाणकर्तृकत्वं कुमारसम्भवादौ न चापौरुषेयत्वमित्यनैकान्तिकत्वमित्यर्थः। तत्स्मरणस्यार्थवादत्वेन त्वया प्रामाण्यानभ्युपगमादिति भावः। ननु वेदाः न पौरुषेयाः प्रमाणान्तरागोचरार्थत्वादिति व्यतिरेकिणा सत्प्रतिपक्षितमेतदित्याह प्रमाणेति। प्रणेतुरीश्वरस्य शब्दापेक्षया यत्प्रमाणान्तरं प्रत्यक्षं तद्गोचरार्थत्वं वेदेऽप्यस्तीति स्वरूपासिद्धिरित्याह प्रणेतारमिति। अनैकान्तिकत्वं स्फुटयति आकस्मिकेति। उत्तमाङ्गना काचित् स्वप्ने मया दृष्टेति वाक्ये पौरुषेयत्वे सत्यपि वक्तृभिन्नपुरुषप्रमाणान्तरा गोचरार्थत्वसत्त्वादनैकान्तिकत्वमित्यर्थः। वेदे पौरुषेयत्वानुमाने बाधमाह वक्तैवेति।

---

**प्रकाशः-** प्रमाणान्तरेति। *वेदा* न पौरुषेयाः प्रमाणान्तरागोचरार्थत्वात्, यन्नैवं तन्नैवम्, यथा मन्वादिवाक्यमित्यर्थः। यदि *वेद*प्रणेतृप्रमाणान्तरागोचरार्थत्वं हेतुः, तदा तत्प्रणेतुरीश्वरस्य प्रत्यक्षगोचरत्वादसिद्धिः। अथ यस्य कस्यापि प्रमाणान्त-रागोचरार्थत्वं, तदानैकान्तिकमित्याह प्रणेतारमिति। अनैकान्तिकत्वं स्पष्टयति आकस्मिकेति। दृष्टकारणोपहारं विना जातस्मितस्य यद्बीजं सुखानुस्मृतिरूपं कारणं तस्येत्यर्थः। सर्वज्ञो वेदवक्ता न सम्भावनास्पदम्, वाक्यार्थज्ञानसामग्रीरहि-तत्वादित्याह वक्तैवेति। ईश्वरो नातीन्द्रियार्थदर्शी पुरुषत्वात्, तज्ज्ञानं वा नातीन्द्रियविषयं ज्ञानत्वात्, तदिन्द्रियं वा नातीन्द्रियार्थग्राहि इन्द्रियत्वात्, तन्मनो

---

**मकरन्दः-** वाक्यत्वस्य समुदाये विरहादसिद्धिरित्यर्थः। ननु समुदितानि पदान्येव समुदायः, अतिरिक्तस्यानभ्युपगमात्। तत्र च प्रतिपादकत्वसत्त्वाद्वाक्यत्वम-प्रत्यूहमेव। अन्यथा वाक्यत्वमप्रसिद्धमेव स्यात्। प्रत्येकपदे वाक्यत्वाभावात्। समुदायस्याप्रतिपादकत्वात्। यदि च नैवं, तदा प्रमाणत्वस्यापि प्रतिपादकगर्भतया तद्गर्भसिद्धान्तलक्षणमपि भज्येतेति चिन्त्यम्। शब्दतदुपजीवीति *शब्दप्रकाशे* विपञ्चितम्। स्मृत्यादाविति। आद्यस्मृत्यादावित्यर्थः। एतदपि तज्जातीयत्वस्याभेदगर्भत्वविवक्षायामन्यथा सिद्धान्तेऽप्यगतेरिति ध्येयम्।

**न सम्भवति, हेत्वभावे फलाभावात्, चक्षुरादीनां तत्रासामर्थ्यात्, अस्मदादीन्द्रियवत्, मनसो बहिरस्वातन्त्र्यात्। न, चेतनस्य ज्ञानस्येन्द्रियस्य, मनसो वा पक्षीकरणे आश्रयासिद्धेः प्रागेव प्रपञ्चनात्। नित्यनिराकरणे चासामर्थ्यात्।**

---

**आमोदः**– स्वर्गापूर्वादिज्ञानवतो *वेदवक्तृत्वं* सम्भाव्येत, तच्च प्रकृतवक्तुर्नास्तीत्यर्थः। हेत्वभाव इति। स्वर्गापूर्वादिज्ञानहेत्वभावे ज्ञानरूपफलाभाव इत्यर्थः। हेत्वभावमेवाह चक्षुरादीनामिति। वेदवक्ता नातीन्द्रियार्थदर्शी पुरुषत्वात्। तज्ज्ञानं नातीन्द्रियविषयकं ज्ञानत्वात्। तदिन्द्रियं मनो वा नातीन्द्रियार्थदर्शी पुरुषत्वात्। तज्ज्ञानं नातीन्द्रिय-विषयकं ज्ञानत्वात्। तदिन्द्रियं मनो वा नातीन्द्रियार्थावगाहि इन्द्रियत्वात्, मनस्त्वाद्वेति। सिद्ध्यसिद्धिपराहतमिति पूर्वमेव प्रपञ्चितमित्याह चेतनस्येति। किञ्च सामग्री चेन्नास्ति तदा कार्यं तस्य ज्ञानं मास्तु, नित्यं तु स्यादेव इत्याह नित्येति।

---

**प्रकाशः**– वा नातीन्द्रिये प्रवर्त्तते मनस्त्वादित्यादयः प्रयोगाः प्रागेव निरस्ता इत्याह चेतनस्येति। अपि च सामग्र्यभावात् कार्यज्ञानाभावेऽपि अकार्यं ज्ञानं न निवर्त्तते इत्याह नित्येति।

---

**मकरन्दः**–प्रमाणतावच्छेदकेति। न चावच्छेदकत्वं यद्यन्यूनानतिरिक्तवृत्तित्वं तदाऽसिद्धिः, अनतिरिक्तवृत्तित्वमात्रञ्चेत्तदा पठ्यमानवेदत्वादौ व्यभिचार इति वाच्यम्। स्वसमानानुपूर्वीकसकलवाक्यवृत्तिधर्मत्वादित्यत्र तात्पर्यात्। न च विशेष्यभागस्यैव व्याप्यत्वं तावन्मात्रञ्च स्वरूपासिद्धमिति वाच्यम्। अखण्डाभाववदखण्डोपाधौ न व्यर्थत्वमिति मतेनोक्तत्वात्। यन्निष्ठा यन्निरूपितेति न्यायात्। अत एव प्रमेयत्वादेः शास्त्रे हेतुत्वेनाभिधानं प्रयोजनाभावान्नान्यत्र विशेषणप्रक्षेपः। अन्यथा अखण्डाभावे का गतिः। तत्रापि प्रतियोगिकोटावनेकविशेषणप्रक्षेपसंभवात्। अत एव भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति सकलभोगाधिकरणवृत्तित्वादित्यत्र भोगाधिकरणपदं सार्थकम्। यत्तु व्याप्त्याश्रयसंकोचकविशेषणस्य व्यर्थत्वं यथा नीलधूमे, न तु विकाशकस्य, यन्निष्ठा यन्निरूपिता इति न्यायेन तद्विशेषणं विना तन्निष्ठव्याप्तेरग्रहात्। प्रकृते च विशेष्यभागस्य न्यूनवृत्तित्वविशिष्टस्याधिकवृत्तित्वमिति तस्य विकाशकत्वमिति। तत् प्रमादविजृम्भितम्। व्याप्याश्रयस्यैवंविकाशेऽपि व्याप्त्याश्रयविकाशाभावात् तद्घटितोपाधेरेकत्वात्।

न च व्याप्याश्रयविकाशस्यापि न व्यर्थत्वं, तत्र यन्निष्ठेत्यादि न्यायस्याप्य-सम्भवेन मानाभावादिति। अन्यथा धूमालोकान्यतरत्वादावपि व्यर्थविशेषणत्वं न

**परमाण्वादयो न कस्यचित्प्रत्यक्षाः, तत्सामग्रीरहितत्वादिति चेन्न। द्रष्टारं प्रत्यसिद्धेः, अन्यं प्रति सिद्धसाधनात्। तथापि वाक्यत्वं न प्रमाणम्, अप्रयोजकत्वात्। प्रमाणान्तरगोचरार्थत्वप्रयुक्तं तत्र पौरुषेयत्वं, न तु वाक्यत्वप्रयुक्तम्। न, *सुगताऽऽद्यागमाना*मपौरुषेयत्वप्रसङ्गात्। प्रमाणवाक्यस्य सत इति चेन्न। प्रणेतृप्रमाणान्तरगोचरार्थत्वस्य साध्यानुप्रवेशात्। स्वतन्त्रपुरुषप्रणीतत्वं हि पौरुषेयत्वम्। अर्थप्रतीत्येकविषयौ हि विवक्षाप्रयत्नौ स्वातन्त्र्यम्।**

---

**आमोदः**–अतीन्द्रियार्थदर्शित्वं वक्तुरनुमानबाधितमित्याह **परमाण्वादय** इति। द्रष्टा यद्यनित्यज्ञानवान् नूनं तत्सामग्र्यस्त्येव इति स्वरूपासिद्धो हेतुरित्याह **द्रष्टार**मिति। ननु यत्र यत्र पौरुषेयत्वं तत्र तत्र प्रमाणान्तरगोचरार्थत्वं दृष्टं, प्रकृते च तथा नास्तीति पौरुषेयत्वं निवर्तत इत्युपाधिं शङ्कते **प्रमाणन्तरे**ति। मण्डलीकरणादिप्रतिपादकवाक्ये पौरुषेयत्वे साध्ये सत्यपि प्रमाणान्तरगोचरार्थत्वं नास्तीति साध्याव्यापकत्वमाह **सुगते**ति। पक्षधर्मावच्छिन्न साध्यव्यापकतामाह **प्रमाणस्ये**ति। प्रणेतृषु प्रमाणान्तरगोचरार्थत्वमेव पौरुषेयत्वं साध्यमिह विवर्जितं, न च साध्यमेवोपाधिर्भवितुमर्हति, सकलानुमानोच्छेदकत्वादित्याह **प्रणेत्रि**ति उपाधेः साध्यानुप्रवेशं स्फुटयितुमाह **स्वतन्त्रे**ति। तथापि कथं प्रमाणान्तरगोचरार्थत्वमुपाधिः साध्यमध्ये निविशते इत्याह **अर्थप्रतीती**ति। वाक्यप्रणयनानुकूलज्ञानेच्छाकृतिमत्त्वं स्वातन्त्र्यं, तथा च प्रमाणान्तरगोचरार्थत्वं साध्यप्रविष्टमेवेत्यर्थः।

---

**प्रकाशः**– उपाधिं शङ्कते **प्रमाणान्तरे**ति। अत्र साध्याव्यापकत्वमाह **सुगते**ति। पक्षधर्मावच्छिन्नसाध्यव्यापकत्वादुपाधित्वं स्यादित्याह **प्रमाणे**ति। **प्रणेत्रि**ति। साध्यादभिन्नत्वे साध्याव्यापकत्वाद् भेदनिबन्धनत्वाच्च व्याप्यव्यापकभावस्येत्यर्थः। प्रमाणान्तरगोचरार्थत्वेन शब्देतरप्रमाणगोचरार्थत्वं विवक्षितं, मानान्तरगोचरार्थत्वं

---

**मकरन्दः**– स्यात्। आलोकादिपदस्यायोगोलकादिव्याप्याश्रयविकाशत्वात्।

आकस्मिकञ्च तत्र बीजञ्चेति व्याहतमत आह **दृष्टे**ति। **साध्यादभिन्नत्वे** इति। यद्यप्यत्र नाभेदः, उपाधिभेदस्य स्फुटत्वात्। किञ्च पौरुषेयत्वस्य *सुगतागमाद*ावपि सत्त्वादन्यथा वाक्यत्वस्य तत्र व्यभिचारापत्तेरिदञ्च तद्व्याप्तमिति सर्वथा भेद एव, तथाप्येतदस्वरसादेव दोषान्तरदानमिति ब्रूमः। अन्यथा तु चिन्त्यम्। **शब्देतरे**ति। शब्दतदुपजीविप्रमाणेतरप्रमाणगोचरार्थत्वमित्यर्थः।

*मन्वादि*वाक्यस्यापौरुषेयत्वप्रसङ्गाच्च। तदर्थस्य शब्देतरप्रमाणा-गोचरत्वात्। प्रयुज्यमानवाक्येतरगोचरार्थत्वमात्रमिति चेन्न। तस्य वेदेऽपि सत्त्वात्। एकस्याप्यर्थस्य शाखाभेदेन बहुभिर्वाक्यैः प्रतिपादनात्। अस्त्वेवं, न तु तेषां मिथो मूलमूलीभाव इति चेन्न। उक्तोत्तरत्वात्।

संख्याविशेषात् खल्वपि। द्व्यणुकत्र्यणुके तावत् परिमाणवती, द्रव्यत्वात्। तच्च परिमाणं कार्यं कार्यगुणत्वात्। न च तस्य परमाणुपरिमाणं द्व्यणुकपरिमाणं वा कारणम्, नित्यपरिमाणत्वात्, अणुपरिमाणत्वाच्च।

---

**आमोदः**– किञ्च *त्वन्मते मन्वादि*वाक्यानां शब्देतरप्रमाणागोचरार्थानाम् अपौरुषेयत्वं स्यादित्याह मन्वादीति। ननु *मन्वादि*वाक्ये प्रमाणान्तरं वेदस्तद्गोचरार्थत्वमस्त्येवेति नोक्तोपाधिव्यावृत्तिरित्याह प्रयुज्यमानेति। एवं सति साधनाव्यापकत्वमुपाधेरित्याह तस्येति। एकस्याः शाखायाः प्रयुज्यमानायाः शाखान्तरगोचरार्थत्वसत्त्वादित्याह एकस्यापीति। ननु मूलभूतप्रमाणान्तर-गोचरार्थत्वमुपाधिः, स च वेदाद्व्यावृत्त एवेति क्व साधनव्यापकत्वमित्याह अस्त्वेवमिति। उक्तोत्तरत्वादिति। मूलभूतप्रमाणान्तरगोचरार्थस्य पौरुषेयत्वस्य साध्यत्वान्नोपाध्युपाधिमद्भाव इत्युक्तत्वादित्यर्थः। द्व्यणुकपरिमाणजनकं परमाणुद्वयगतं द्वित्वं द्व्यणुकत्रयगतञ्च त्रित्वं त्रसरेणौ महत्त्वजनकं तदुभयमप्यस्मदाद्यपेक्षाबुद्धिजन्यं न सम्भवतीति यदपेक्षाबुद्धिजन्यं स ईश्वर इति साधयितुं पीठमारचयति द्व्यणुकेति। कार्यगुणत्वादिति षष्ठीसमासः। अणुपरिमाणत्वादित्युभयत्र हेतुः, मनः –

---

**प्रकाशः**– वा, मूलभूतमानान्तरगोचरार्थत्वं वा?। आद्ये मन्वादीति। द्वितीयमाशङ्क्य निराकरोति प्रयुज्यमानेति। तृतीयं शङ्कते अस्त्वेवमिति। मूलमूलीभावः उपजीव्योपजीवक भावः। उक्तेति। प्रणेतृमूलभूतप्रमाणान्तरागोचरार्थत्वस्यासिद्धेरन्यं प्रत्यनैकान्तिकत्वादित्यादिनेत्यर्थः।

द्व्यणुकादिपरिमाणमनेकवृत्तिसङ्ख्याजन्यं, तस्याश्च द्वित्वादेरपेक्षाबुद्धित उत्पत्तिः, तदाश्रय ईश्वर इति साधयितुमाह – द्व्यणुकेति। कार्यगुणत्वादिति। कार्यवृत्तिगुणत्वादित्यर्थः। ननु द्व्यणुके परमाणुपरिमाणात् त्र्यणुके च द्व्यणुकपरिमाणादेव परिमाणोत्पादोपपत्तेः किं द्वित्वादिसङ्ख्ययेत्यत आह न चेति। आकाशपरिमाणवदिति शेषः। यदि च *परः* परममहत्परिमाणमेव न स्वीकुर्यात्, तदा हेत्वन्तरमाह अणुपरिमाणत्वादिति।

**अन्यथा अनाश्रयकार्योत्पत्तिप्रसङ्गात्। द्व्यणुकस्य महत्त्वप्रसङ्गाच्च, त्र्यणुकवदणवारभ्यत्वाविशेषात्। तत्र कारणबहुत्वेन महत्त्वे अणुपरिमाणस्यानारम्भकत्वस्थितेरणुत्वमेव महदारम्भे विशेष इत्यपि न**

**आमोदः**- परिमाणमत्र दृष्टान्तः। तच्च धर्मिग्राहकमानादणु च जनकत्त्वं चेति भावः। यदि नित्यं परिमाणमणुपरिमाणं व परिमाणमारभेत, तदा स्पर्शशून्यानामाकाशकालमनसां द्रव्याणामारम्भकाणामपि परिमाणमनाश्रयमेव परिमाणमारभेतेत्याह **अन्यथेति**। किञ्च त्रसरेणुमहत्त्वमणुत्वेनैव चेदुत्पाद्यं, तद परमाणुपरिमाणमपि द्व्यणुके महत्त्वमेवोत्पादयेत् इत्याह **द्व्यणुकस्येति**। ननु त्रसरेणौ कारणबहुत्वाधीनं महत्त्वं नाणुत्वाधीनमिति कथमविशेष इत्यत आह **कारणेति**। ननु चानित्यमणुत्वं महत्त्वारभते, न तु नित्यमपीत्याशङ्क्यनिराकरोति- **अणुत्वमिति**।

**प्रकाशः**-यद्यपि नात्र मनःपरिमाणं दृष्टान्तः, *परमते* मनसो विभुत्वात्। न चानारम्भकद्व्यणुकपरमाणुपरिमाणं दृष्टान्तः। तयोरपि कदाचिदारम्भकत्वात्। अवयवाणुपरिमाणस्य जनकत्वाभ्युपगमाच्च। अन्यथा नित्यवृत्तिसङ्ख्याया अप्यजनकत्वापत्तेः। तथापि प्रमाणबलेन मनसोऽणुत्वं साधयिष्यामीति तत्परिमाणमेव दृष्टान्त इति भावः।

**अन्यथेति**। कालादिमनसां परिमाणस्य परिमाणजनकत्वे तैर्द्रव्यैर्द्रव्यानारम्भादनाश्रयपरिमाणं जायेतेत्यर्थः। बाधकान्तरमाह **द्व्यणुकस्येति**। अणुपरिमाणं यदि त्र्यणुके महत्त्वारम्भकं, द्व्यणुकेऽपि स्यादविशेषादित्यर्थः। त्र्यणुकेऽपि वा द्व्यणुकवदणुत्वापत्तिरिति भावः। यदि च त्र्यणुकमहत्त्वारम्भकं बहुत्वं, तदा तत्रैवाणुत्वमनादृत्य बहुत्वसङ्ख्यया आरम्भकत्वसिद्धेर्द्व्यणुकपरिमाणस्यानारम्भकत्वं सिद्धमित्याह **तत्रेति**। ननु द्व्यणुकपरिमाणे काचिज्जातिरस्ति तद्विशिष्टाणुत्वं महत्त्वजनकमिति नोक्तदोष इत्यत आह **अणुत्वमेवेति**। एवं हि महत्त्वं महत्त्वारम्भकं न स्याद् व्यभिचारेण कारणत्वाभावादित्यर्थः। यद्वा किमणुत्वं महत्त्वमेव जनयति, क्वचिदणुत्वमपि वा? तत्राद्यमाशङ्क्य दूषयति **अणुत्वमेवेति**।

**मकरन्दः**-**यदि चेति**। अत्रेदं चिन्त्यम्। तदस्वीकारे दृष्टान्तान्तरं कर्तुमर्हति, न तु हेत्वन्तरम्। मनःपरिमाणदृष्टान्तत्वेन प्रथमहेतावप्युपपत्तेः। तस्माद् द्व्यणुकपरिमाणपक्षके प्रथमस्यासिद्धत्वमाशङ्क्य तदभिप्रायेण हेत्वन्तरम्। तत्र च प्रथमहेत्ववष्टम्भात् परमाणुपरिमाणमेव दृष्टान्तो मनः परिमाणं वेति मूलतात्पर्य्यं प्रतिभातीति। **तयोरपीति**। स्वरूपयोग्यत्वादित्यर्थः। यद्वा अनारम्भके तत्र मानाभावात्

**युक्तम्, महतो महदनारम्भप्रसङ्गात्। अणुत्वमहत्त्वयोर्विरुद्धतया एकजातीयकार्यानारम्भकत्वप्रसङ्गात्। बहुभिरपि परमाणुभिर्द्वाभ्यामपि द्व्यणुकाभ्यामारम्भप्रसङ्गाच्च। एवं सति को दोष इति चेत्, परमाणुकार्यस्य महत्त्वप्रसङ्गः। कारणबहुत्वस्य तद्धेतुत्वात्। अन्यथा द्वाभ्यां त्रिभिश्चतुर्भिरित्य**

---

**आमोदः**– तर्हि व्यभिचारान्महत्त्वं महत्त्वारम्भकं न स्यादित्याह **महत्** इति। ननु अणुत्वमहत्त्वाभ्यां महत्त्वमारभ्यतां, को दोष इत्यत आह **अणुत्वेति**। यदि वाणुत्वस्य बहुत्वसामानाधिकरण्यमात्रं महत्त्वारम्भे तन्त्रं, तत्राह **बहुभिरिति**। अनित्याणुत्वमात्रं चेन्महत्त्वारम्भे तन्त्रं, तत्राह **द्वाभ्यामिति**। यद्वा, परिमाणारम्भे यदि संख्या न तन्त्रं, तदाऽनियमः स्यादित्यर्थः। **एवं सतीति**। बहुभिः परमाणुभिर्महदारभ्यतां, को दोष इत्यर्थः। महत्त्वं प्रति बहुत्वं तन्त्रं, तथा च बहुभिः परमाणुभिरारम्भे भग्ने घटे कपालशर्कराद्युपलम्भो न स्यादिति भावः। **कारणबहुत्वस्य तद्धेतुत्वात्** महदारम्भहेतुत्वात्, तस्य च त्वया परमाणावभ्युपगमादित्यर्थः। नन्वणुत्वसमानाधि-करणं बहुत्वमप्यणुत्वमारभताम्। तथा च परमाणुकार्यस्य कुतो महत्त्वापत्तिरित्यत आह– **अन्यथेति**। द्वाभ्यामणुभ्यामणुद्रव्यमारभते, त्रिभिश्चतुर्भिरपि यदा तादृशमेवाणुद्रव्यमारभ्येत, तदा बहुत्वसंख्याया वैयर्थ्यमेव

---

**प्रकाशः**– अन्त्यं दूषयति **अणुत्वमहत्त्वयोरिति**। अणुत्वमहत्त्वयोर्विरुद्ध जातीय तयाऽन्योन्यपरिहारेण स्थितेर्व्यभिचारान्नैकमप्यारम्भकं स्यादित्यर्थः। ननु कारण भेदात् कार्यभेदः स्यादित्यत आह **बहुभिरपीति**। यदि न संख्या कारणं, किन्त्वणुपरिमाणमिति शेषः। **परमाणुकार्यस्येति**। कारणबहुत्वस्याप्यन्यत्र महत्त्वहेतुत्वकल्पनाद् द्व्यणुककार्यवत् परमाणुत्रयारब्धस्यापि बहुत्वहेतुक-महत्त्वोत्पादापत्तिरित्यर्थः। ननु परमाणुद्वयारब्धस्येवाणुत्रयारब्धस्याणुत्वमेव स्यादित्यत आह **अन्यथेति**। तथा सति त्रित्वादिसंख्या वैयर्थ्यापत्तिरणुद्वयारब्धा-पेक्षया तद्विशिष्टारब्धे विशेषाभावादित्यर्थः। प्रत्येकं

---

**मकरन्दः**– तयोरपि कदाचिदारम्भकत्वादित्यर्थः। द्व्यणुकादीनामारम्भकत्वनियमे चावयवपरिमाणतया तत्परिमाणस्यापि जनकत्वमेवेति न दृष्टान्तत्वमित्याह **अवयवेति**। यदि च तादृशस्यापि नित्यपरिमाणत्वेनैवाजनकत्वमिति दृष्टान्तत्वं तत्राह **अन्यथेति**। यद्यप्येतद्दूषणं मनःपरिमाणदृष्टान्तत्वपक्षेऽपि, तथापि तदग्रे परिहरिष्यतीति ध्येयम्। **किमणुत्वमिति**। एवकारोऽत्र भिन्नक्रमः। तेन किमणुत्वमेव

**नियमेनाप्यण्वारम्भे तद्वैयर्थ्यप्रसङ्गात्। अणुन एव तारतम्याभ्युपगमस्तु संख्यामवधीर्य न स्यात्। अस्तु महदारम्भ एव त्रिभिरिति चेन्न। महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमात्। तथापि वा तारतम्ये संख्यैव प्रयोजिकेति। न च प्रचयोऽपेक्षणीयः, अवयवसंयोगस्याभावात्।**

**तस्मात् परिमाणप्रचयौ महत एवारम्भकाविति स्थितिः। अतोऽनेकसंख्या परिशिष्यते। सा अपेक्षाबुद्धिजन्या, अनेकसंख्यात्वात्। न चास्मदादीनामपेक्षाबुद्धिः परमाणुषु सम्भवति। तत् यस्यासौ सर्वज्ञः।**

---

**आमोदः**– स्यात्, कार्ये विशेषानाधानादित्यर्थः। ननु कथं बहुत्वमतन्त्रं यावताणुद्वयापेक्षया ऽणुत्रयारब्धम् अणुतरम्, अणुचतुष्टयारब्धम् अणुतमं स्यादित्यत आह **अणुन एवेति**। एवं सति संख्यायाः परिमाणारम्भकत्वं *त्वया*ऽभ्युपगतमिति सिद्धं नः समीहितमिति भावः। **परमाणुकार्यस्य महत्त्वप्रसङ्ग** इति यदुक्तं तत्रेष्टप्रसङ्गमाह **अस्त्विति**। **त्रिभिरिति**। परमाणुभिरित्यर्थः। **महत इति**। घटादौ तथादर्शनादिति भावः। ननु सहचारमात्रमेतत्, न तु नियम इत्यत आह **तथापि चेति**। परमाणुभिरपि महद्द्रव्यारम्भे महत्तरतमादिभावेन यत् तारतम्यमुपलभ्यते तत्र परमाणुसंख्यैव तन्त्रं, महत्त्वप्रचययोरभावादित्यर्थः। ननु द्व्यणुके परमाणुप्रचयेन द्व्यणुकप्रचयेन च त्रसरेणौ परिमाणमारभ्यतां किं द्वित्वत्रित्वाभ्यामत आह **न चेति**। तत्र प्रचयाभावात् संख्यैव तन्त्रमित्यर्थः। **परिशिष्यत इति**। द्व्णुकत्र्यणुक-परिमाणारम्भायेति शेषः। स्वापेक्षितं रचिते पीठे तावदुपपादयति **सा चेति**।

---

**प्रकाशः**– व्यभिचारादकारणत्वञ्च स्यादिति भावः। नन्वणूनां संख्यावैचित्र्यमणु-परिमाणतारतम्यभेदसम्पादनोपयोगि परिमाणेऽवान्तरकारणभेदव्यङ्ग्यजातिभेदाच्च न व्यभिचार इत्यत आह **अणुन एवेति**। तथापि तारतम्ये संख्यैव प्रयोजिका, संख्याभेदं विना समुदाये भेदकान्तराभावादित्यर्थः। परमाणुकार्यस्य महत्त्वप्रसङ्ग इत्यत्रेष्टापत्तिमाह **अस्त्विति**। **त्रिभिः** परमाणुभिरित्यर्थः। **महत इति**। अनन्यथासिद्धान्वयव्यतिरेकाभ्यां तथैव कारणत्वनिर्णयादित्यर्थः। ननु द्व्यणुकादिपरिमाणस्य परिमाणाजन्यत्वेऽपि प्रचयजन्यत्वं स्यात्, तस्यापि महत्त्वे कारणत्वादित्यत आह **न चेति**।

---

**मकरन्दः**– महत्त्वं जनयतीत्यर्थः। तथा च महता महदनारम्भप्रसङ्गादिति घटते। मूलस्वरसोऽप्येवमेवेति *केचित्*। तृणारणिमणिवत् कार्य्यभेदान्न व्यभिचारः, अन्यथा सङ्ख्याहेतुत्वपक्षे का गतिरित्याह **नन्विति**। **यदि नेति**। यद्यपि सङ्ख्याकारणत्वपक्षेऽपि तत्र प्रसङ्गस्तुल्यः, तथापि

अन्यथा अपेक्षाबुद्धेरभावात् संख्यानुत्पत्तौ तद्गतपरिमाणानुत्पादेऽपरिमितस्य द्रव्यस्यानारम्भकत्वात् त्र्यणुकानुत्पत्तौ विश्वानुत्पत्तिप्रसङ्गः। अस्मदादीनामेवानुमानिक्यपेक्षाबुद्धिरस्त्विति चेन्न। इतरेतराश्रयप्रसङ्गात्। जाते हि स्थूलकार्ये तेन परमाण्वाद्यनुमानं, तस्मिन् सति द्व्यणुकादिक्रमेण स्थूलोत्पत्तिः। अस्त्वदृष्टादेव परिमाणं, कृतमपेक्षाबुद्ध्येति चेन्न। अस्तु तत एव सर्वं, किं दृष्टकारणेनेत्यादेरसमाधेयत्वप्रसङ्गादिति।५।

---

आमोदः- अपेक्षाबुद्धिरिति। प्रात्यक्षिकीत्यर्थः। एवमनभ्युपगमेऽनिष्टपरम्परामाह अन्यथेति। अन्योन्याश्रयं विशदयति जाते हीति। कार्यपदं तात्पर्यपरम्, आयोजनपदं व्याख्यानपरं, पद पदमीश्वरादिपरम्।।५।।

---

प्रकाशः- अतोऽनेकेति। अत्रेदं तत्त्वम्। त्र्यणुकमहत्त्वं न परिमाणजन्यं संख्याप्रचयाजन्यमहत्त्वं प्रत्यवयवमहत्त्वेन कारणत्वात्। न त्ववयवपरिमाणत्वेन, परमाणुपरिमाणाद् द्व्यणुके महत्त्वापत्तेः। नापि जन्यावयवपरिमाणत्वेन, गौरवात्। नापि जन्याणुत्वेन, तथादर्शनात्। महत्त्वविशेषेऽनियतहेतुकतापत्तेश्च। महत्त्वावान्तरजातिकल्पने गौरवम्। बहुत्वकल्पनञ्च प्रामाणिकम्। एवं द्व्यणुकपरिमाणं न महत्त्वजनकम् अणुपरिमाणत्वात् परमाणुपरिमाणवत्। अन्यथा तस्य महत्त्वजनकत्वे द्व्यणुकस्यापि महत्त्वप्रसङ्गः। किन्त्ववयवबहुत्वं, परिमाणप्रचयाजन्यमहत्त्वे अवयवबहुत्वेन कारणत्वकल्पनात्। एवं द्व्यणुकपरिमाणं नाणुपरिमाणजन्यं परिमाणत्वाद्, अणुपरिमाणत्वाद्वा। परमाणुपरिमाणं न परिमाणजनकम् अणुपरिमाणत्वाद् द्व्यणुकपरिमाणवत्।

---

मकरन्दः- परमाणुभिन्नार्थकस्य द्व्यणुकाभ्यां त्र्यणुकस्यारम्भप्रसङ्गो बोध्यः। परिमाणद्वयत्वादिना कारणत्वे द्वित्वादेरेवावश्यकस्य कारणत्वात्। परमाणुभिस्तु महदारम्भे बाधकं वक्ष्यतीति। ननु यथा नित्यपरिमाणत्वादिना तत्र जनकं, तथा नित्यवृत्तिसंख्यात्वादिना बहुत्वसंख्यापि जनिका न स्यात्। न च द्व्यणुकस्य महत्त्वप्रसङ्गः, कार्य्यस्य महतः कार्य्यद्रव्यारभ्यत्वनियमादित्याशयेनाह अत्रेदं तत्त्वमिति।

न त्विति। यद्यपि महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमादेव न द्व्यणुके महत्त्वापत्तिः, तथापि नित्यस्य तस्य स्वरूपयोग्यत्वे फलावश्यम्भावापत्तिरित्यत्र तात्पर्यम्। महत्त्वविशेषे इति। प्रचयशून्यावयवद्वयारब्धघटादिमहत्त्वे व्यभिचारादित्यर्थः।

**प्रकाशः**- यत्तु नित्यपरिमाणत्वान्न तज्जनकं व्योममहत्त्ववदिति। तन्न, अवयवनित्यपरिमाणस्य जनकत्वाभ्युपगमात्। अन्यथा नित्यवृत्तिसंख्याया अप्यजनकत्वापत्तेः। अतो द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वादित्यवयवबहुत्वाभावाद् द्वित्वमेव तज्जनकम्। यदि च द्व्यणुकत्र्यणुकपरिमाणं परिमाणजन्यं स्यात्, तदा कारणपरिमाणापेक्षया उत्कृष्टं स्यान्महज्जन्यमहत्तरमहत्तमवदित्यणुपरिमाणतरतमत्वापत्तिः। उत्कर्षश्च न कारणपरिमाणापेक्षयाधिकदेशत्वं, येनेष्टापत्तिः स्यात्। किन्तु तरबन्तकारण परिमाणवाचकवाच्यत्वं, तत्प्रवृत्तिनिमित्तजातिमत्त्वं वा।

ननु परमाणुद्वित्वं न परिमाणजनकं नित्यवृत्तिसंख्यात्वाद्, अणुवृत्ति द्वित्वत्वाद्वा, व्योमद्व्यणुकवृत्तिद्वित्ववत्। एवं द्व्यणुकवृत्तिबहुत्वं न परिमाणजनकम्, अवयववृत्तिबहुत्वात्, परमाणुबहुत्ववत्। यथा त्र्यणुकमहत्त्वस्याणुजन्यत्वे द्व्यणुकस्यापि महत्त्वप्रसङ्गः, तथाणुवृत्तिसंख्याजन्यत्वेऽपि द्व्यणुकस्य महत्त्वप्रसङ्गः। यथा च परिमाणस्य स्वोत्कृष्टपरिमाणजनकत्वादणुतरत्वप्रसङ्गः, तथा संख्याया अपि समानाधिकरणपरिमाणोत्कृष्टपरिमाणारम्भकत्वप्रसङ्गः।

मैवम्। सर्गादौ परमाणुवृत्तिद्वित्वबहुत्वयोरसिद्धावाश्रयासिद्धेः, सिद्धौ वा धर्मिग्राहकमानबाधात्। अथ द्व्यणुकपरिमाणं न द्वित्वजन्यं परिमाणत्वात्, त्र्यणुकमहत्त्वं नाणुवृत्तिबहुत्वजन्यं महत्त्वत्वात् परिमाणत्वाद्वेति चेत्, न। प्रसिद्धद्वित्वबहुत्वजन्यत्वे साध्ये सिद्धसाधनात्, अप्रसिद्धतन्निषेधे साध्याप्रसिद्धेरिति संख्यैव तज्जनिकेति *वयम्*।

*साम्प्रदायिकास्तु* - द्व्यणुकपरिमाणासमवायिकारणताग्राहकं मानं यद्यणुपरिमाणं विषयीकुर्यात् तदा परिमाणद्वयासमवायिकारणत्वे गौरवमिति द्वित्वमेकं विषयीकरोति। यद्वा एकत्वस्य परिमाणानारम्भकत्वे सजातीयनिरूपितोत्कर्षानाश्रयत्वं प्रयोजकम्, तच्च परमाणुपरिमाणेऽपि तुल्यमित्याहुः।

*ऋजवस्तु*- कारणपरिमाणवत् कारणानेकवृत्तिसंख्याप्यन्वयाद्यनुविधानात् परिमाणहेतुः। ग्रन्थस्तु संख्यानिरपेक्षपरिमाणकारणत्वनिषेधपर इति समादधुः।

**तद् यस्यासाविति।** ईश्वरापेक्षाबुद्धेर्नित्यत्वेनाविनाशेऽपि तदुत्पादित द्वित्वादेर्निमित्तान्तरनाशेन नाश इति भावः। **जाते हीति।** महत्त्वोत्पत्तेः पूर्वं द्व्यणुकस्याप्रत्यक्षत्वेन लिङ्गाभावादित्यर्थः।५।

**अथवा, कार्येत्यादिकमन्यथा व्याख्यायते –**

**उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती।**
**ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः।।६।।**

**आम्नायस्य हि भाव्यार्थस्य कार्ये पुरुषप्रवृत्तिनिवृत्ती। भूतार्थस्य तु यद्यपि नाहत्य प्रवर्तकत्वं निवर्तकत्वं वा, तथापि तात्पर्यतस्तत्रैव प्रामाण्यम्।**

**आमोदः–** कार्ययोजनेत्यादिग्रहणककारिकाव्याख्यानमाह **उद्देश इति।** उद्देशोऽभिप्रायः। नतु प्रतीतिप्रयोजनकत्वादिकं *मीमांसका*भिमतमित्यर्थः। भूतभाव्यार्थयोरुभयत्रापि तात्पर्यमाह **आम्नायस्य हीति।** **भाव्यार्थस्य** *स्वर्गकामो यजेत* इत्यादेः, **भूतार्थस्य** *वायुर्वै क्षेपिष्ठा देवता, तेजो वै घृतम्* इत्यादेः।

**प्रकाशः–**अत्र कार्यमुद्देश्यत्वम्, उद्देशश्च तात्पर्यम्। तद्विषय एव वेदस्य प्रामाण्यम्। तच्च परिशेषाद्वक्तुरिच्छा। सा च *वेदार्थे* नास्मदादीनामिति तदाश्रयेश्वरसिद्धिरित्याह **उद्देश एवेति।** *वेदस्या*योजनमासमन्ताद्भावेन योजनं व्याख्यानम्। तच्चास्मदादीनां सर्व*वेदा*दर्शिनां न निष्कम्पप्रवृत्तिहेतुरिति तद्व्याख्यातृतयेश्वरसिद्धिरित्याह **व्याख्येति।** ईश्वरादिपदानां सर्वज्ञे नित्यज्ञाने वेदादेव शक्तिग्रहात् ततोऽपि तत्सिद्धिरित्याह **ईश्वरादीति। लोकवृत्तेति।** लौकिकदृष्टान्ते व्याप्तिग्रहादित्यर्थः।

वृद्धव्यवहारेण कार्यान्विते पदार्थे पदानां शक्तिः कार्यान्वयश्च विधिसमभिव्याहृतस्य साक्षात्, तदसमभिव्याहृतस्य च परम्परयेति मतमाश्रित्याह **आम्नायस्येति। भाव्यार्थस्य** – साध्यार्थस्य।। यथा पथ्यं भुङ्क्ष्व अपथ्यं न भुङ्क्ष्व इत्यस्य साक्षात् कार्यान्वयज्ञानात् प्रवर्त्तकत्वनिवर्त्तकत्वे। **भूतार्थस्य–**

**मकरन्दः– अणुवृत्तिद्वित्वत्वाद्वेति।** अत्राणुवृत्तिपदं स्फुटार्थम्। **अवयववृत्तिबहुत्वादिति।** अत्रापि वृत्त्यन्तं स्फुटार्थम्। अन्यत्रापि बहुत्वस्य तज्जनकत्वानभ्युपगमादि*त्येके*। अवयवपदमणुपरं तुल्यपरिमाणाधिकसंख्यारब्धे महत्त्वोत्कर्षेण तस्य तज्जनकत्वे व्यभिचारादि*त्यन्ये*। आश्रयासिद्ध्यादिपरिहारार्थं परिमाणं पक्षयति **अथेति। प्रसिद्धेति।** एतच्च सामान्यलक्षणाभ्युपगन्तृमते दूषणम्। *स्वमते* त्वप्रयोजकत्वमित्यत्र तात्पर्यम्। **साम्प्रदायिकास्त्विति।** न चेश्वरासिद्धिदशायां द्वित्वस्य कल्पनीयतया धर्मिकल्पनात इति न्यायेन परिमाणमेव विषयीकरोतीति वाच्यम्। मानान्तरेणेश्वरस्य साधितत्वात् तदवष्टम्भेनेदमि*त्येके*। अत्र कल्पेऽस्वरस एवायमि*त्यन्ये*। परमाणोरणुतरत्वात् तत्परिमाणेऽपि सजातीयनिरूपितोत्कर्षाश्रयत्वमस्त्येवेत्यस्वरसादाह **इत्याहुरिति।** उभयहेतुत्वे गौरवमित्यस्वरसमाविष्करोति **ऋजवस्त्विति। निमित्तान्तरम् –** अदृष्टादि।

**तथा हि – विधिशक्तिरेवावसीदन्ती स्तुत्यादिभिरुत्तभ्यते। प्रशस्ते हि सर्वः प्रवर्तते, निन्दिताच्च निवर्तते इति स्थितिः। तत्र पदशक्तिस्तावदभिधा, तद्बलायातः पदार्थः। आकाङ्क्षादिमत्त्वे सति चान्वयशक्तिः पदानां पदार्थानां वा वाक्यं, तद्बलायातो वाक्यार्थः। तात्पर्यार्थस्तु चिन्त्यते। तदेव परं साध्यं, प्रतिपाद्यं, प्रयोजनमुद्देश्यं वा यस्य, तदिदं तत्परम्, तस्य भावस्तत्त्वम्, तत् यद्विषयं स तात्पर्यार्थ इति स्यात्। तत्र न प्रथमः, प्रमाणेनार्थस्य कर्मणोऽसाध्यत्वात्।**

---

**आमोदः**-विधिशक्तिः प्रवृत्तिजनकत्वम्। **अवसीदन्ती** च कार्यमजनयन्ती **उत्तभ्यते** प्रवृत्तिजनकीक्रियते। कथमुत्तम्भनमत आह **प्रशस्ते हीति**। *वायुः क्षेपिष्ठा देवता* क्षिप्रफलदायिनीति ज्ञात्वा। *वायव्यं श्वेतं छागलमालभेते*त्यादिविधिवाक्यबलाद्वायव्यं छागलमालभते। पदार्थवाक्यार्थाभ्यां तात्पर्यार्थं भेत्तुमाह **अभिधा** संकेतः, **तद्बलायातः** तत्प्रतिसन्धानस्मारितः, **अन्वयशक्तिः** संसर्गप्रतिपादकत्वम्। **पदानामिति** *स्वमते।* पदार्थानामिति *भट्टमते*। **तद्बलायात**स्तज्जनितानुभवविषयः। एतदुभयमपि तात्पर्यार्थ इत्याह **तात्पर्यार्थस्त्विति**। तत्परस्य भावस्तात्पर्यम् इत्यत्र परशब्दार्थं विकल्पयति, **तदेवेति**। **साध्यमिति**। कार्यमित्यर्थः। तदिदं वाक्यं तत्परम्, तस्य भावस्तत्परवाक्यत्वं तत्तत्परवाक्यं यद्विषयं स तात्पर्यार्थ इत्यर्थः। **प्रमाणेन** शब्देन **कर्मणो** विषयस्या**साध्यत्वाद**जन्यत्वात्। ननु वाक्यस्य यत् फलं तदेव तात्पर्यार्थः स्यादित्यत आह **फलस्येति**। वाक्यार्थप्रतिपत्तिर्वाक्यार्थधीरेवेति न तात्पर्यार्थ इत्यर्थः।

---

**प्रकाशः**-सिद्धार्थस्य। यथा परिणतिसुरसमाम्रफलं परिणतिविरसं पनसमिति वाक्यस्य तदभावाद् भक्षणाभक्षणकार्यत्वे तात्पर्यग्रहात् परम्परया तथात्वमित्यर्थः। तदुपपादयति **विधिशक्तिरिति**। कार्यत्वज्ञानजननेऽपि प्रवृत्त्यौपयिकं प्रवृत्तिविषयस्यान्यापेक्षया प्राशस्त्यज्ञानं, तद्रूपसहकार्यलाभो विधिशक्तेरवसादः, तल्लाभश्चोत्तम्भनम्। तत्सहकारित्वे मानमाह **प्रशस्ते हीति**। पदार्थवाक्यार्थाभ्यां तात्पर्यं भेदयितुं प्रस्तौति **तत्रेति**। तदेव परं यस्य स्तुत्यादिवाक्यस्येत्यत्र परपदार्थं विकल्पयति **साध्यमिति**। **तदिदमिति**। वाक्यमित्यर्थः।

ननु वाक्यार्थस्य वाक्यरूपप्रमाणासाध्यत्वेऽपि तन्निष्ठफलसाध्यतयैव तत्साध्यता स्यादित्यत आह **फलस्य चेति**। तस्य च द्वितीयविकल्प एव प्रवेशादिति

फलस्य च तत्प्रतिपत्तितोऽन्यस्याभावात्। प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारेण प्रवृत्तिनिवृत्तिरूपं साध्यं परमुच्यते इति चेन्न। 'गङ्गायां घोष' इत्यत्र तीरस्याप्रवृत्तिनिवृत्तिरूपस्यासाध्यस्यापि परत्वात्। तीरविषये प्रवृत्तिनिवृत्ती साध्ये इति तीरस्यापि परत्वमिति चेन्न। स्वरूपाख्यानमात्रेणापि पर्यवसानात्।

न द्वितीयः, पदवाक्ययोः पदार्थतत्संसर्गौ विहाय प्रतिपाद्यान्तराभावात्। पदशक्तिसंसर्गशक्ती विना स्वार्थाविनाभावेन प्रतिपाद्यं परमुच्यते इत्यपि न साम्प्रतम्। न हि यत् यच्छब्दार्थाविनाभूतं तत्र तत्र तात्पर्यं शब्दस्य, अतिप्रसङ्गात्। तदा हि 'गङ्गायां जलमि'त्याद्यपि तीरपरं स्यात्। अविनाभावस्य तादवस्थ्यात्। मुख्ये बाधके सति तत्तथा स्यादिति चेन्न। तस्मिन्नसत्यपि भावात्। तद् यथा –

'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्'।। इति।

मुख्यार्थाबाधनेऽपि वारणे तात्पर्यम्।

---

आमोदः– ननु प्रवृत्तिनिवृत्ती एव तात्पर्यार्थः स्यादित्याह प्रशस्तेति। एवं सति तीरादिपरत्वं लक्षणादौ न स्यादित्यर्थः। ननु गङ्गायां घोषः प्रतिवसतीत्यादिवाक्यमपि प्रवृत्तिनिवृत्तितात्पर्यकमेव, परन्तु तीरप्रतिपत्तिं जनयित्वा तदुभयं जनयतीति तीरतात्पर्यकताभिधीयत इति शङ्कते तीरविषय इति। यत्र तद्वाक्यं प्रतिपत्तिपरतया नाभिधीयते किन्तु तीरप्रतिपत्तिमात्रपरतया, तत्र तीरतात्पर्यकं न स्यादिति परिहरति स्वरूपेति। प्रतिपाद्यो हि पदार्थो वाक्यार्थो वा ताभ्यामन्यस्यैव तात्पर्यार्थत्वादित्युक्तमित्याह पदेति। ननु पदार्थवाक्यार्थान्यतराविनाभूतो योऽर्थः स एव तात्पर्यार्थः स्यादित्याशङ्क्य निराकोति न हीति। तथा स्यादिति। अविनाभूतार्थतात्पर्यकं वाच्यं स्यादित्यर्थः। वारणे गमनवारणे। ननु मया न गन्तव्यं मद्गमनस्य प्रियामरणहेतुत्वादित्यनुमानात्तत्र वारणप्रतीतिर्न तु वाक्यादिति वाच्यम्, तत्तात्पर्यकं यद्यपि मया न गन्तव्यं मयेति शब्दार्थो नानुमानिकः तथाप्यनुमानद्वारापि तात्पर्यं

---

प्रकाशः– भावः। तीरस्यापीति। साध्यफलभागितया तीरस्यापि साध्यत्वमित्यर्थः। स्वरूपेति। प्रवृत्त्यादौ तात्पर्याभावेऽपि तीरस्य तात्पर्यविषयत्वादित्यर्थः। पदवाक्ययोरिति। स्तुत्यादिवाक्यस्य पदार्थवाक्यार्थभिन्ने प्रवृत्त्यादावपि तात्पर्यात्तदव्यापकत्वादित्यर्थः। न च यदर्थज्ञानजनकत्वं यस्य, तस्य तत्र तात्पर्यमिति वाच्यम्। धूमोऽस्तीति वाक्यस्याग्निज्ञानाजनकत्वेऽप्यग्नौ तात्पर्यात्तदव्यापकत्वादिति भावः।

**न च परं व्यापकमेव, अव्यापकेऽपि तात्पर्यदर्शनात्। तद् यथा – 'मञ्चाः क्रोशन्ती'ति पुरुषे तात्पर्यम्। न च मञ्चपुरुषयोरविनाभावः, नापि पुरुषक्रोशनयोः। नापि तृतीयः, तद्धि प्रतिपाद्यापेक्षितं, प्रतिपादकापेक्षितं वा स्यात्?। नाद्यः, शब्दप्रामाण्यस्यातदधीनत्वात्। तथात्वे वातिप्रसङ्गात्। यस्य यदपेक्षितं, तं प्रति तस्य परत्वप्रसङ्गात्। तदर्थसाध्यत्वेनापेक्षानियम इति चेन्न। कार्यज्ञाप्यभेदेन साध्यस्य बहुविधत्वे भिन्नतात्पर्यतया वाक्यभेदप्रसङ्गात्।**

---

**आमोदः**– वाक्यस्यैव निर्वहति। तथा पर्वते धूमोऽस्तीति वह्नितात्पर्यकं वाक्यम् अनुमाननिर्वाह्यतात्पर्यकम्। वस्तुतस्तु वारणमपि वाक्यार्थ एव। न चापदार्थत्वात् तत्संसर्गः कथं वाक्यार्थः स्यादिति व्युत्पत्तिबलायातस्यापदार्थसंसर्गस्यापि वाक्यार्थत्वात्। अन्यथा प्रियामरणहेतुत्वादिति लिङ्गमपि वाक्यार्थो न स्यात्। मरणस्यापदार्थत्वात्। अन्यत्र जन्ममरणमन्तरेण न भवतीति तस्याक्षेप्यत्वात्। ननु पदार्थस्य यदेव व्यापकं तदेव परमित्यत आह **न चेति**। पुरुषक्रोशनयोरित्युपलक्षणम्। मञ्चक्रोशनयोरित्यपि द्रष्टव्यम्। **अतदधीनत्वादिति**। प्रतिपाद्यपुरुषापेक्षितप्रयोजनानधीनत्वादित्यर्थः। ननु तथैव किं न स्यादित्यत आह **तथात्व इति**। अतिप्रसङ्गमेवाह **यस्य यदिति**। अस्तं गतः सवितेति वाक्यं द्विजानां सन्ध्योपासने, वेश्यायाः प्रसाधने, वणिजः पण्योत्सारणे, स्नुषाया दीपदाने, गोपस्य गवानयने, गृहस्थस्यातिथिपरिग्रहेऽपेक्षासत्त्वाद्वाक्यभेदः स्यादित्यर्थः। नन्वत्र वाक्यार्थः सवितुरस्तमनं सन्ध्योपासनादिकं च न तत्साध्यमिति तत्परत्वाभावान्न वाक्यभेद इत्याह **तदर्थेति**। वाक्यार्थसाध्यतयेत्यर्थः। एवं सतीह प्रदेशे धूम इति वाक्यं तात्पर्यभेदात् भिद्यते इत्याह **कार्येति**।

---

**प्रकाशः**- **तद्धीति**। प्रयोजनं न वक्तुः श्रोतुर्वेत्यर्थः। यत्र वक्तुस्तात्पर्यं तत्र शब्दस्य प्रामाण्यमिति स्थितेराह **शब्देति**। अतिप्रसङ्गमेवाह **यस्येति**। तथा च तात्पर्यभेदेन वाक्यभेदः स्यादिति भावः। **तदर्थेति**। शब्दस्य योऽर्थस्तस्य यत्साध्यं प्रतिपाद्यस्य चापेक्षितं तत्परं, न तु तदसाध्यमपीत्यर्थः। **कार्येति**। साध्यं जन्यं ज्ञाप्यं वा? उभयस्याप्यनेकत्वात्। तथापि तात्पर्यभेदाद्वाक्यभेद एव स्यादित्यर्थः। न च प्रकरणादिना तात्पर्यनियमान्न वाक्यभेदापत्तिः। प्रकरणं हि न साध्यं नियमयति, अशक्यत्वात्। न हि धूमं जिज्ञासमानस्य प्रतीयमानधूमाद्धूमकेतुप्रतीतिवन्मशकादिनिवृत्तिर्न भवति, प्रतिपादकाभिप्रायनियमने च सिद्धं वेदस्य

धूमस्य हि प्रदेशश्यामलतामशकनिवृत्त्याद्यनेकं कार्यम्। आर्द्रेन्धनदहनाद्यनेकं ज्ञाप्यम्। तथा चेह प्रदेशे धूमोद्गम इत्यभिहिते तात्पर्यतः को वाक्यार्थो भवेत्?। चेतनापेक्षाया नियन्तुमशक्यत्वात्। नापि प्रतिपादकापेक्षितं, वेदे तदभावात्।

चतुर्थस्तु स्यात्। यदुद्देशेन यः शब्दः प्रवृत्तः स तत्परः तथैव लोकव्युत्पत्तेः। तथा हि – प्रशंसावाक्यमुपादानमुद्दिश्य लोके प्रयुज्यते, तदुपादानपरम्। निन्दावाक्यं हानमुद्दिश्य प्रयुज्यते, तद्धानपरम्। एवमन्यत्रापि स्वयमूहनीयम्। तस्माल्लोकानुसारेण वेदेऽप्येवं स्वीकरणीयम्। अन्यथा अर्थवादानां सर्वथैवानर्थक्यप्रसङ्गात्। स चोद्देशो व्यवसायोऽधिकारोऽभिप्रायो भाव आशय इत्यनर्थान्तरमिति।

---

**आमोदः**– ननु यद्यपि बहूनि कार्यज्ञाप्यभेदेन वाक्यार्थसाध्यानि, तथापि यदेव प्रतिपाद्यापेक्षितं तदेव तातपर्यार्थः स्यादित्यत आह चेतनेति। वेदे तदभावादिति *तव मत* इति शेषः। एवमन्यदपीति उपेक्षावाक्यमुपेक्षापरमित्यादि। अर्थवादानामिति। स्तुतिनिन्दापरकृतिपुराकल्पवाक्यानामित्यर्थः। तत्र स्तुतिः–

*तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते* इत्यादिः। निन्दा तु– *एष वाव प्रथमो यज्ञानाम्। अनेन हुत्वा योऽन्येन जुहोति सोऽन्धं तमः प्रविशतीत्यादिः।*

परकृतिस्तु– *वपामेवाग्रे अभिघारयन्त्यथ पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिधारयन्तीत्यादिः*। पुराकल्पस्तु– *पुरा ब्राह्मणाः पवमानस्तोम मस्तोषन्नित्यादिः।* तदेतेषां यदि प्रवृत्तिपरता न स्यादानर्थक्यमेव स्यादित्यर्थः। उद्देश शब्दस्याभिप्रायार्थत्वं पर्यायेणाह स चेति। अधिकार इति।

---

**प्रकाशः**– सकर्तृकत्वमिति भावः। चेतनेति। एक एवार्थः सर्वेषां चेतनानामपेक्षित इत्यत्र नियामकाभावाद् भिन्नभिन्नार्थापेक्षायां तात्पर्यभेदाद् वाक्यभेदः स्यादिति भावः। वेद इति। तव दर्शने इति शेषः। अथैवेति। लोके हि पदानां स्वतन्त्राभिप्रायपूर्वकतया स्वार्थप्रतिपादकत्वदर्शनाद् वेदेऽपि तथात्वं तत्पूर्वकतयैव युज्यते। न च लौकिकशब्देभ्यो वैदिकाः शब्दा अन्य एवेति लोकमर्यादातिक्रमः स्यात्। यतोऽनेनैव न्यायेन लौकिकानामेव शब्दानामर्थविशेषे शक्तिग्रहाद् वैदिकानां तद्भिन्नत्वादगृहीत शक्तिकत्वादर्थाप्रतिपादकत्वप्रसङ्गः। अत एव य एव लौकिकास्त एव वैदिकास्त एव चामीषामर्था इत्याहुरित्यर्थः। ननूद्देश्यत्वं नेच्छाविषयत्वं, किन्तु वस्त्वन्तरमेवेत्यत आह स चेति। लोके तथैव निश्चयादित्यर्थः।

तदाधारप्रणेतृपुरुषधौरेयसिद्धिः।

तथा च प्रयोगः – वैदिकानि प्रशंसावाक्यानि उपादानाभिप्रायपूर्वकाणि, प्रशंसावाक्यत्वात्, 'परिणतिसुरसमाम्रफलमि'त्यादिलोकवाक्यवदिति। एवं निन्दावाक्यानि हानाभिप्रायपूर्वकाणि, निन्दावाक्यत्वात्, परिणतिविरसं पनसफलमि'त्यादिवाक्यवत्। अन्यथा निरर्थकत्वप्रसङ्गश्च विपक्षे बाधकमुक्तम्।

अपि च – नो चेदेवं, श्रुतार्थापत्तिरपि हीयेत। सिद्धो ह्यर्थः प्रमाणविषयो, न तु तेनैव कर्तव्यः। न च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रौ भुङ्क्ते इति वाक्यशेषोऽस्ति, अनुपलम्भबाधितत्वात्। उत्पत्त्यभिव्यक्तिसामग्रीताल्वादिव्यापारविरहात्। अयोग्यस्याशङ्कितुमप्य

आमोदः–एतदधिकृत्यानेनोक्तमित्यमर्थः प्रतीयत इति भावः। वैदिकानि वाक्यानीति सर्गाद्यकालीनानीत्यर्थः। सर्गस्य साधितत्वादत्राश्रयासिद्धिः। *वेदस्य* स्वतन्त्राभिप्रायपूर्वकत्वव्यतिरेके *भट्टं* प्रति विपक्षबाधकमाह नो चेदेवमिति। पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यश्रवणानन्तरं रात्रौ भुङ्क्ते इति वक्तुरभिप्रायविषयं वाक्यं यथा श्रोता कल्पयति तथा। *तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत* इत्यत्र विधिकल्पनं वक्तुरभिप्रायं विनानुपपन्नमित्यर्थः। नन्वर्थापत्त्या शेषीभूतवाक्यमेव जन्यतामित्यत आह सिद्ध इति। प्रमाणस्य ज्ञापकत्वं न तु ज्ञाप्यजनकत्वमपीत्यर्थः। अनुपलम्भेति। यदि स्यात् तदा वाक्यान्तरवदुपलभ्येतेत्यर्थः। ननु सदपि वाक्यमयोग्यत्वान्नोपलभ्येतेत्यत आह उत्पत्तीति। स्वमते अभिव्यक्तीति। परमते 'पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादि वाक्योच्चारणानन्तरं वक्तुस्ताल्वादिव्यापारोऽपि नोपलभ्यते, येन रात्रौ भुक्तमिति

प्रकाशः– वैदिकानीति। ननु सर्गाद्यकालीनवैदिकवाक्यपक्षतायामाश्रयासिद्धिः। इदानीन्तनस्य तस्य पक्षत्वेऽध्येत्रास्मदादिनार्थान्तरत्वं, स्वरूपाख्यानपरपुत्रस्तुतिवाक्ये चानैकान्तिकम्। अत्राहुः –वैदिकप्रशंसावाक्यानि वेदसमानविषयकतात्पर्यार्थपूर्वक-तात्पर्यविषयकाणि सतात्पर्यवाक्यत्वात् लौकिकप्रशंसावाक्यवत्।

यदि च वेदे न स्वतन्त्रपुरुषाभिप्रायपूर्वकता, तदा *भट्टानां* श्रुतार्थापत्त्या शब्दः कल्प्यते इति राद्धान्तव्याघात इत्याह – अपि चेति। ननु मा भूच्छ्रुतार्थापत्त्या

मकरन्दः– वेदसमानविषयकेत्यादि। अत्र वेदपदं स्वपरं, तेन लौकिकप्रशंसावाक्ये न व्यभिचारः। अध्यापकतात्पर्यविषयत्वेनार्थान्तरमत उक्तं तात्पर्यापूर्वकेति

शक्यत्वात्। तस्मादभिप्रायस्थ एव परिशिष्यते, गत्यन्तराभावात्। स चेद्वेदे नास्ति, नास्ति श्रुतार्थापत्तिरिति तद्व्युत्पादनानर्थक्यप्रसङ्गः। तस्मात् कार्यात्तात्पर्यादप्युन्नीयते, अस्ति प्रणेतेति।

आयोजनात् खल्वपि। न हि वेदादव्याख्यातात् कश्चिदर्थमधिगच्छति। न चैकदेशदर्शिनो व्याख्यानमादरणीयम्। 'पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इति न्यायेनानाश्वासात्। त्रिचतुरपदकादपि वाक्यादेकदेशश्राविणोऽन्यथार्थप्रत्ययः स्यात्, किमुतातीन्द्रियादन्तरान्तरवाक्यसम्भेददुरधिगमात्। ततः सकलवेदवेदार्थदर्शी

---

**आमोदः**– वाक्यमयोग्यमपि कल्प्येतेत्यर्थः। अभिप्रायस्थ एवेति वक्तुरिति शेषः। नन्वर्थ एव तादृशः कल्प्यतां, किं शब्दकल्पनया इत्यत आह गत्यन्तरेति। अर्थकल्पनयाऽन्वयबोध एव न सम्भवति। अन्वयबोधे हि पदविशेषोपस्थापितत्वं तन्त्रम्। अन्यथा गौः कर्मानयनं कृतिरित्यादौ अन्वयबोधः स्यात्। अत एव यत्रान्यत् क्रियापदं न श्रूयते तत्रास्ति भवतीति क्रियापदं प्रयोक्तव्यमित्याचक्षते *शाब्दाः*। पचतीत्युक्ते वधूपदर्शितकलापमादायान्वयबोधप्रसङ्गात्। न, ननु यथान्योदीरिते कलापादिपदेनान्वयबोधः, तथा प्रत्यक्षकलापादिकमादायापीति वाच्यम्, तत्र समभिव्याहाराभावात् आकाङ्क्षाया एवाभावात्, वेदे विधिशेष-कल्पनार्थमेव व्युत्पादनं तत्र शास्त्रे व्यर्थं स्यादित्याह– स चेदित्यादि। प्रकृतमुपसंहरति तस्मादिति। तात्पर्यविषयस्य प्रवृत्ति निवृत्त्यादेः कार्यत्वमिति लक्षणया कार्यपदेन तात्पर्यमुक्तमिति भावः।

---

**प्रकाशः**– शब्दकल्पनं, योग्यार्थकल्पनयैवोपपत्तेः। मैवम्। क्रियाकरकपदानामन्योन्योपस्थापितार्थान्वयबोधकत्वनियमव्युत्पत्तेः। अन्यथा गौः कर्मत्वमानयनं कृतिरित्यतोऽपि गामानयेत्यस्मादिवान्वयबोधापत्तेः। पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिशब्दसमभिव्याहारं विना चतुर्थ्यनुपपत्तेश्च। न च स्पृहयतिशब्दार्थयोग एव चतुर्थी साधुः। पुष्पमिच्छतीत्यत्रापि चतुर्थ्यापत्तेः।

तथापि स्वयं स्मृतानामेव योग्यासन्नसाकाङ्क्षपदानां श्रुतपदैः सहैकार्थप्रतिपादने तात्पर्यकल्पनं श्रुतार्थापत्तिविषयः स्यादिति चेन्न। वेदे परस्परसमभिव्याहृतपदानामेकार्थप्रतिपादने तात्पर्योपलब्धेः। तस्य चोच्चारणाभिप्रायान्यतरनियतविषयत्वेनोभयथापि ईश्वरसिद्धिरित्याशयेनाह गत्यन्तराभावादिति।

कश्चिदेवाभ्युपेयः, अन्यथाऽन्धपरम्पराप्रसङ्गात्। स च श्रुताधीतावधृत-स्मृतसाङ्गोपाङ्गवेदवेदार्थस्तद्विपरीतो वा न सर्वज्ञादन्यः सम्भवति। को ह्यप्रत्यक्षीकृतविश्वतदनुष्ठान 'एतावानेवायमाम्नाय' इति निश्चिनुयात्?। कश्चार्वाग्दृक् निःशेषाः श्रुतीर्ग्रन्थतोऽर्थतो वाऽधीयीत, अध्यापयेद्वा?।

अत्रापि प्रयोगः - वेदाः कदाचित् सर्ववेदार्थविद्व्याख्याताः, अनुष्ठातृमतिचलनेऽपि निश्चलार्थानुष्ठानत्वात्, यदेवं तत्सर्वं

---

आमोदः- आयोजनं समस्तवेदव्याख्यानम्। तच्चार्वाचीनपुरुषाशक्यमिति ईश्वर एव प्रथमव्याख्याता इत्यर्थः। पौर्वापर्यापरामृष्टः विशेषणविशेष्यभावेनानवगतः। त्रिचतुरेति। विमलं जलमि'त्यश्रुतवतो नद्याः कच्छे महिषश्चरतीत्यादेः दुरधिगमादिति। *वेदादिति* शेषः। अन्यथेति। यद्यस्मदादिरेव व्याख्याता स्यादित्यर्थः। कार्यायोजनपदे व्याख्याय *धृत्या*देरित्यपि तदन्तर्भाविणैव व्याचष्टे स चेति। *अधीतो* ज्ञानविषयीकृतः। *श्रुतः* श्रोत्रेण साक्षात्कृतः, *धृतो* निरन्तराभ्यासेन दृढसंस्कारविषयीकृतः। *तद्विपरीतो* अध्ययनादिश्रवणादिकमन्तरेणैव समाकलितः साङ्गोपाङ्गवेदार्थः। अध्यापितश्रावितधारितसमस्तवेदार्थो वा। अन्यथासिद्धि-निरासायाह को हीति। इदानीं सर्ववेदार्थविद्व्याख्यातत्वमनुपलम्भबाधितमत आह कदाचिदिति। सर्गादौ

---

प्रकाशः- कार्येत्यादिकारिकायां धृत्यादेरित्यपि व्याचष्टे स चेति। श्रुतः - श्रोत्रेण साक्षात्कृतः। अधीतो-ज्ञानविषयार्थः। धृतः-सतताभ्यासेन दृढसंस्कारः। तद्विपरीतो विनैवाध्ययनं ज्ञातसकलाङ्गोपाङ्गवेदार्थः, अध्यापितधारितादिवेदार्थो वा। कदाचिदिति बाधनिरासाय। एकदेशदर्शिव्याख्यात*वेदात्*, शिष्याणां श्रद्धया प्रवर्त्तमानां निश्चलानुष्ठानमस्तीत्यनैकान्तिकमित्यत उक्तम् अनुष्ठात्रिति। तत्रानुष्ठातृणामव्यवस्थितमतित्वाभावादित्यर्थः। अननुष्ठानहेतुमाह अव्यवस्थानादिति।

---

मकरन्दः- तात्पर्यविशेषणम्। तात्पर्यविषयकाणीत्यत्र तात्पर्यविषयो विषयो यस्येति मध्यपदलोपी समास इत्याहुः। न च हेतौ सतात्पर्यकपदं व्यर्थम्, ईश्वरतात्पर्यमादाय वाक्यमात्रस्य पक्षसमत्वेन व्यभिचाराभावादिति वाच्यम्। बाधितार्थके तत्तात्पर्याभावेन व्यभिचारसम्भवात्। सा चेतीति। तथा च धृत्यादेरित्यनेन वेदधारकत्वादिक-मुक्तमिति तदाश्रयेश्वरसिद्धिरिति भावः। एकदेशदर्शीति। नन्वीश्वरव्याख्यानमादाय तस्यापि पक्षसमतया कथमनैकान्तिकम्,

**तदर्थविद्व्याख्यातं, यथा *मन्वादिसंहितेति*। अन्यथा त्वनाश्वासेना व्यवस्थानादननुष्ठानमव्यवस्था वा भवेदनादेशिकत्वात्। अनुष्ठातार एवादेष्टार इति चेन्न। तेषामनियतबोधत्वात्। वेदवद्वेदानुष्ठानमप्यनादीति चेन्न। तद्धि स्वतन्त्रं वा, वेदार्थबोधतन्त्रं वा?। आद्ये, निर्मूलत्वप्रसङ्गः। द्वितीये, त्वनियमापत्तिः। न ह्यसर्वज्ञाविशेषे पूर्वेषां तदवबोधः प्रमाणं, न त्विदानीन्तनानामिति नियामकमस्ति।**

---

**आमोदः**– *मन्वादीन्न* मानसानुत्पाद्येत्यर्थः। **अन्यथेति**। सर्वविद्व्याख्यानमन्तरेण इत्यर्थः। कथमननुष्ठानमत आह **अव्यवस्थानादिति**। अर्वाचीनव्याख्यानस्या व्यवस्थितत्वादित्यर्थः। अर्वाचीनेनैवान्यथा व्याख्यानेऽनुष्ठानं व्यवस्थितं न स्यादित्याह **अननुष्ठानेति**। **अनादेशिकत्वादिति**। परमार्थाभिज्ञोपदेशा विषयत्वादित्यर्थः। ननु पूर्वपूर्वानुष्ठातृणामुपदेश इदानीन्तनानुष्ठाने तन्त्रं स्यादित्याह **अनुष्ठातार इति**। **तेषामिति**। असर्वज्ञत्वेनानियतबोधत्वादित्यर्थः। **वेदवदिति**। तथा च किं सर्वविद्व्याख्यानेनेत्यर्थः। **स्वतन्त्रमिति**। यादृच्छिकमित्यर्थः। **वेदार्थावबोधतन्त्रमिति**। अर्वाचीनव्याख्यातवेदार्थावबोधतन्त्रमित्यर्थः। ननु कथमनियमः पूर्वेषां प्रामाणिकत्वात्, तद्व्याख्यानस्यैव नियामकत्वादित्यत आह **न हीति**। पूर्वत्वमतन्त्रमित्यर्थः। **प्रणवस्येश्वरवाचकत्वम्**।

*समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्* (शिवमहिम्नस्तोत्रम्) इति श्रवणात्।

---

**प्रकाशः**– अर्थनिश्चयस्येति शेषः। अन्यथा त्वनियतमनुष्ठानं स्यादित्याह **अव्यवस्था वेति**। अर्थनिश्चयाव्यवस्थानादित्यर्थः। **अनादेशिकत्वात्**–अनौपदेशिकत्वादित्यर्थः। ननु पूर्वेषामेव स्वतन्त्रवेदार्थज्ञानं प्रमाणमाधुनिकानान्त्वप्रमाणं स्यादित्यत आह **न हीति**। न च कश्चित् वेदार्थोऽस्तीत्यनेन रूपेणास्मदादिभिरेव व्याख्यानादनुमाने सिद्धसाधनम्। येन रूपेण वेदार्थो व्याख्यात इति लोके व्यवहारः, ताद्रूप्येण व्याख्यानस्य विवक्षितत्वात्। यद्वा *वेदा* व्याख्यानानुकूलतद्विषयानित्यज्ञान भिन्नज्ञानसमानविषया वाक्यत्वाद्, वेदा एतद्विषयानित्यज्ञानान्यज्ञानविधृता

---

**मकरन्दः**– अन्यथा तादृशस्थले कदाचिदनुष्ठातृमतिचलनस्यापि सम्भवेन तत्पदोपादानेऽपि व्यभिचारापत्तेरिति चिन्त्यम्। धृत्यादेरित्यभिप्रायेणाह वेदा इति।

पदात् खल्वपि। श्रूयते हि प्रणवेश्वरेशानादिपदम्। तच्च सार्थकम्, अविगानेन श्रुतिस्मृतीतिहासेषु प्रयुज्यमानत्वात्, घटादिपदवदिति सामान्यतः सिद्धे, कोऽस्यार्थ इति व्युत्पित्सोर्विमर्शे सति निर्णयः, स्वर्गादिपदवत्।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'।। भ.गीता १५।१७।
इत्यर्थवादात्।

यववराहादिवद्वाक्यशेषाद्वा। तद् यथा 'ईश्वरप्रणिधान'मुपक्रम्य श्रूयते –

---

आमोदः- अविगानेनेति। अविरोधेनेत्यर्थः। न च स्तोमेन व्यभिचारः। *श्रुत्या*दिषु प्रयुज्यमानत्वादिति हेत्वर्थो न तु *श्रुतौ* प्रयुज्यमानत्वादितिमात्रम्। यद्वा, विगानं निरर्थकतया प्रसिद्धिः। स्तोमे च ताद्रूप्येणैव प्रसिद्धेः। स्वर्गादिपदवदिति। यथा *यन्न दुःखेन सम्भिन्नमि*त्यद्यर्थवादात् स्वर्गादिपदे शक्तिग्रहः। तथा *उत्तमः पुरुषस्त्वन्यः* (श्रीमद्भगवद्गीता) इत्याद्यर्थवादादीश्वरपदशक्तिग्रह इत्यर्थः। वाक्यशेषादिति। यद्यपि वाक्यशेषोऽप्यर्थवाद एव, तथापि वाच्यसन्देहे विधिशेषः, अन्यत्र त्वर्थवादमात्रमिति विकल्पेनाभिधानम्। यवादिपदे यथा *वसन्ते सर्वशस्यानामि*त्यादिना शक्तिग्रहस्तथा प्रकृतेऽपि सर्वज्ञतेत्यादिना शक्तिग्रह इत्यर्थः। अर्थवादमुपदर्शयति उत्तम इत्यादि।

---

प्रकाशः-धृतवाक्यत्वादिति भावः। अविगानेनेति। निरर्थकतया प्रसिद्ध्यभावेनेत्यर्थः। अत एव स्तोभैर्न व्यभिचारः, निरर्थकत्वेनैव तेषां प्रसिद्धेरिति भावः। यथा स्वर्गपदे विधिशेषीभूतार्थवादाच्छक्तिग्रहस्तथा प्रकृतेऽपीत्याह निर्णय इति। अर्थवादमाह उत्तम इति।

यववराहादिवदिति। 'यवमयश्चरुर्भवति' 'वाराही चोपानद्' 'वैतसे कटे प्राजापत्यं धिनोती'त्यत्र यववराहवेतसशब्दाः किं कङ्गुवायसजम्बूनां वाचकाः, उत दीर्घशूकशूकरवञ्जुलानामिति म्लेच्छार्यव्यवहारदर्शनाद्विप्रतिपत्तौ मुख्यार्थानध्यवसायेऽननुष्ठानापत्त्या तत्पदवद्वेदप्रामाण्यसंशये, पूर्वपक्षः – व्युत्पत्तिग्राहकव्यवहाराविशेषात् कङ्ग्वादावपि शक्तिरेव, पिकनेमतामरसपदेषु म्लेच्छप्रसिद्धेरादरणाच्चेति। राद्धान्तस्तु

वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः।।

'वराहं गावोऽनुधावन्ति' 'अप्सुजो वेतसः' इत्यादिवाक्यशेषरूपवेदविरोधिनी

'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य'।। इति।
(वायु पु० १२।३३।)

एवम्भूतोऽर्थः प्रमाणबाधित इति चेन्न। प्रागेव प्रतिषेधात्। तथापि न तत्र प्रमाणमस्तीति चेत्, स्वर्गे अस्तीति का श्रद्धा?। न ह्युक्तविशेषणे सुखे किञ्चित्प्रमाणमस्त्यस्मदादीनाम्।

याज्ञिकप्रवृत्त्यन्यथाऽनुपपत्त्या तथैव तदित्यवधार्यते इति चेन्न, इतरेतराश्रयप्रसङ्गात्। अवधृते हि स्वर्गरूपे तत्र प्रवृत्तिः, प्रवृत्त्यन्यथाऽनुपपत्त्या च तदवधारणमिति। पूर्ववृद्धप्रवृत्त्या तदवधारणेऽयमदोष इति चेन्न, अन्धपरम्पराप्रसङ्गात्। विशिष्टादृष्टवशात् कदाचित् कस्यचिदेवंविधमपि सुखं स्यादिति नास्ति विरोधः। तन्निषेधे प्रमाणाभावादिति चेत्, तुल्यमितरत्रापि। अत्रापि प्रयोगः – यः शब्दो

---

आमोदः- प्रणिधानं ध्यानम्। विधिशेषमाह सर्वज्ञतेत्यादि। तृप्तिः स्वभोगेच्छाविरहः। स्वतन्त्रता सर्वकारकप्रयोक्तृत्वम्। अलुप्तशक्तिः नित्ययत्नः। अनन्तशक्तिरविनाशिनीच्छा। एतानि षड् अङ्गानि धर्मान् विदित्वा आहुः प्रामाणिकाः। तथा च तावद्धर्मविशिष्टमीश्वरं प्रणिदध्यादिति विधेः शेषोऽयमित्यर्थः। एवम्भूत इति। सर्वज्ञतादिधर्मयुक्त इत्यर्थः। प्रागेवेति। योग्यानुपलब्ध्यादि प्रमाणजातबाधकत्वस्य प्रागेव दूषितत्वादित्यर्थः। तथापीति। अर्थवादस्या प्रमाणत्वादिति भावः। स्वर्ग इति। तत्रार्थवादस्यैव प्रमाणत्वादित्यर्थः। ननु स्वर्गः सुखं, तत्र प्रमाणं प्रत्यक्षमेवात आह न ह्युक्तविशेषण इति। दुःखासम्भिन्नत्वादि विशेषणविशिष्टः। किञ्चिदिति। अर्थवादादन्यदित्यर्थः। ननु विशिष्टं सुखमन्तरेण बहुवित्तव्ययायाससाध्ये वाजपेयादौ प्रेक्षावतां प्रवृत्तिरेव न स्यादित्याह याज्ञिकेति। इतरेतराश्रयमेव स्फुटयति अवधृत इति। अन्धेति। मूलाभावादित्यर्थः। अदृष्टादुत्पन्ने विशिष्टसुखे तज्ज्ञानात्तज्जातीयसुखान्तरार्थं प्रवृत्तिः स्यादित्याह विशिष्टेति। तुल्यमिति। तददृष्टं यागादिनैवोत्पाद्यम्। यागादौ च प्रवृत्तिरर्थवादोपस्थित

---

प्रकाशः- म्लेच्छप्रसिद्धिर्हेयेति म्लेच्छप्रसिद्धौ निरस्तायां निष्प्रतिपक्षार्थव्यवहाराच्छक्तिग्रहः। यत्र तु वेदविरोधो नास्ति, तत्र पिकादिपदेष्वभियोगवत्त्वान्म्लेच्छानां तत्प्रसिद्धिरेवादरणीयेत्यर्थः।

प्रकृते विधिशेषीभूतं वाक्यशेषमाह सर्वज्ञतेति। तृप्तिः-स्वभोगेच्छाविरहः। अङ्गानि धर्माः। उक्तविशेषणे-दुःखादिसम्भिन्नत्वाभावादिविशिष्टे। याज्ञिकेति।

यत्र वृद्धैरसति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचकः, यथा स्वर्गशब्दः सुखविशेषे प्रयुज्यमानस्तस्य वाचकः। प्रयुज्यते चायं जगत्कर्तरीति। अन्यथा निरर्थकत्वप्रसङ्गे सार्थकपदकदम्बसमभिव्याहारानुपपत्तिरिति। एतेन रुद्रोपेन्द्रमहेन्द्रादिदेवताविशेषवाचका व्याख्याताः।

अपि च – अस्मत्पदं लोकवद्वेदेऽपि प्रयुज्यते। तस्य च लोके नाचेतनेष्वन्यतमदर्थः, तत्र सर्वथैवाप्रयोगात्। नाप्यात्ममात्रमर्थः, परात्मन्यपि प्रयोगप्रसङ्गात्। अपि तु यस्तं स्वातन्त्र्येणोच्चारयति तमेवाह। तथैवान्वयव्यतिरेकाभ्यामवसायात्। ततो लोकव्युत्पत्तिमनतिक्रम्य वेदेऽप्यनेन स्वप्रयोक्तैव वक्तव्यः। अन्यथाऽप्रयोगप्रसङ्गात्। न च यो यदोच्चारयति वैदिकमहंशब्दं स एव तदा तस्यार्थ इति युक्तम्। तथा सति 'मामुपासीते'त्यादौ स एवोपास्यः स्यात्। 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्युपाध्यायशिष्यपरम्परैवात्मन्यैश्वर्यं समधिगच्छेत्। तथा च उपासनां प्रत्युन्मत्तकेलिः स्यात्। लोकव्यवहारश्चोच्छिद्येत। तस्मान्नानुवक्तास्य वाच्यः। अपि तु वक्तैवेति स्थिते प्रयुज्यते – वेदे

आमोदः– विशिष्टसुखप्रतीत्यैव, ईदृशश्चार्थवादः प्रकृतेऽपीत्यर्थः। सार्थकेति। संसर्गपरतयेत्यर्थः। तथा च न स्तोमेन व्यभिचारः। रुद्रादीति। *रुद्रो वै उग्रा देवता* इत्यर्थवादाद्रुद्रपदे, *सहस्राक्ष इन्द्र* इत्यर्थवादादिन्द्रपदे शक्तिग्रह इत्यर्थः। प्रयोगप्रसङ्गादिति परेणेत्यादिः। स्वातन्त्र्येणेति। अन्यथा, 'वाच्यस्त्वया मद्वचनात् स राजा (रघुवंश।१४) इत्यत्र कविरेवाहंपदवाच्यः स्यादिति भावः। तथैवेति। स्वतन्त्रोच्चारयितृवाचकस्यैवेत्यर्थः। स्वप्रयोक्तैवेति। स चेश्वर इत्यर्थः। मामुपासीतेति वेदभागमुच्चारयन् स एव उच्चारयितैव अस्योपास्य इत्यर्थः। तथा सतीति। अनुवक्तृपरम्परैवोपास्या स्यादित्यर्थः।

प्रकाशः– लौकिकसुखातिशयसुखं विना बहुवित्तव्ययायाससाध्ये कर्मणि प्रवृत्तिर्न स्यादित्यर्थः। एतेनेति। रुद्रादिपदेष्वपि रुद्रस्त्र्यम्बक इत्यादिवाक्यशेषान्निर्णय इत्यर्थः।

यदि अस्मच्छब्दस्योच्चारयितरि शक्तिस्तदा 'वाच्यस्त्वया मद्वचनात् स राजे'त्यत्र कविरेवास्मच्छब्देनोच्येतेत्यत उक्तं स्वातन्त्र्येणेति। अन्य कर्तृकत्वेनोच्चारणाभावः स्वातन्त्र्यम्। अत एव 'गृभ्णामि ते सौभगत्वाये'त्यादावपि नेश्वरवाचकत्वम्, अस्यान्यपरतयैव ईश्वरेणोच्चारितत्वात्।

अस्मच्छब्दः स्वप्रयोक्तृवचनः, अस्मच्छब्दत्वाल्लोकवदिति।

एवमन्येऽपि यः कः स इत्यादिशब्दा द्रष्टव्याः। तेषां बुद्ध्युपक्रमप्रश्नपरामर्शाद्युपहितमर्यादत्वात्। तस्य च वक्तृधर्मत्वात्। बुद्ध्युपक्रमो हि प्रकृतत्वं, जिज्ञासाऽऽविष्करणञ्च प्रश्नः, प्रतिसन्धानञ्च परामर्श इति। एवञ्च संशयादिवाचका अप्युन्नेयाः। न च जिज्ञासासंशयादयः सर्वज्ञे प्रातिषिद्धा इति युक्तम्, शिष्यप्रतिबोधनायाहार्यत्वेनाविरोधात्। 'को धर्मः कथं लक्षणक' इत्यादि *भाष्य*वदिति। एतेन धिगहो बत हन्तेत्यादयो निपाता व्याख्याताः।६।

प्रत्ययादपि। लिङादिप्रत्यया हि पुरुषधौरेयनियोगार्था भवन्तस्तं प्रतिपादयन्ति। तथा हि –

---

आमोदः– द्रष्टव्या इति। ईश्वरसाधकत्वेनेति शेषः। कथमेवमत आह तेषामिति। यथासंख्यमन्वयः। उपहितमर्यादत्वादिति। उपहितवाचकत्वादित्यर्थः। एतावता कथं वक्तुः सिद्धिरत आह तेषामिति। प्रकृतत्वं प्रथमं बुद्धावुपनिपतितत्वम्। प्रतिसन्धानमिति। स्मरणारूढस्तत्पदवाच्य इत्यर्थः। उन्नेया इति। संशयाद्याधारसाधकत्वेनेति शेषः। विप्रतिषिद्धा इति दोषाभावादित्यर्थः। निर्दोषस्याप्याहार्यः संशय इत्यत्र दृष्टन्तमाह क इति। एतेनेति। संशयादीनां वक्तृधर्मकथनेनेत्यर्थः। धिगादिशब्दार्थानामपि कुत्साविषयखेदानुशयानां वक्तृधर्मत्वादित्यर्थः।।६।।

लिङादीत्यादिपदेन लिट्तव्यानीयरादयो गृह्यन्ते। नियोगः प्रवर्तनम्, प्रयोजनमर्थो येषां ते नियोगार्था इति।

---

प्रकाशः– अस्मच्छब्दत्वादिति। अनन्यपरास्मच्छब्दत्वादित्यर्थः। तेषामिति क्रमेण यच्छब्दादीनामर्थकथनम्। धर्म इति। 'अथातो धर्मजिज्ञासा' (मी.सू.१।१।१) इत्यनेन शास्त्रप्रयोजनमभिधाय विशेषे धर्मजिज्ञासोः शास्त्रारम्भे शिष्यजिज्ञासामुपादाय मीमांसाभाष्यम् – को धर्मः कथं लक्षणकः कान्यस्य साधनानीति यथेत्यर्थः। एतेन–बुद्ध्युपक्रमादीनां वक्तृधर्मत्वकथनेन। गर्हाविस्मयखेदानुशयानां वक्तृधर्मत्वादित्यर्थः।।६।।

लोके लिङादीनामाप्तेच्छायां शक्तिग्रहाद्वेदेऽपि स एवार्थः। न च वेदार्थे अस्मदादीनामिच्छा सम्भवतीति तदाश्रयेश्वरसिद्धिरित्याह – लिङादीति। नियोगोऽभिप्रायः। अन्येषां लिङर्थत्वे बाधकस्य वक्तव्यत्वादित्यर्थः।

**प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा।**
**तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा।।७।।**

**प्रवृत्तिः खलु विधिकार्या सती न तावत्कायपरिस्पन्दमात्रम्, आत्मा ज्ञातव्य इत्याद्यव्यापनात्। नापीच्छामात्रम्, तत एव फलसिद्धौ कर्मानारम्भप्रसङ्गात्। ततः प्रयत्नः परिशिष्यते। आत्मज्ञानभूतदयादावपि तस्याभावात्। तदुक्तं 'प्रवृत्तिरारम्भ' इति। सेयं प्रवृत्तिर्यतः सत्तामात्रावस्थितात्, नासौ विधिः, तत्र शास्त्रवैयर्थ्यात्। अप्रतीतादेव**

---

आमोदः- प्रवृत्तिरिति। कृतिरेव प्रयत्न एवेत्यर्थः। 'सा कृतिर्यतो भवति सा इच्छा चिकीर्षा इत्यर्थः। यतश्चिकीर्षा भवति तज्ज्ञानं चिकीर्षाज्ञानस्य यो विषय इष्टसाधनत्वादिर्मतभेदेन स विधिः विधिप्रत्ययार्थः। *स्वाभिमत*माह तज्ज्ञापक इति। तदनुमापकः प्रमाभिप्राय इति यावत्।

प्रवृत्तेः कृतित्वनिर्वाहाय परिशेषमाह प्रवृत्तिरिति। विधिकार्येत्यत्र विधिपदं विधायकवाक्यपरम्। ज्ञातव्य इति। ज्ञानानुकूलस्पन्दाभावादित्यर्थः। तत एवेति। इच्छामात्रादेव फलस्य स्वर्गादेरुत्पत्तौ कर्मणो यागादेरननुष्ठानप्रसङ्गादित्यर्थः। स्वाभिमतमाह तत इति। आत्मज्ञानेति। श्रवणमनननिदिध्यासनादेः प्रयत्नसाध्यत्वात् भूतदयादीनामपि प्रयत्नविषयत्वोपपादनादित्यर्थः।

तदुक्तमिति। 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति गौतमीयसूत्रे [न्या०सू० 1.1.17] यत इति मनःसंयोगादेरित्यर्थः। नासौ विधिरिति। न लिङादिवाच्य इत्यर्थः। तत्रेति। तद्बाधनार्थं शास्त्रं न स्यादित्यर्थः। एतदेव स्फुटयति अप्रतीतादेवेति। ननु लिङादिना प्रवृत्तिहेतुः कश्चिदुत्पाद्यतामत्रैव शास्त्रमुप

---

प्रकाशः- प्रवृत्तिरिति। अन्यत्र ज्ञानादेरपि प्रवृत्तिपदवाच्यत्वेऽत्र कृतिरेव सा विवक्षितेत्यर्थः। तथा च कृतिकारणेच्छाज्ञानविषयो विधिरि*त्यन्येषां* मतम्। *स्वमत*माह तज्ज्ञापक इति।

यथा चाप्तेच्छाविषयत्वेन प्रवर्त्तकज्ञानविषय इष्टसाधनत्वमनुमीयते, तथा वक्ष्यति। तच्च *परमत*निरासं विना न भवतीति तन्निराकर्तुमाह प्रवृत्तिः खल्विति। विधिकार्या-विधिज्ञानकार्येत्यर्थः। आत्मेति। चेष्टां विनापि विध्यर्थसत्वादित्यर्थः। तत एवेति। इच्छामात्रेण विध्यर्थनिर्वाहे बहुवित्तव्ययायाससाध्ययागाद्यकरण प्रसङ्गादित्यर्थः। तत इति। कृतौ नायम्, क्रियमाणयागस्योपयोगादित्यर्थः। आत्मज्ञानेति। मोक्षकामस्य ज्ञानविधाने भूतेषु दयाविधाने च तेषामभावेऽपि

कुतश्चित् प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात्। न च प्रवृत्तिहेतुजननार्थं तदुपयोगः, प्रवृत्तिहेतोरिच्छाया ज्ञानयोनित्वात् ज्ञानमनुत्पाद्य तदुत्पादनस्याशक्यत्वात्। तस्य च निरालम्बनस्यानुत्पत्तेरप्रवर्त्तकत्वाच्च, नियामकाभावात्। तस्माद् यथा ज्ञानं प्रयत्नजननीमिच्छां प्रसूते, सोऽर्थविशेषस्तज्ज्ञापको वार्थविशेषो विधिः, प्रेरणा, प्रवर्तना, नियुक्तिर्नियोगः, उपदेश इत्यनर्थान्तरमिति स्थिते विचार्यते। स हि कर्तृधर्मो वा स्यात्, कर्मधर्मो वा, करणधर्मो वा, नियोक्तृधर्मो वेति?।७।

न प्रथमः –

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः।
असत्त्वात्प्रत्ययत्यागात्कर्तृधर्मो न सङ्करात्।।८।।

आमोदः– करिष्यति इत्यत आह न चेति। प्रवृत्तिं प्रति हेतुरिच्छैव, सा च ज्ञानाधीनैवेति ज्ञानमेव शास्त्रेणोत्पाद्यं, तच्च ज्ञानं सविषयकं निर्विषयकस्यानुत्पत्तेर्यत्र क्वचित् प्रवर्तकत्वप्रसङ्गाच्चेत्यर्थः। सोऽर्थविशेष इष्टसाधनत्वादिर्विद्यमानः पर्यवस्यतीत्यर्थः। पर्यायोत्कीर्तनेन प्रवर्तकज्ञानविषयत्वं विधित्वमिति दर्शयति। विचारार्थं विकल्पयति स हीति। प्रवर्तकज्ञानविषय इत्यर्थः। कर्तृधर्म इति। यागादिकर्तुर्नियोज्यस्य स च स्पन्दः प्रयत्नः इच्छा वा स्यादिति भावः। कर्मपदेन यागादिक्रिया तद्धर्मः कार्यत्वादिव पूर्वस्य वा कर्मणः कश्चिद्धर्मः इत्यर्थः। करणधर्म इति। करणस्य यागादेरेव धर्म इष्टसाधनत्वमित्यर्थः। नियोक्त्रिति। नियोक्ता उपदेष्टा, तस्य धर्मोऽभिप्राय इत्यर्थः।७।

चरमं पक्षमुपग्रहीतुं परिशेषमाह इष्टहानेरिति। यदि कर्तृधर्मः स्पन्दो विधिः

---

प्रकाशः– यत्नस्य सत्त्वादित्यर्थः। आरम्भो–यत्नः। तत्प्रत्यायनार्थमिति। शास्त्रस्य ज्ञापकतया स्वरूपसद्धेतौ शास्त्रानुपयोगादित्यर्थः। तदिदं *परमत*निराकरणं विना न सिद्ध्यति, तदर्थमुपन्यस्यति स हीति। कर्त्तृधर्मः–प्रवर्त्त्यपुरुषधर्मः। स्पन्द इच्छा प्रयत्नो वा। कर्मधर्मोऽपूर्वस्य क्रियाया वा धर्मः कार्यत्वादिः। करणधर्म इष्टसाधनत्वं शब्दव्यापारो भावना वा। नियोक्तृधर्म आप्ताभिप्रायः।।७।।

---

मकरन्दः– स्पन्द इति। यद्यपि स्पन्दो न पुरुषधर्मस्तथापि तदवच्छिन्नशरीरे स्पन्द इति तथोक्तम्।

**स हि न स्पन्द एव, आत्मानमनुपश्येदित्याद्यव्याप्तेः। 'ग्रामं गच्छती'त्यादावतिव्याप्तेश्च। नापि तत्कारणं प्रयत्नः, तस्य सर्वाख्यातसाधारणत्वात्।**

---

**आमोदः**– स्यात् तदाऽत्मा ज्ञातव्यो, भूतेभ्यो दयां कुर्यादित्यादावव्याप्तिः, जलताडनादि स्पन्दोऽपि विधिः स्यादित्यतिव्याप्तिरित्याह **अनिष्टाप्तेरिति।** स्पन्दज्ञानञ्च न प्रवर्तकमिति भावः। यत्नस्य प्रवर्तकत्वं दूषयति **अप्रवृत्तेरिति।** न हि प्रयत्नज्ञानं प्रवर्तकमिति भावः। यत्नमात्रस्यानिष्टसाधनसधारण्यादित्येके। इच्छाविधित्वं दूषयति **विरोधत इति।** न हि इच्छाज्ञानमेवेच्छां प्रसूते, न वा इच्छैवेच्छामित्यर्थः। नन्विच्छा ज्ञातैव प्रवृत्तिहेतुरित्यत आह **असत्त्वादिति।** न च लिङादिश्रुतिकाले सा सती, तत्सत्त्वकाले वा प्रवृत्तिपूर्वं तज्ज्ञानसम्भव इति भावः। किञ्च इच्छाया इच्छाजनकत्वे प्रत्ययस्य इच्छाजनकत्वमन्वयव्यतिरेकसिद्धं व्यक्तं स्यादित्याह **प्रत्ययत्यागात् इति।** स्पन्देच्छायत्नानां कर्तृधर्माणाम् एकत्र यागादौ साङ्कर्यादन्यतरस्य विधित्वेनानिर्णयादित्याह **सङ्करादिति।** सङ्कर इच्छादिसङ्कल्पः चिकीर्षेति यावत्। यद्वा, सङ्कराद् गौरवसङ्कीर्णत्वादित्यर्थः। प्रयत्नजनकचिकीर्षाया इष्टसाधनताज्ञानसाध्यत्वेन तस्यामेव लाघवेन विधि-शक्तिकल्पनात् इच्छायां विधिशक्तौ गौरवमित्यर्थः।

**नापि प्रयत्न इति।** लिङ्वाच्यो विधिरित्यर्थः। **सर्वाख्यातेति।** भावनाख्यस्य यत्नस्य लडादिसर्वाख्यातसाधारणतया लिङाख्यातविशेषणं किमुपनेयं यतः प्रवृत्तिः

---

**प्रकाशः**– तत्र स्पन्दस्य विधित्वं दूषयति **इष्टहानेरिति।**

अव्याप्त्यतिव्याप्तिभ्यामित्यर्थः। यत्नस्य विधित्वं दूषयति **अप्रवृत्तेरिति।** यत्नमात्रस्यानिष्टसाधनसाधारण्यादित्यर्थः। इच्छाया विधित्वे बाधकमाह **विरोधत इति।** इच्छाया विधित्वे तयैव तज्जननाद्विरोध इत्यर्थः। न चेच्छा ज्ञाता प्रयत्नजननी, किन्तु सत्तया। न च लिङ्श्रवणकाले सा सतीत्याह **असत्त्वादिति।** न च लिङेव तां जनयति। तत्र ज्ञानकारणत्वत्यागापत्तेः, लिङं विनापीच्छोत्पत्तेश्चेत्याह **प्रत्ययेति।** उपायगोचरप्रवृत्ताविष्टसाधनत्वज्ञानस्य हेतुत्वनिश्चयात् तत्सङ्कीर्णेच्छायाः प्रवर्त्तकत्वे लाघवादिष्टसाधनतैव विधिरित्याह **सङ्करादिति।**

करोतीत्यत्र यत्नस्य कृधातुनैवोक्तत्वादाख्यातमात्रस्य यत्नार्थत्वे पौनरुक्त्यं

**ननु न सर्वत्र प्रयत्न एव प्रत्ययार्थः। करोतीत्यादौ प्रकृत्यर्थातिरेकिणस्तस्याभावात्। संख्यामात्राभिधानेन प्रत्ययस्य चरितार्थत्वात्। ततो लिङादिवाच्य एव प्रयत्न इति। न, कुर्यादित्यत्रापि तुल्यत्वात्। प्रयत्नमात्रस्य प्रकृत्यर्थत्वेऽपि तस्य पराङ्गतापन्नस्य प्रत्ययार्थत्वान्न तुल्यत्वमिति चेन्न। तथापि तुल्यत्वात्। न चैकस्य तद्वाचकत्वेऽन्यस्य तद्विपर्यय आपद्येत, एको द्वौ बहव एषिषतीत्यादौ व्यभिचारात्। तत्र द्वितीयसंख्येच्छादिकल्पने करोति, प्रयतते इत्यादावपि तथा स्यात्।**

---

**आमोदः**– स्यादित्यर्थः। **प्रकृत्यर्थेति**। प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकता न स्यात् यद्यर्थभेदो न स्यादित्यर्थः। नन्वेवं कृधातोः परस्य लडादेर्निरर्थकतैव स्यादित्यत आह **संख्यामात्रेति**। **प्रत्ययस्येति**। लडाख्यतस्येत्यर्थः। ननु चैत्रः कुर्यादित्यत्र कृञः प्रयत्नमात्रमर्थः प्रयत्नविशेषस्तु चैत्रादिसम्बन्धी लिङादिवाच्य इति पौनरुक्त्यमिति शङ्कते **प्रयत्नमात्रस्येति**। तर्हि करोतीत्यादावपि तथैव स्यादिति परिहरति **तथापीति**। प्रकृतिप्रत्यययोरभिन्नार्थतां दृष्टान्तेनाह **एक इति**। अत्र संख्याद्वयमिच्छाद्वयञ्च प्रकृतिप्रत्ययाभ्यामुपस्थाप्यते, परन्त्वन्वयाभिधानदशायां योग्यताबलादेकमेवान्वेतीति यदा, तदा प्रकृतेऽपि समानमित्याह **तत्रेति**। ननु

---

**प्रकाशः**– स्यादिति नाख्यातमात्रं यत्नमभिधत्ते, किन्तु लिङेवेत्याह **नन्विति**। ननु यदि प्रकृत्यर्थातिरिक्तो नाख्यातार्थः, तदा तत्प्रयोगो व्यर्थ इत्यत आह **संख्येति**। एकत्वादिसंख्यामात्रमाख्यातार्थः, तत्प्रत्यायनार्थमेव तत्प्रयोग इत्यर्थः। तर्हि लिङपि न यत्नार्थः, कुर्यादित्यत्र पौनरुक्त्यापत्तेः। अथाख्यातात् कृतेरुपस्थितावपि तात्पर्याभावात् सा नान्वीयते, किन्तु संख्यामात्रम्, तर्हि करोतीत्यादावपि तुल्यमित्याह **कुर्यादित्यत्रेति**। यदि कुर्यादित्यत्र यत्नमात्रं कृधात्वर्थः, तस्य च चैत्रादि सम्बन्धित्वमनुकूलत्वं वा प्रत्ययार्थ इति विशेषः, तदा करोतीत्यादावपि तुल्यमिति शङ्कोत्तराभ्यामाह **प्रयत्नमात्रस्येति**।

अपि च कृतेर्धात्वर्थत्वेऽपि प्रत्ययस्य तदर्थत्वं न दोषाय, प्रकृति प्रत्यययोरन्यत्र समानार्थत्वदर्शनादित्याह **न चेति**। एकस्य प्रकृतिरूपस्य, अन्यस्य प्रत्ययरूपस्य,तद्विपर्ययस्तदवाचकत्वमित्यर्थः। अथैक इत्यादौ प्रकृत्यर्थातिरिक्तं द्वितीयमेकत्वादिकम्, एषिषतीत्यत्रापरेच्छा प्रत्ययार्थः, तदा करोतीत्यत्र यत्नान्तरमेवाख्यातार्थ इत्यस्त्वित्याह **तत्रेति**।

प्रत्येकमन्यत्र सामर्थ्यावधृतौ सम्भेदे तथा कल्पनायास्तुल्यत्वात्। 'रथो गच्छती'त्यादौ तदसम्भवे का गतिरिति चेत्, तन्तवः पटं कुर्वन्तीत्यत्र या। लोकोपचारोऽयमपर्यनुयोज्य इति चेत्, तुल्यम्। लिङः, कार्यत्वे वृद्धव्यवहाराद्व्युत्पत्तौ सर्वं समञ्जसम्। आख्यातमात्रस्य तु न तथेति चेन्न। विवरणादेरपि व्युत्पत्तेः। अस्ति च तदिह - किं करोति? पचति, पाकं करोतीत्यर्थ इत्यादिदर्शनात्। तथापि फलानुकूलतापन्न धात्वर्थमात्राभिधाने तदतिरिक्तप्रयत्नाभिधानकल्पनायां कल्पनागौरवं

---

आमोदः- तथापि पौनरुक्त्यं न समाहितमित्यत आह प्रत्येकमिति। सामग्री-वशादुभाभ्यामेकोपस्थितौ पुनरुक्तदोषाभाव इत्यर्थः। तदसम्भव इति। यत्नार्थता अचेतने न सम्भवतीत्यर्थः। येति गतिरित्यनुषङ्गः। लोकेति। अत्र पटानुकूलव्यापारवन्तस्तन्तव इत्याख्यातस्य व्यापारमात्रे लक्षणा इत्यर्थः। तुल्यमिति। रथो गच्छतीत्यादावपि व्यापारमात्रे लक्षणेत्यर्थः। ननु पचेत्-स्नायादित्यादिश्राविणः पाकानुकूलयत्ने प्रवृत्तिदर्शनात् लिङादीनामेव यत्नार्थतेति शङ्कते लिङ इति। आख्यातान्तरस्यापि यत्नार्थतानिश्चयो विवरणादेवेत्याह नेति। विवरणमेव विवृणोति अस्ति चेति। ननु पाकं करोतीत्यत्र विवरणमपि फलानुकूलव्यापारवानित्येवम्। तथा च व्यापारो व्याख्यातार्थो व्यापारविशेषो वा इत्यत्र लाघवमेव नियामकमाशङ्कते तथापीति।

---

प्रकाशः- ननु द्वितीयसंख्येच्छा यत्नाननुभवान्न तथा, प्रकृतिप्रत्यययोः साम्येनान्वयानुपपत्तेरित्यत आह प्रत्येकमिति। तथा चोभयोपस्थिते-रावश्यकत्वेनैकस्यानन्वयेऽप्यदोषादित्यर्थः। रथो गच्छतीत्यादावित्यादिपदाज्जानाति यतते निद्रातीत्यादेर्ग्रहणम्। तत्र धात्वर्थानुकूलयत्नाभावेऽप्याख्यातप्रयोगात्। यदि चाचेतने व्यापारमात्रमाख्यातार्थः, तदा चेतनेऽपि तथेत्यर्थः। कृधातोर्यत्नार्थ-त्वस्योभयसिद्धत्वादचेतने यथा करोतेः प्रयोगो लाक्षणिकः, तथा रथो गच्छतीत्यादावाख्यातस्येत्याह तुल्यमिति। लिङः स्वात्मनि प्रवर्त्तकत्वेन ज्ञाते कार्यताज्ञाने वृद्धव्यवहारेण शक्तिग्रहात्तस्य प्रयत्नार्थत्वे मानमस्ति, न त्वाख्यातमात्रस्येत्याह लिङ इति। पचति पाकं करोतीत्यादौ यत्नार्थक करोतिना सर्वाख्यातविवरणाद् वृद्धव्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः। किं करोतीति यत्नविशेषप्रश्ने, पचतीत्युत्तरस्य यत्नार्थत्वं विनानुपपत्तेश्च प्रकृतेऽपि मानमस्तीत्याह विवरणादेरिति।

**स्यात्। अतो विवरणमपि तावन्मात्रपरमिति चेत्, भवेदप्येवं, यदि पाकेनेति विवृणुयात्। न त्वेतदस्ति, धात्वर्थस्यैव पाकमिति साध्यत्वेन निर्देशात्। ततस्तं प्रत्येव किञ्चिदनुकूलतापन्नं प्रत्ययेनानभिधानीयमिति युक्तम्।**

---

**आमोदः- भवेदेवमिति।** पाकस्य धात्वर्थस्य तुषप्रक्षेपणरूपव्यापारकलापस्य फलमोदनादिकं प्रति अनुकूलता यदि विवरणप्रतिपाद्या, तदा किं करोति पचतीति, पाकेन व्यापारकलापस्य साध्यत्वेन निर्देशश्चेत्, नूनं तत्साधकं यत्नस्वरूपमेवं विवरणीयमित्यर्थः। न हि यत्नं विना तुषादिप्रक्षेपो धात्वर्थः सम्भवतीति भावः। **किञ्चिदिति।** यत्नस्वरूपमित्यर्थः। **न त्वन्येनेति।** व्यापारान्तरेणेत्यर्थः। **तथेति** यत्नार्थत्वेनेत्यर्थः। **तस्येति** विवरणस्येत्यर्थः। भवति हि कोकिलः पिक इत्यादौ विवरणाधीनैव व्युत्पत्तिः। **अतिप्रसङ्गादिति।** अन्यत्रापि विवरणेऽर्थान्तरशङ्का स्यादित्यर्थः।

---

**प्रकाशः-** ननु धातुः स्वरूपेण स्वार्थं भावमाह, आख्यातन्तु यावता कर्मक्षणनिश्चयेन फलं सिद्ध्यति तावति वर्त्तते, ओदनं पचतीति दर्शनात्, न ह्येकेन कर्मक्षणेनौदनः सिद्ध्यति। अतः फलार्थो व्यापारसमूहो भाव्यत्वाद्भावनेत्युच्यते। भाव्यमानस्तु तस्य फलसाधनत्वात्। फलानुकूलताविशिष्टयत्नवाच्यत्वे तु कल्पनागौरवमिति शङ्कते **तथापीति।** पचेस्तावत्तुषबुषप्रक्षेपणादिव्यापारकलाप एवार्थः। तस्यैव रूपपरावृत्तिलक्षणफलं प्रत्यनुकूलता आख्यातवाच्या। अधिकयत्नस्यापि वाच्यत्वे गौरवमिति शङ्कार्थः। **तावन्मात्रपरं**-धात्वर्थस्य फलानुकूलतामात्रपरं, न तु यत्नपरमित्यर्थः।

ओदनं पचतीत्यत्र धात्वर्थः पाक ओदनानुकूल इत्यर्थे काष्ठेनौदनं पचतीतिवदोदनं पाकेन करोतीति प्रयोगप्रसङ्गात्। न चेष्टापत्तिः। किं करोति! पचति, पाकं करोतीत्यनुभवस्य सार्वलौकिकत्वात्, कर्त्रन्वयानुपपत्तेश्चेति परिहरति **भवेदप्येवमिति।** एवमप्यनुकूलव्यापारमात्रमाख्यातार्थोऽस्तु, न त्वनुकूलयत्नः।

---

**मकरन्दः- तत्र न प्रथम** इति मूलं कर्तृधर्मो नेति कारिकया गतार्थमिति यद्यपि, तथापि स्पन्दादित्रिके प्रथमः स्पन्दो नेत्यर्थः। उपसंहारश्च कर्तृधर्मो नेत्येके।

**काष्ठेनौदनं पचतीतिवदिति।** यद्यपि काष्ठकरणकः पाक ओदनानुकूल इत्यन्वयसम्भवात् प्रयोगेऽपि पाकेन पचतीति न प्रयोगप्रसङ्गः, पाके पाककरणत्वानन्वयात्, तथापि पाकं करोतीति विवरणं न स्यादित्यत्रैव तात्पर्यम्।

तथापि तेन प्रयत्नेनैव भवितव्यं, न त्वन्येनेति कुत इति चेत्, नियमेन तथा विवरणात्। बाधकं विना तस्यान्यथाकर्तुमशक्यत्वात्। अन्यथातिप्रसङ्गात्।८।

स्यादेतत्, यस्य कस्यचित् फलं प्रत्यनुकूलतापत्तिमात्रमेव करोत्यर्थो, न तु प्रयत्न एव। सोऽपि ह्यनेनैवोपाधिना प्रत्ययेन वक्तव्यो, न तु यत्नमात्रेण, प्रयत्नपदेनाविशेषप्रसङ्गात्। तद्वरं तावन्मात्रमेवास्तु लाघवाय। अन्यथा त्वनुकूलत्वप्रयत्नत्वे द्वावुपाधी कल्पनीयौ। अचेतनेषु सर्वत्र गौणार्थास्तिङोऽसति बाधके कल्पनीया इति चेत् अत्रोच्यते –

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना।।९।।

---

आमोदः– ननु यत्नोऽप्यनुकूलव्यापारत्वेनैवाभिधीयतां, न तु यत्नत्वेन, अन्यथाऽख्यात यत्नपदयोः पर्यायतापत्तिरित्याह स्यादेतदिति। तावन्मात्रमेवेति। धात्वर्थानुकूलत्वमात्रमेवेत्यर्थः। युक्त्यन्तरमाह अचेतनेष्विति। असति बाधके इति। रथो गच्छतीत्यादावपि गमनानुकूलव्यापारमात्रप्रतीतौ लक्षणानु पयोगादित्यर्थः।।८।।

---

प्रकाशः– तथात्वे बाधकं विनैवाख्यातमचेतनेषु गौणं कल्प्यमिति गौरवमित्याह तथापीति। यत्नार्थं करोतिनाख्यातार्थस्य विवरणात् तस्य चाबाधितत्वात् प्रमाणवतो गौरवस्यापि न्याय्यत्वादित्याह नियमेनेति।।८।।

ननु करोतिर्न यत्नार्थः, किन्त्वनुकूलव्यापारमात्रार्थः। यत्नोऽप्यनुकूलत्वे नैवाख्यातार्थः। अन्यथा आख्यातार्थस्य यत्नपदपर्यायतापत्तेः। अत एव – यत्न एवाख्यातार्थः, आनुकूल्यन्त्वन्वयलभ्यम् – इत्यपास्तम्। एवञ्च धात्वर्थस्य पाकादेः साध्यताप्युपपद्यते। न च धातुनैव स्वार्थः साध्यत्वेनोच्यते इति वाच्यम्। पाक इत्यत्रापि तत्प्रतीत्यापत्तेः। यत्नस्य वाच्यत्वेन गौरवापत्तेः। मुख्ये बाधकं विनैव रथो गच्छतीत्यादावाख्यातस्य गौणत्वापाताच्चेत्याह – यस्य कस्यचिदिति।

---

मकरन्दः– यद्वा एतदस्वरसादेव स्वयं हेत्वन्तरमाह कर्त्रन्वयानुपपत्तेश्चेति, चैत्र ओदनं पचतीति शेषः। *परिमलस्तु* एवं पाकस्य साध्यता न प्रतीयेत, किन्तु सिद्धता, ततः पाकसिद्धताज्ञापकप्रयोगोपलक्षणपरं पाकेनेत्युक्तमिति।।८।।

यत्नपूर्वकत्वं हि प्रतिसन्धाय घटादौ कृत इत व्यवहारात्। हेतुसत्त्वप्रतिसन्धानेऽपि यत्नपूर्वकत्वप्रतिसन्धानविधुराणामङ्कुरादौ तदव्यवहारात् करोत्यर्थो यत्न एव तावदवसीयते। अन्यथा हि यत्किञ्चिदनुकूलपूर्वकत्वाविशेषात् घटादयः कृताः, न कृतास्त्वङ्कुरादय इति कुतो व्यवहारनियमः। तेन च सर्वमाख्यातपदं विव्रियते इति सर्वत्र स एवार्थ इति निर्णयः। तथा च समुदिते प्रवृत्तं पदं तदेकदेशेऽपि प्रयुज्यते,

---

**आमोदः**– कृताकृतविभागेनेति व्याचष्टे यत्नेति। स एव यत्न एव। सर्वत्र गौणार्थास्तिङः कल्पनीया इति समाधत्ते समुदित इति। यत्नत्वसमानाधिकरण पूर्वापरीभूतानुकूलत्वं समुदितमाख्यातवाच्यम्। रथो गच्छतीत्यादावयोग्यतया यत्नत्वं न भासते। पूर्वापरीभूतानुकूलत्वं तु तदेकदेशभूतं भासते। एवं च पङ्कजं कुमुदमित्यत्रापि रूढ्यर्थयोग्यतया योगार्थान्वयो लक्षणां विनैवेति भावः।

---

**प्रकाशः**– क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वप्रतिसन्धानेन घटाङ्कुरयोः कृताकृतव्यवहारात् तृजन्तकृधातुव्युत्पन्नकर्तृपदस्य कृत्याश्रयवाचकत्वाच्च कृञो यत्नार्थत्वम्। क्रियामात्रार्थत्वे तु क्रियाश्रयः कर्तृपदार्थः स्यादिति कारकमात्रेऽतिप्रसङ्गः। एवञ्च कृञो यत्नार्थकत्वात् तेन चाख्यातविवरणात्तस्यापि यत्नार्थकत्वमित्याह कृताकृतेति। कृतिश्च करोत्यर्थः। एवमाख्यातस्य यत्नपदपर्यायतापत्तिं निरस्यति पूर्वेति। परस्मिन्नुत्तरकालवर्त्तिनि धात्वर्थे सति सैव कृतिरेव पूर्वा साधनीभूता भावनेत्युच्यते। तेन फलसाधनीभूतः प्रयत्नो भावना, सैव चाख्यातवाच्या। यद्वा फलानुकूलधात्वर्थपूर्वापरव्यापारप्रचयनिका पूर्वापरस्मिन् पूर्वापरीभूतत्वे सति कृतिराख्यातार्थो भावना। भाव्यते फलमनयेति व्युत्पत्त्येत्यर्थः।

नन्वेवं पूर्वापरीभूतत्वं यत्नत्वमनुकूलत्वञ्चेति त्रितयमाख्यातवाच्यमिति तदभावे कथमाख्यातपदमचेतनेषु प्रयुज्यते इत्यत आह तथा चेति। यत्नस्य

---

**मकरन्दः**– अत एवेति। यत्नपदपर्यायतापत्तेरित्यर्थः। नन्वत्रेष्टापत्तावपि न क्षतिरित्याशङ्क्याह गौरवापत्तेरिति। व्यापारस्य सामान्यतया लघुत्व-मित्यभिमानेनेदम्।

नन्वेवमिति। यद्यपि द्वयवाच्यतयैव यत्नपदपर्यायतानिरासस्तथापि पूर्वापरीभूतत्वप्रकारकप्रतीतिमभ्युपेत्य तदप्याख्यातपदवाच्यमित्युक्तमिति ध्येयम्।

**विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत्। अन्यथापि मध्यमोत्तमपुरुषगामिनः प्रत्ययाः, प्रथमे पुरुषे जानाति, इच्छति, प्रयतते, अध्यवस्यति, शेते, संशेते इत्यादयश्च गौणार्था एवाचेतनेषु।**

---

**आमोदः**– दृष्टान्तमाह **विशुद्धीति**। ब्राह्मणत्वसमानाधिकरणविशुद्धपितृ-मातृ-योनिजत्वे सति छन्दोऽध्येतृत्वं यत् समुदितं श्रोत्रियपदवाच्यं तत्र छन्दोऽध्येतृत्वमनधीतवेदब्राह्मणेऽयोग्यतया नान्वेति, किन्तु ब्राह्मणत्वे सति विशुद्धयोनिजत्वपुरस्कारेण प्रवर्तते, न तु लाक्षणिकमित्यर्थः। अपि च अचेतने गौणत्वभिया व्यापारे शक्तिः कल्पनीया, तच्च *तवा*प्याषतितमित्याह **अन्यथापी**'ति। व्यापारशक्तावपीत्यर्थः।

---

**प्रकाशः**– पूर्वापरीभूतत्वानुकूलत्वे प्रवृत्तमाख्यातं, धात्वर्थस्य फलानुकूलतामात्रे रथो गच्छतीत्यादौ प्रयुज्यते इति लाक्षणिकमित्यर्थः। समुदितप्रवृत्तस्य पदस्यैकदेशे प्रयोगे निदर्शनमाह **विशुद्धिमात्रमिति**। श्रोत्रियश्छन्दोऽधीते (पा.सू. ५।२।८४) इत्यनुशासनाच्छन्दोऽध्येतृब्राह्मणव्यक्तिः, 'जन्मना ब्राह्मणो ज्ञेय' इति स्मृतेर्जन्मसंस्कारविद्यासमुदायवद्ब्राह्मणव्यक्तिर्वा श्रोत्रियपदशक्या। अतो विशुद्धब्राह्मणमात्रे यथा लक्षणया प्रयोगः। विशिष्टशक्तपदस्य विशेषणे शक्यसम्बन्धिनि तात्पर्यादित्यर्थः। ननु शक्यैकदेशे प्रयोगो न लाक्षणिकः। उपस्थित्यर्थं हि लक्षणा, विशिष्टशक्तपदाद्विशिष्टोपस्थितौ विशेषणमप्युपस्थित-मेवेत्ययोग्यतया विशेष्यांशमपहाय विशेषणान्वयस्य मुख्यवृत्त्यैवोपपत्तेः। मैवम्। तस्य धर्म्यन्तरान्वितत्वेनोपस्थितस्येतरधर्म्यनाकाङ्क्षततया स्वतन्त्रतदुपस्थित्यर्थं लक्षणाया न्याय्यत्वात्।

अत एव 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र पुरोडाशप्रयोजन-कत्वेनोपस्थितस्य कपालस्य प्रयोजनान्तरानाकाङ्क्षतत्वात् स्वतन्त्रकपालोपस्थित-येऽधिष्ठानलक्षणा। पङ्कजं कुमुदमित्यत्र पद्मगतत्वेन उपस्थितस्य पङ्कजनिकर्तृत्वस्य धर्म्यन्तरनिराकाङ्क्षतत्वात् कुमुदपरत्वे पङ्कपदस्य लक्षणेति विपञ्चितं द्वितीयाध्याये।

अपि च अचेतनेषु सर्वत्राख्यातस्य गौणत्वं मा भूदिति मानिनस्तव यत्नस्याख्यातवाच्यत्वानभ्युपगमः। तच्च तवाप्यापतितमित्याह **अन्यथापीति**। मध्यमोत्तमपुरुषलिङ्गोः सम्बोध्यवक्तृविषयत्वाच्चित्रस्यादौ तत्प्रयोगः। प्रथमपुरुषेऽपि जानातीत्यादिप्रयोगश्चाचेतने *त्वन्मते* यथा गौणस्तथा *स्मन्मते* रथो गच्छतीत्यादावपि प्रयोग इत्यर्थः। न चाक्षादिपदवदनेकार्थत्वम्। अक्षादिपदवैधर्म्येण

**न च वृत्त्यन्तरेणापि प्रयोगसम्भवे शक्तिकल्पना युक्ता, अन्यायश्चानेकार्थत्वमिति स्थितेः। अत एवानुभवोऽपि, यावदुक्तं भवति, पाकानुकूलवर्तमानप्रयत्नवांस्तावदुक्तं भवति पचतीति। एवं तथाभूतातिवृत्तप्रयत्नोऽपाक्षीदिति। एवं तथाभूतभाविप्रयत्नः पक्ष्यतीति। न तु पचतीति पाकानुकूलयत्किञ्चिद्वानिति। अन्यथाऽतिथावपि परिश्रमशयाने पचतीति प्रत्ययप्रसङ्गात्।**

---

**आमोदः–** *मेघदूतादौ* **आसारेण त्वमपि शमयेरित्यादौ** तथा दर्शनात्।

सम्बोध्ये मध्यमपुरुषस्य वक्तरि चोत्तमपुरुषस्यानुशासनात्। सम्बोध्यत्व वक्तृत्वं वचनेन तस्यैवेत्यर्थः। प्रथमपुरुषेऽपि जानातीति प्रयोगोऽचेतने यथा *त्वन्मते* गौणस्तथा*ऽस्मन्मतेऽपि* रथो गच्छतीत्यादावित्यर्थः। ननु चाचेतने धात्वर्थानुकूलो व्यापारोऽन्यत्र तु यत्न एवाख्यातार्थः स्यादित्यक्षादि-पदवन्नानार्थतैवास्त्वित्यत आह **न चेति। वृत्त्यन्तरेणापीति।** एकदेश मात्रपरत्वेनापीत्यर्थः। यद्वा, लक्षणयेत्यर्थः। एवञ्च पङ्कजं कुमुदमिवापि स्वतन्त्रोपस्थितये लक्षणा। यथा *पुरोडाशकपालेन तुषानावपति* इत्यादौ पुरोडाशश्रपणप्रयोजनकत्वेनोपस्थितकपालस्य तुषावापेऽन्वयमलभमानस्य स्वतन्त्रोपस्थितये लक्षणा। अत एव गौर्जात इत्यादौ व्यक्त्युपस्थितये लक्षणा। वस्तुतस्तु पङ्कजादिपदे गवादिपदे वैकदेशपरतया प्रयुज्यमानेऽपि लक्षणेति *शब्दमयूखे* विवृतम्। यत्नस्याख्यातार्थत्वेऽनुभवं प्रमाणयति **अत एवेति। यत्किञ्चिद्वानिति।** यत्किञ्चिद्व्यापारवानित्यर्थः। **अन्यथेति।** श्रमशान्तेः

---

**प्रकाशः–** एकत्रैव वाचकता, अन्यत्र वृत्त्यन्तरेणापि प्रयोगोपपत्तेरित्याह **न चेति।** अत्रैवानुभवं प्रमाणयति **अत एवेति। अतिथावपीति।** श्रमाच्छयानस्य श्रमशान्तेः पाकानुकूलत्वादित्यर्थः। कर्तृरूपव्यवस्थयेति व्याचष्टे **अपि चेति।** यस्य व्यापारं धातुराख्यातं वा प्राधान्येनाभिधत्ते, स्वतन्त्रश्चेतनोऽचेतनश्च स कर्त्तेत्यत्राभिधानं यदि विशेषणं, तत्राह **न हीति।** कर्तृत्वमज्ञात्वा तत्र कर्तृपदप्रयोगाभावादवगते कर्तृत्वे शब्देन तदभिधानम्।

---

**मकरन्दः– अक्षादिपदवैधर्म्येणेति।** विनिगमकाभावात्तत्रोभयत्र शक्त्या नानार्थत्वमत्र चैकत्रैव निरुपाधिप्रयोग इत्यत्र लक्षणा, अन्यथा गङ्गादिपदस्यापि तीरादौ लक्षणा न स्यादित्यर्थः।

अपि च – कर्तृव्यापार एव कृञर्थः, चेतनश्च कर्ता, अन्यथा तद्व्यवस्थानुपपत्तेः। न ह्यभिधीयमानव्यापारवत्त्वं कर्तृत्वम्, अनभिधानदशायां कुर्वतोऽप्यकर्तृत्वप्रसङ्गात्। नाप्याख्यात प्रत्ययाभिधानयोग्यव्यापारशालित्वं कर्तृत्वं, योग्यताया एवानिरूपणात्। फलानुगुणमात्रस्य सर्वकारकव्यापारसाधारणत्वात्। नापि विवक्षातो नियमः, अविवक्षादशायामनियमप्रसङ्गात्। स्वव्यापारे नेदमनिष्टमिति चेत्, एवं तर्हि 'स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारके' इति न्यायेन करणादिविलोपप्रसङ्गः। न स्वव्यापारापेक्षया करणादिव्यवहारः, किन्तु प्रधानक्रियापेक्षया। अस्ति हि काञ्चित् क्रियामुद्दिश्य प्रवर्तमानानां कारकाणामवान्तरव्यापारयोगो, न त्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरिति चेत्, तर्हि तदपेक्षयैव कर्तृकर्मादिव्यवहारविशेषनियमे किं कारणमिति

---

आमोदः– पाकानुकूलत्वात्। कर्तृरूपव्यवस्थयेति व्याचष्टे अपि चेति। कर्तृ रूपेति कर्तृपदेत्यर्थः। तद्व्यवस्थेति। अयं कर्ता नायं कर्तेति व्यवस्थाऽनुपपत्तेरित्यर्थः। व्यवस्थापकान्तरमाशङ्क्य निराकरोति न हीति। यस्य व्यापारं धातुराख्यात प्राधान्येनाभिधत्ते स कर्तेत्यचेतनेऽपि रथो गच्छतीत्यादौ कर्तृ त्वमित्यत्राभिधानस्य विशेषणत्वे दोषमाह अनभिधानेति। अभिधानस्योपलक्षणतया दोषमाह– कर्तृत्वज्ञानाधीनमभिधानमभिधानाधीनं कर्तृत्वमित्यन्योन्याश्रयोऽपीति भावः। नापीति। उपलक्ष्यतावच्छेदकापरिचयाद् योग्यताया एवानिरूपणादित्यर्थः। ननु फलानुगुणत्वमेव योग्यतावच्छेदकं स्यादित्यत आह नापीति। अनियमेति। करणादेरपि कर्तृत्वप्रसङ्गादित्यर्थः। करणादेरपि स्वव्यापारे कर्तृत्वमित्याह स्वेति। एवं सर्वेषां कर्तृत्वमेवायातं न करणत्वादिकमित्याह एवमिति। ननु स्वव्यापारापेक्षया सर्वकारकाणां कर्तृत्वमेव प्रधानक्रियापेक्षया तु करणादिव्यवस्थेति शङ्कते न स्वव्यापारेति। प्रधानक्रियापेक्षयापि नियामकानुयोगस्तदवस्थ एवेत्याह तर्हीति।

---

प्रकाशः–तेन कर्तृत्वावगम इत्यन्योन्याश्रयश्चेति भावः। अथाभिधानमुपलक्षणमुपलक्ष्य च तद्योग्यता, तत्राह नापीति। योग्यत्वावच्छेदकरूपाज्ञाने अस्याज्ञानादित्यर्थः। न च प्रधानक्रियानुकूलव्यापारत्वमेव तदवच्छेदकमतिव्याप्तेरित्याह फलेति। फलानुकूलव्यापारवत्तया यत्कारकं विवक्ष्यते, स कर्तेति नोक्तदोष इति मतं निरस्यति नापीति। ननु स्वव्यापारे सर्वेषां कर्तृत्वमिष्टमेवान्यत्र करणत्वादित्याह स्वव्यापार इति। तर्हीति। प्रधानक्रियापेक्षयैव तत्कर्तृत्वं करणादिव्यावृत्तं तस्यैव

चिन्त्यताम्। स्वातन्त्र्यादीति चेत्, ननु तदेव किमन्यत् प्रयत्नादिसमवायादिति विविच्याभिधीयतामिति। तस्मात्सर्वत्र समानव्यापार एवाख्यातार्थः।९।

तथापि फलानुगुणतैवास्तु प्रत्ययस्य प्रवृत्तिनिमित्तं, प्रयत्नस्त्वाक्षेपतो लप्स्यते इति चेन्न।

भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः।।१०।।

केन हि तदाक्षिप्येत? न तावदनुकूलत्वमात्रेण, तस्य प्रयत्नत्वेनाव्यापनात्। न हि यत्नत्वैकार्थसमवाय्येवानुकूलत्वम्। अत एव न संख्यया, तस्याः संख्येयमात्रपर्यवसायित्वात्।

---

आमोदः–स्वातन्त्र्यं कर्तृत्वम्। कर्तृव्यापारविषयत्वं करणत्वमित्यादिविशेष-नियामकमित्याशङ्कते स्वातन्त्र्यादिति। इदं कर्तृत्वमस्मदाद्यभिमतमिति सम्बोध्य बोधयति नन्विति। यतमानव्यापार एवेति। यत्न एवेत्यर्थः।९।

यत्नानुभवं प्रमाणत्वेनोपन्यस्तमन्यथासिद्धमित्याह तथापीति। आक्षेपत इति। पाकादिक्रियाणां यत्नं विनाऽनुपपत्तेः क्रियैव तमाक्षिपतीत्यर्थः। पादत्रयं यत्नानुवादमात्रम्। चतुर्थं पादं व्याचष्टे केनेति। तदिति। यत्नस्वरूपमित्यर्थः। अनुकूलत्वमात्रेणेति। धात्वर्थानुकूलत्वमात्रेणेत्यर्थः। तस्येति। प्रयत्नभिन्नस्याप्यनुकूलत्वात् प्रयत्नत्वेन रूपेण व्याप्त्यभावादित्यर्थः। अन्यथा रथो गच्छतीत्यादावपि यत्नाक्षेपः स्यादिति भावः। नन्वाख्यातवाच्यया शङ्कया पचतीत्यादौ यत्नाक्षेपः स्यादित्यत आह अत एवेति। संख्यायाः प्रयत्नैकार्थ नियमाभावादेवेत्यर्थः। एतदेवाह तस्या इति। नन्वाख्यातवाच्यः कर्ता, स च

---

प्रकाशः–किं लक्षणमित्यर्थः। स्वातन्त्र्यादीति। 'स्वतन्त्रः कर्तेति' (पा.सू. १।४।५४।) *पाणिनि*लक्षणादित्यर्थः। तस्यान्यस्य व्यवस्थाबीजस्याभावाज्ज्ञानचिकीर्षाकृतिसमवायित्वमेव तद्वाच्यमित्याह नन्विति।।९।।

आक्षेपेति। पाकादीनां यत्नं विनानुपपत्तेरित्यर्थः। पादत्रयस्य प्रागेव विवृतत्वादन्तिमं पादं व्याचष्टे केन हीति। तत् प्रयत्नत्वमित्यर्थः। न हीति। प्रयत्नस्याप्यनुकूलत्वात्, तथात्वे वा रथो गच्छतीत्यादि तवापि गौणं स्यादित्यर्थः। तस्या इति। सङ्ख्यया सङ्ख्येयमात्राक्षेपेऽपि न प्रयत्नाक्षेपः, प्रयत्ने सङ्ख्याया अभावादित्यर्थः।

कर्त्रेति चेन्न। द्रव्यमात्रस्याकर्तृत्वात्। व्यापारवतश्चाभिधाने व्यापाराभिधानस्यावश्याभ्युपगमनीयत्वात्। नापि धात्वर्थेन तदाक्षेपः, विद्यते इत्यादौ तदसम्भवात्। न ह्यत्र धात्वर्थो भावनाऽपेक्षी, सत्ताया नित्यत्वात्। तत्र न भविष्यतीति चेन्न। पूर्वापरीभूतभावनानुभवस्याविशेषात्। भावनोपरागेण ह्यतथाभूतोऽप्यर्थस्तथा भासते इति। न च पदान्तरलब्धया भावनयाऽनुकूलतायाः प्रत्ययार्थस्यान्वयः, तदसम्भवात्।

---

आमोदः- स्वव्यापारं यत्नमाक्षिपेत् इत्याह कर्त्रेति। शुद्धं द्रव्यमेव वा कर्तृपदेनोच्यते, व्यापारविशिष्टं वा, कृतिरूपव्यापारविशिष्टं वा? आद्य आह द्रव्येति। द्वितीये रथो गच्छतीत्यादावपि यत्नाक्षेपप्रसङ्गः। तृतीये त्वाह व्यापारवत इति। व्यापारोऽत्र यत्नो विवक्षितः। तत्र न भावं प्रतीत्यत्र यत्नाक्षेप इति शेषः। विद्यत इत्यादावपि पूर्वापरीभूतभावनान्वयः प्रथमं स्यादेव प्रयोगवत्त्वात् परन्तु बाधकात् तद् भज्यत इत्याह पूर्वेति। नन्वनुभव एवायं कथं स्यादित्यत आह भावनेति। भावनोपराग आख्यातसमभिव्याहारः। अतथाभूतो भावनानधीनः सत्तादिस्तथाभूतो भावनोपरक्त इत्यर्थः। अनुकूलमा माख्यातप्रत्ययार्थोऽस्तु, तस्य तु यत्नत्वं पदान्तरसमभिव्याहारलभ्यं स्यादित्यत आह न चेति। तदसम्भवात् तादृशपदान्तरा

---

प्रकाशः- कर्त्रेति। आख्यातवाच्येनेत्यर्थः। *परमते* तस्याख्यातवाच्यत्वात्। कर्त्ता न द्रव्यमात्रं, द्रव्यमात्रस्यायत्नवत्त्वात्। तेन यत्नस्यानाक्षेपादित्याह द्रव्यमात्रस्येति। नापि व्यापारवन्मात्रं, यत्नरहितस्याप्यचेतनस्य व्यापारवत्त्वात्। यत्नरूपव्यापार वदभिधाने तु प्रयत्नोऽपि वाच्य एव स्यादित्याह व्यापारवतश्चेति। तत्रेति। आक्षेप इति शेषः। पूर्वेति। पचतीत्यादाविव धात्वर्थानुकूलयत्नानुभवादित्यर्थः। ननु सत्ताया नित्यत्वे पूर्वापरीभावो विरुद्ध इत्यत आह भावनेति। तदसम्भवादिति। ओदनं पचति चैत्र इत्यत्र पदान्तरेण भावनानुपस्थानादित्यर्थः। *अस्माकन्तु* अनुकूलयत्नोपस्थितावपि अयोग्यतया स नान्वीयते इति भावः। न हि धातुनैव

---

मकरन्दः- ननु कर्त्ताऽप्यनुपस्थितः कथमाक्षेपहेतुः स्यादत आह आख्यातवाच्येनेति। पचतीत्यादाविवेति। तथा च तत्रापि तदाक्षेप आवश्यक इति भावः। अन्यथा तवापि यत्नकाले पचतीत्यादि न स्यादिति। यद्यपि व्यापारवत्त्वेन यत्नस्यापि शक्यत्वात्तत्काले पचतीति स्यादेव, तथापि तेनापि रूपेण यदि यत्नो न शक्यस्तदेदं दूषणं बोध्यम्। अपरं *शब्दप्रकाशे* प्रपञ्चितम्।

**न खलु प्रकृत्यैव साभिधीयते, धातूनां क्रियाफलमात्राभिधायित्वात्। अन्यथा पाक इत्यादावपि भावनानुभवप्रसङ्गात्। नापि चैत्र इत्यादिना पदान्तरेण प्रकृतिप्रत्यययोरुभयोरप्यकारकार्थत्वात्।**

---

**आमोदः**– भावादित्यर्थः। ननु धातुनैव भावनाभिधीयताम्, आख्यातं तु अनुकूलतामात्राभिधानपर्यवसितं स्यादित्यत आह **न खल्विति।** *मण्डनमत*माश्रित्य दूषयति **धातूनामिति।** क्रियाफलं विक्लित्त्यादि पच्यादिधात्वर्थोऽस्तु लाघवात्, न त्वधःसन्तापादि व्यापारकलापः। न चैवं व्यापारोपरमे फलदशायां पचतीत्यादिप्रयोगापत्तिः। व्यापारवर्तमानताया आख्यातार्थत्वात् कथं तथा प्रयोगः? ननु फलमेव चेत् क्रिया धात्वर्थस्तदा परसमवेतक्रियाफलशालितया तण्डुलादिना यत् कर्मत्वं तन्न स्यादिति चेन्न। परसमवेतव्यापारफलशालित्वादेव तण्डुलादीनां कर्मत्वोपपत्तेः। स च व्यापारो धात्वर्थ आख्यातार्थो वेति तत्फलभागिताया-स्तण्डुलादीनां सत्त्वात्। **अन्यथेति।** यदि धातूनां यत्नार्थता तदेत्यर्थः। **पदान्तरेणेति।** यत्नाक्षेप इति शेषः। प्रकृतिश्चैत्रः, प्रत्ययस्तु विभक्तिः। तथा च चैत्र इत्यतः शब्दात् शुद्धप्रातिपदिकमात्रोपस्थितौ कथं यत्नाक्षेप इत्यर्थः। ननु ओदनं पचतीत्यत्र ओदनस्य कर्मत्वं प्रतीयते, कर्मत्वञ्च भाव्यत्वमेव; तथा च तद्वाच्या वा तदाक्षेप्या

---

**प्रकाशः**– भावनोपरक्तार्थोऽभिधीयते इत्यत आह **न खल्विति। प्रकृत्या** धातुनेत्यर्थः।

फलस्य धात्वर्थतया पच्यर्थो विक्लित्तिर्लाघवाद्, न तु तत्फलको व्यापारोऽधःसन्तापनादिः। न चैवं व्यापारविगमे फलसत्त्वकाले पचतीति प्रयोगापत्तिः। धात्वर्थानुकूलव्यापारवत्त्वस्याख्यातार्थतया व्यापारकाल एव पचतीति प्रयोगात्। अथैवं धात्वर्थतया फलं क्रियेति तण्डुलादेः कर्मता न स्यात्, विक्लित्यादिजन्य फलभागित्वाभावादिति चेन्न। परसमवेतव्यापारफलशालिनः कर्मत्वात्। स च व्यापारो धात्वर्थ आख्यातार्थो वा, उभयथापि समवेतव्यापारफलशालिनस्तण्डुलादेः कर्मत्वात्। विक्लित्त्यनुत्पादे व्यापारविगमदशायां पाको वर्त्तते इत्यत्र पाकपदे व्यापारलक्षणेति मतमाश्रित्योक्तं दूषणमिदम्। **अन्यथेति।** यदि धातूनामेव भावनाभिधायकत्वमित्यर्थः। **प्रकृतीति। प्रकृतिश्चैत्रपदं, प्रत्ययः** प्रथमा, तयोरुभयोरपि शुद्धप्रातिपदिकार्थतया न कारकार्थत्वं, व्यापारवतः कारकत्वेन कारकार्थस्य भावनार्थत्वं सम्भाव्येतापीत्यर्थः।

**ओदनमित्यादेः कारकपदत्वात् तस्य च क्रियोपहितत्वात् तेनाभिधानमाक्षेपो वा। कथमन्यथौदनमित्युक्ते, किं भुङ्क्ते, पचति वेति**

**आमोदः**-वाऽवश्यम्भावना स्यादन्यथा भावनासामान्याज्ञाने पाकभावना भोजनभावना चेति विशेषाकाङ्क्षैव न स्यादिति शङ्कते ओदनमिति। भावनाया आख्याततोपस्थाप्यत्वमन्तरेण विशेषाकाङ्क्षा न स्यादिति तुल्यमिति। परिहरति पचतीति।

**प्रकाशः**- कथमिति। ओदनमित्युक्ते भावनाविशेषजिज्ञासा तत्सामान्यज्ञानं विना न स्यादित्यर्थः। कर्मपदादाक्षेपतोऽभिधानतो वाऽऽवश्यकी तदुपस्थितिरिति भावः। पचतीत्युक्त इति। कर्मपदानुच्चारणेऽपि तदभिधानाक्षेपयोरभावे पचतीत्यत्र भावनाधीर्न स्यादिति भावनाऽभिधायकमाख्यातपदं कल्प्यमित्यर्थः।

ननु वीजेनाङ्कुरः कृतो बीजमङ्कुरं करोतीति यत्नं विनापि कृञः प्रयोगाद् न यत्नो वाच्यः। नापि कर्तृपदं यौगिकं, तथा सति कृञो यत्नार्थत्वे तृचश्च कर्त्रर्थत्वे धातुप्रत्ययार्थयोः कृतिकर्त्रोः परस्परमनन्वयापत्तेः। कृतिविशिष्टस्य कृतिनिराकाङ्क्षत्वात्। एवं कृञः क्रियार्थत्वे तृचश्च तदाश्रयवाचकत्वे तयोः परस्परमनन्वय एवेत्युभयदर्शने कर्मपदवत् कर्तृपदं रूढमेव। तथा च कृताकृतविभागेन कर्तृरूपव्यवस्थया च कृञो यत्नोऽर्थ इति न तेन विवरणादाख्यातस्य यत्नार्थत्वं, किन्त्वनुकूलत्वेन व्यापार एव तद्वाच्यः। तेन चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारवत्त्वादाख्यातप्रयोगो मुख्यः। न चैवं पथि श्रमशयानेऽपि पचतीति प्रयोगापत्तिः, यत्नवाचकत्वेऽपि तण्डुलक्रियानुकूलयत्नवति पचतीति प्रयोगापत्तेः। यदि तु तस्य प्रयत्नविशेषो वाच्यः तदा ममापि व्यापारविशेषो वाच्य इत्यस्तु। यत्नधीस्त्वाक्षेपात् धात्वर्थविशेषस्य पाकादेस्तेन विनानुपपत्तेः। न चाख्यातस्य यत्नो वाच्यः, पचतीत्यस्य पाकानुकूलयत्नवानिति विवरणादिति वाच्यम्। तथा सति कर्तुरपि तद्वाच्यतापत्तेः। न हि पाकयत्न इत्येव विवरणम्। अथ तात्पर्यविवरणस्याक्षेपादिनापि निर्वाहः, तुल्यं यत्नेऽपि। अत एव रथो गच्छति विद्यते व्योमेत्यत्र न भावनानुभवः। भावनाया धात्वर्थान्वयायोग्यतया त्वयापि तत्र गौणत्वाङ्गीकारादिति।

अत्र वदन्ति - चैत्रः पचतीत्यत्र पाकानुकूलयत्नानुभवात् स एवाख्यातवाच्यः, लाघवात्। न त्वनुकूलव्यापारः, यत्नत्वजात्यपेक्षया व्यापारत्वस्योपाधित्वेन गुरुत्वात्। न चाचेतनेऽप्याख्यातस्य मुख्यत्वार्थमनुगतो व्यापार एव शक्य इति वाच्यम्। शक्तिग्राहकेण लघुनि शक्तिग्रहात्। मुख्यत्वार्थं

विशेषाकाङ्क्षेति चेन्न। पचतीत्युक्ते किमोदनं तेमनं वेति विशेषाकाङ्क्षादर्शनात्। सा चाक्षेपाभिधानयोरन्यतरमन्तरेण न स्यात्। तस्यां दशायां न चेदाक्षेपो नूनमभिधानमेवेति।

स्यादेतत्, अभिधीयतां तर्हि कर्तापि। तदनभिधाने हि

आमोदः- तस्यां दशायामिति। कर्मपदासमभिव्याहारदशायामित्यर्थः। नूनमिति। आक्षेपकाभिमतकर्मत्वादीनामनुपस्थितेरित्यर्थः। आख्यातेन तर्हि कर्तैवाभिधीयतां, तथा च 'कर्तरि लङि' त्यनुशासनमपि समर्थितं स्यादित्याह अभिधीयतामिति। अनभिधाने दण्डमाह तदिति। कर्तुरभिधाने समानपदाश्रिता संख्यापि कर्त्रैवान्वेति,

प्रकाशः- शक्तिकल्पने वृत्त्यन्तरोच्छेदापत्तेः। न च पाकस्य यत्नसाध्यत्वानुमित्या यत्नस्यापि लाभादन्यलभ्यत्वेन स नाख्यातवाच्यः। चैत्रः पचतीत्यत्र चैत्रः पाकानुकूलवर्त्तमानयत्नवान् प्रतीयते। न च पाकस्य वर्त्तमानयत्नेन प्राप्तिरस्ति, अतीतादौ व्यभिचारात्। नापि धात्वर्थेनानुमिते यत्ने आख्यातेन वर्त्तमानत्वान्वयबोधः सम्भवी, यत्नस्यापदार्थत्वात्। स्वार्थव्यापारवर्त्तमानत्वबोधनेनाख्यातस्य पर्यवसितत्वाच्च। न चाचेतने आख्यातस्य व्यापारवाचकत्वावधारणादेवं कल्पनेति युक्तम्। गौणतया शक्तिभ्रमेण वा तत्राख्याताद्व्यापारावगमोपपत्तेः। यत्नविगमदशायां तज्जन्यव्यापारकाले पचतीत्यत्र वर्त्तमानव्यापाराभिधानमाख्यातेन लक्षणया, रथो गच्छतीत्यत्र यथा, अतोऽन्यलभ्यत्वान्न तदनुरोधेन व्यापारे शक्तिः। अन्यथा तवापि यत्नकाले पचतीति न स्यादिति।

ननु धात्वर्थानुकूलयत्नस्याख्यातशक्यत्वे एककृतिकाले पचतीतिवत् कृतेर्ध्वंसे अग्रिमकृतेरनुत्पाददशायां मध्येऽप्यपाक्षीत् पक्ष्यतीति स्यात्। यत्नप्रचयस्य च शक्यत्वे पचतीति न स्यादेव, एकदा तस्याभावात्। अथ भूतभविष्यतोर्यत्नाभावनिरूप्यत्वात् यत्नकाले तदभावान्नोक्तदोष इति चेन्न। ध्वंसानुत्पादयोर्यत्नविशेषप्रतियोगिकतया यत्नकालेऽपि तत्सत्त्वात्, तयोः सकलकृतिप्रतियोगिकत्वाभावात्।

मैवम्। यत्राख्यातवाच्ये प्रचये एकैकस्य वर्त्तमानव्यवहारनिमित्तत्वं, तत्र तावतां ध्वंसैः प्रागभावैश्च भूतभविष्यद्व्यवहारः, न तु वर्त्तमानव्यवहारनिमित्त किञ्चिदभावात्, चेतनाचेतनभोजनगमनादौ तथैव प्रयोगात्, प्रयोगे सति निमित्तानुसरणात्। धातोराख्यातस्य चानुकूलव्यापारवाचकत्ववादिभिरनन्यगतिकतया तथैव स्वीकाराच्चेति।

संख्येयमात्रमाक्षिप्य संख्या कथं कर्तारमन्वियात्, न तु कर्म्मादिकमपि। 'शाकसूपौ पचति, शाकसूपौदनान् पचती'त्यादौ विरोधनिरस्ता संख्या चैत्र इति कर्तारमविरुद्धमनुगच्छतीति चेत्, 'चैत्र ओदनं पचती'त्यत्र का गतिः? एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथा, यववराहादिवदिति चेन्न। पच्यते इत्यादावपि तथाभावप्रसङ्गात्। चैत्राभ्यां, चैत्रैरिति विरोधनिरस्ता सूप इत्यविरुद्धं कर्म समनुक्रामतीति चेत्, चैत्रमैत्राभ्यां शाकसूपे पच्येते इत्यत्र का गतिः?

अन्यत्र निर्णीतेनार्थेन व्यवहार इति चेन्न। पचतीत्यादावपि

---

आमोदः- न कर्मादिनेत्यत्र न विनिगमकं स्यादित्यर्थः। आख्यातोपस्थाप्या संख्या द्वित्वबहुत्वोपरुद्धकर्मस्थले कर्तारमेवान्वेति चेत्, तदा एकत्वावरुद्धकर्मस्थलेऽपि कर्तारमेवान्वेष्यति। न हि 'यवमयश्चरुर्भवती'त्यत्र म्लेच्छप्रसिद्धकङ्गुपरत्वे निरस्तेऽर्थवादाद्दीर्घशूकपरत्वे च निर्णीते 'यवैर्यजेते'त्या दावपि निर्णयान्तरापेक्षा इत्याह शाकेत्यादि। तथाभावेति। कर्त्रैव संख्यान्वयप्रसङ्गादित्यर्थः। द्वित्वबहुत्वावरुद्धकर्तृस्थले कर्मान्वयस्य दर्शनात्। पचत इत्यत्रापि कर्मान्वय एव। यत्रापि कर्तृकर्मणोर्द्वित्वबहुत्वावरोधस्तत्रापि कर्मान्वय एव। 'एकत्र निर्णीतः शास्त्रार्थ' इति न्यायादित्याह चैत्राभ्यामित्यादि।

---

प्रकाशः- चैत्र ओदनं पचति चैत्रेण पच्यते ओदन इत्यत्र कर्त्तरि कर्मणि आख्यातार्थसङ्ख्यान्वयात् कर्तृकर्मणी लकारवाच्ये। तेन वाच्यगामिनी सङ्ख्येयेति नियमो भवति। अन्यथाऽऽक्षिप्तसङ्ख्यान्वये नियमो न स्यादिति *वैयाकरणमतमाह* - अभिधीयतामिति। का गतिरिति। ओदनमित्येकत्वेनोपस्थितेनैकत्व सङ्ख्याऽन्वयविरोध इति पचतीत्येकत्वमोदनान्वितं किन्न स्यादित्यर्थः।

यववराहादीति। यवमयश्चरुर्भवतीत्यत्र दीर्घशूकस्य यवपदार्थतया निर्णीतस्य यवैर्यजेतेत्यादौ न यत्र वाक्यशेषस्तत्रापि तस्यैव यवपदवाच्यता यथेत्यर्थः। तथाभावेति। आख्याताभिहितभावनायाः कर्त्रन्वयप्रसङ्गादित्यर्थः। तथा चौदनः पच्यते देवदत्त इति प्रयुज्येतेति भावः।

अन्यत्रेति। चैत्राभ्यां चैत्रैः सूपः पच्यते इत्यत्र कर्मणि सङ्ख्यान्वयस्य निर्णीतत्वादत्रापि तथेत्यर्थः। पचतीत्यादाविति। देवदत्त ओदनं पचतीत्यादावपि

तथाभावप्रसङ्गात्। तत्र पूर्वक एव निर्णयः, पच्यते इत्यत्र त्वपर इति चेन्न। विशेषाभावात्। आत्मनेपदपरस्मैपदाभ्यां विशेष इति चेन्न। पच्यते, पचते, पक्ष्यते इत्यादौ विप्लवप्रसङ्गादिति। दृश्यते च समानप्रत्ययाभिहितेनान्वयः संख्यायाः। तद् यथा – भूयते, सुप्यते इत्यादौ। न हि तत्र कर्त्रा, कर्म्मणा वा, अन्येनैव वा, केनचिदन्वयः, किन्तु भावेनैव।

आमोदः– पूर्वक इति। कर्त्रन्वय एवेत्यर्थः। अपर इति। कर्मान्वय एवेत्यर्थः। अत्र विनिगमनाविरहमाह नेति। विप्लवेति। यत्र धातुरात्मनेपदी कर्त्तरि च लकारस्तत्रापि तदुपस्थाप्या संख्या कर्मान्वितैव स्यादित्यर्थः। पच्यत इति दृष्टान्तार्थं, पक्ष्यत इति च कर्तृकर्मणोः समानरूपत्वादुदाहृतम्। यद्वा, विप्लवप्रसङ्गात् अविशेषप्रसङ्गादित्यर्थः। तथा च पच्यत इति न दृष्टान्तार्थम्। ननु कर्ता चेदाख्यातवाच्यः स्यात्तदा तद्वाच्यया तदन्वयो न स्यात्। न ह्येकपदोपस्थाप्ययोः पदार्थयोरन्योन्यमन्वयो दृश्यत इत्याह दृश्यत इति। सुप्यत इति। आख्यातोपस्थाप्येन भावेनैव संख्यायास्तदुपस्थाप्याया अन्वयबोधस्य दर्शनादित्यर्थः। ननु तत्रापि कर्त्रादिनैवान्वयः स्यादित्यत आह न हीति। कर्म तावदिह नास्त्येव, कर्त्रन्वये चैत्रमैत्राभ्यां सुप्यत इत्यत्र द्विवचनं स्यादत एव भावस्यैकत्वादेकवचनमिति पठन्ति। न चात्र चैत्रमैत्रगतस्वापद्वयलाभाय द्विवचनापत्तिः स्वापत्वेन तदुभयस्वापस्यैकत्वात्। द्विवचन बहुवचनयोरसाधुत्वादिति भावः।

प्रकाशः– कर्मगतैकत्वान्वयप्रसङ्ग इत्यर्थः। तत्रेति। पचतीत्यत्र सङ्ख्यान्वयः कर्त्रा, पच्यते इत्यत्र कर्मणेत्यर्थः। विशेषेति। क्वचित् कर्त्तरि क्वचित् कर्मणि सङ्ख्याऽन्वयस्य दृष्टत्वादन्यतरत्र नियामकाभावादित्यर्थः। पच्यत इति। पच्यत इति दृष्टान्तार्थम्। अतो यथात्मनेपदात् पच्यते इत्यत्र कर्मणा सङ्ख्यान्वयः, तथा पचते इत्यत्रापि स्यादित्यर्थः।

नन्वाख्यातवाच्यत्वे कर्त्तुस्तद्वाच्यया सङ्ख्ययाऽन्वयबोधो न स्यात्। एकपदोपस्थापितपदार्थयोर्मिथोऽन्वयबोधस्याव्युत्पन्नत्वात्। अन्यत्र भिन्नपदोपस्थापितानामेवान्वयबोधादित्यत आह दृश्यते चेति। यथा भाववाचकाख्याताभिधेयसङ्ख्या तेनैवान्वीयते न त्वाक्षिप्तेन कर्त्रा, साकाङ्क्षयोग्यासन्नपदार्थमात्रस्यैवान्वयप्रतियोगित्वात्। भिन्नपदोपस्थापितत्वस्य गौरवेणाप्रयोकत्वात्। तथाख्यातवाच्ययोः कर्तृसङ्ख्ययोरप्यन्वय इत्यर्थः। न हीति। अन्वये वा कर्तुरनेकत्वे द्विबहुवचनयोः प्रयोगः स्यादिति भावः।

अनन्वये तदभिधायिनोऽनर्थकत्वप्रसङ्गात्। आक्षिप्तेन चान्वये तत्रापि कर्त्रैवान्वयापत्तेः। को हि सुप्यते, स्वपितीत्यनयोः कर्त्राक्षेपं प्रति विशेषः।१०।

स्यादेतत्, 'भावकर्म्मणो'रित्याद्यनुशासनबलात्तावत् भावकर्मणी प्रत्ययवाच्ये। ततस्तदभिहिता संख्या ताभ्यामन्वीयते। यस्तु प्रत्ययो न तत्रोत्पन्नः, तदभिहिता संख्या 'मुख्यं वा पूर्वचोदनाल्लोकवत्' ( मी. सू. १२-२-२३ ) इति न्यायेन कर्तारमेवाश्रयते इति नियमः।

आमोदः- ननु भावस्थले संख्यान्वयो मास्तु, को दोष इत्यत आह अन्वय इति। निश्चितानन्वयत्वेनापार्थकत्वापत्तिरित्यर्थः। कर्त्रैवेति। तथा च चैत्रमैत्राभ्यां सुप्यत इत्यत्र एकत्वमनन्वितमेव स्यादित्यर्थः। ननु सुप्यत इत्यत्र कर्ता नाक्षिप्यत एवेत्यत आह को हीति। *वैयाकरणमते* संख्यान्वयं प्रति विनिगमकं शङ्कते स्यादेतदिति। यत्र भावे प्रत्यय उत्पन्नस्तत्र भावगता संख्या प्रतीयते। यथा सुप्यते चैत्रेणेत्यत्र भावोऽत्र धात्वर्थ एव, यत्र तु कर्मणि तत्र कर्मगता, यथा पच्यते तण्डुलः। यत्र तु न भावे, न वा कर्मणि तत्र कर्तृगता, यथा चैत्रः पचति तण्डुलमित्यत्रेत्यर्थः। अत्र कर्तृगतसंख्याप्रतीतौ न्यायमाह- मुख्यं वेति कारकपरिगणनानुशासने कर्तारमुपक्रम्याभिधानात् कतुरेव मुख्यत्वम्। तथा च तद्गतैव संख्या प्रतीयते। लोकवदिति। यथा चैत्रं तावद् भोजय, मैत्रमपि भोजयिष्यामि इत्यत्र लौकिकवाक्ये चैत्रभोजनस्य मुख्यत्वमित्यर्थः।

प्रकाशः- यदि च भावसङ्ख्ययोरन्योन्यमनन्वयः तदा निश्चितान्वय-पदत्वेनाख्यातमपार्थकं स्यादित्याह अनन्वय इति। यद्याक्षिप्तेन कर्त्रान्वयः सङ्ख्यायाः स्यात्, तदा स्वपितीत्यत्रेव सुप्यत इत्यत्रापि तेनैव तदन्वयः स्यादित्याह आक्षिप्तेन वेति। को हीति। आक्षेपहेतोर्भावनाऽभिधानस्योभयत्राविशेषादित्यर्थः।

मुख्यं वेति। 'आग्नावैष्णवमेकादशकपालं चरुं निर्वपेत्, संग्रामे सरस्वतीमप्याज्यस्य येजेते'-त्यत्राग्नावैष्णवधर्मा अग्रतो भवन्त्याहो सारस्वतधर्माः? इत्यनियमे आग्नावैष्णवधर्मा एव प्रथमं भवन्ति। अत्र हेतुः-पूर्वचोदनात्-प्रथममुपस्थितत्वात्। अस्योदाहरणं-लोकवदिति। यथा लोके यत्र विवादपदे साक्षिद्वयसत्त्वान्मुख्यः साक्षी पृष्टस्तमनुजानाति, द्वितीयश्च पृष्टस्तमपलपति। तत्र प्रथमपृष्टेनैव व्यवहारः तस्य मुख्यत्वात्, तथा कारकाणां प्रथमं कर्त्तैव देशित इति बाधं विना तेनैव सङ्ख्याऽन्वीयते इत्यर्थः।

न, विपर्ययप्रसङ्गात्। 'शेषात्कर्त्तरि परस्मैपदम्', (पा.सू. ३।१।७८।) 'कर्तरि शबि (पा.सू.३।१।६८।) त्यनुशासनबलाद्भावकर्तारौ प्रत्ययवाच्यौ, ततस्तदभिहिता संख्याऽपि ताभ्यामन्वीयते। यस्तु प्रत्ययो न तत्रोत्पन्नस्तदभिहिता संख्या तेनैव न्यायेन कर्म्म समाश्रयेदिति नियमोपपत्तेः। तस्मात् मतिकर्दममपहाय यथानुशासनमेव गृह्यते इति प्राप्तम्।

एवं प्राप्तेऽभिधीयते –

**आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना।**
**संख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः।।११।।**

आमोदः– न्यायोत्थानस्थानन्तु 'जैमिनीयसूत्रे (मी०सू० १२।२।२३)। तत्र 'आग्नावैष्णवमेकादशकपालं चरुं निर्वपेत् 'संग्रामे सरस्वतीमप्याज्येन यजेते' त्यत्र प्रथमे देशितस्याग्नावैष्णवनिर्वापस्यैव प्रथमानुष्ठानं न सारस्वतस्येत्यादि। तदेतद्दूषयति नेति। विपर्ययमेवाह शेषादिति। न तत्रेति। न कर्तरि, न वा भाव इत्यर्थः। तेनैव न्यायेनेति। मुख्यं वेति न्यायेनेत्यर्थः। अत्र कर्तृविनिर्मुक्तत्वात् तदतिरिक्तकारकमध्ये कर्मण एव प्रथमं देशनेति न्याय संवादः। यथानुशासनं यथा *व्याकरणम्*। तेन कर्तरि विहितस्याख्यातस्य कर्तृगतसंख्याभिधानं, कर्मविहितस्य कर्मगतसंख्याभिधानं, भावविहितस्य भावगतसंख्याभिधानमिति भावः।।१०।।

कर्तृकर्मणी आख्यातवाच्ये इति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयत इत्याह एवमिति। आक्षेपेति। संख्येयः कर्ता कर्म च तदुभयमाक्षेपलभ्यं चेत्तदाऽभिधानस्याख्यातवाच्यत्वस्य कल्पना न युक्ता इत्यर्थः। नन्वेवं यत्किञ्चित्

प्रकाशः– भावकर्त्ताराविति द्वन्द्वः तेनैव, मुख्यं वेत्यादिनैवेत्यर्थः। कर्मैवेति। तथा च पक्ष्यते ओदनं देवदत्त इति न स्यात्, किन्तु पक्ष्यते ओदन देवदत्तेन इत्येव स्यादित्यर्थः। यथाऽनुशासनं, व्याकरणानतिक्रमेणेत्यर्थः। तथा च कर्त्तरि विहितस्याख्यातस्य सङ्ख्या कर्त्रा कर्मणि च विहितस्य सा कर्मणान्वेतीति नियम उपपद्यते इति भावः।

मकरन्दः– मुख्यं वेत्यादिनैवेत्यर्थ इति। ननु तत्र कारके कर्त्तुः प्रथमं देशनादस्तु तथा, प्रकृते तु न तस्य न्यायस्यावतारः कर्मणः प्रथममदेशनादिति चेन्न। यथा कारकेषु प्रथमं देशनात् कर्त्तुर्मुख्यत्वं तथोद्देश्यतया कर्मणो मुख्यत्वमित्याशयादित्याहुः।

सङ्ख्याऽपि तावदियं भावनानुगामिनी, यं यं भावनान्वेति, तं तं सङ्ख्याऽपीति स्थितेः एकप्रत्ययवाच्यत्वनियमात्। भावना च शुद्धं प्रातिपदिकार्थमात्रमाकाङ्क्षति। न हि व्यापारवन्तं व्यापार आश्रयते, आत्माश्रयत्वात्।

---

आमोदः- संख्येयमादायैव पर्यवसानं स्यात् इत्यत आह साकाङ्क्षेणेति। भावनानुगामिनीति। भावनामनुयातुं शीलमस्येत्यर्थः। शीलमेव दर्शयति यं यमिति। एतादृशं शीलमेवास्याः कुत इत्यत आह एकेति। ननु भवत्वेवं भावनाया एवान्वये किंनियामकमत आह-भावना चेति। शुद्धमिति। भावनानवरुद्ध- मित्यर्थः। कथमेवमत आह न हीति। व्यापारवन्तं व्यापारविशिष्टम्। व्यापारश्चात्र कृतिः। तथा च तत्कृतिविशिष्टे तत्कृत्यन्वये आत्माश्रय इत्यर्थः।

---

प्रकाशः- समानप्रत्ययोपात्तत्वे प्रत्यासत्त्यान्तरङ्गत्वात् सङ्ख्येयमात्र-साकाङ्क्षापि सङ्ख्या भावनान्वयिनैवान्वेति। अग्निना चैत्र ओदनं पचतीत्यत्र चैत्रपदार्थस्य निर्व्यापारत्वेनोपस्थितस्य भावनात्मकव्यापारसाकाङ्क्षत्वाद् भावना याश्चाश्रयाकाङ्क्षत्वात् तेनैव भावनान्वेति, न कर्मकरणादिना। द्वितीयादिना तस्य व्यापारवत्तयोपस्थितेर्व्यापारान्तरनिराकाङ्क्षत्वात्। भावनायाः साकाङ्क्षत्वे-ऽप्यन्यतराकाङ्क्षाया अन्वयानङ्गत्वात्। ओदनः पच्यते चैत्रेणेत्यत्र तु कर्त्तुर्व्यापारवत्त्वेनोपस्थिते न तत्र भावनान्वयः किन्तु प्रथमानिर्दिष्टेन कर्मणा, तस्य व्यापारवत्त्वेनानुपस्थितेस्तत्साकाङ्क्षत्वात्। चैत्रेण सुप्यते इत्यत्र तु कर्तुर्निराकाङ्क्षत्वात् कर्मणश्चाभावाद् धात्वर्थेनैव सङ्ख्याया अन्वय इति आक्षेपादेव कर्तृकर्मणोर्लाभे सङ्ख्यान्वयो, नियमस्य चान्यथोपपत्तौ न ते लकारवाच्ये इत्याह सङ्ख्यापि तावदिति।

शुद्धं-निर्व्यापारत्वेनोपस्थितम्। इदञ्च कर्तृकर्मणोराक्षेपलभ्यत्वं यद्भावनाविशेष्यत्वे सति प्रथमान्तपदोपस्थाप्यत्वं, न तु सङ्ख्यालिङ्गकानुमिति विषयत्वम्। अनुमित्या सङ्ख्येयमात्रगतत्वेन सङ्ख्याप्रतीतेः। शब्दोपस्थापित-सङ्ख्यायास्तदुपस्थापितेनैवान्वयनियमाच्चेति तत्त्वम्। किं तद्व्यापारविशिष्टे तद्व्यापाराश्रयणम्, उत व्यापारान्तरविशिष्टे? तत्र नाद्य इत्याह आत्माश्रयत्वादिति। अन्त्ये, त्वनवस्थितेरिति भावः।

---

मकरन्दः- यद्भावनेति। भावनाविशेष्यस्य कर्तुः कर्मणो वा प्रथमान्त-पदेनोपस्थाप्यत्वमेवाक्षेपलभ्यत्वमिति भावः।

**समवायं प्रति तदनुपयोगात्। विजातीयव्यापारवतोऽकर्तृत्वाच्च। न च द्वितीयाद्याः प्रातिपदिकविभक्तयः। ततः प्रथमानिर्दिष्टेनैव**

**आमोदः**–नन्वात्माश्रयभयात्तत्कृतिविशिष्टे तत्कृतिर्नान्वेतु, कृत्यन्तरमन्वीयतामित्यत आह **समवायं प्रतीति**। कृतिसमवायं प्रति कृतेरप्रयोजकत्वात्। कृतौ कृतिसमवायाभावात् प्रथमकृतावपि कृत्यन्तरापेक्षायामनवस्थानाच्चेत्यर्थः। ननु कृतिविशिष्टकृतिर्नान्वेतु, व्यापारान्तरमन्वीयतामित्याह–**विजातीयेति**। कृत्यन्वयादेव कर्ता भवति न तु व्यापारान्तरयोगादपि। तथा सति करणादीनामपि कर्तृत्वप्रसङ्ग इत्यर्थः। ननु कृतौ कृतिसमवायो मास्तु, सम्बन्धान्तरमस्तु, को दोष इत्यत आह **विजातीयेति**। विजातीयेन सम्बन्धेन समवायभिन्ने च सम्बन्धेन व्यापारवतोऽकर्तृत्वात्। अन्यथा विषयतासम्बन्धेन कर्मणोऽपि कर्तृत्वापत्तिरिति भावः। तदयं समुदयार्थः। चैत्रः पचति इत्यत्र चैत्रस्य प्रथमान्तस्य भावनानवरुद्धतयोपस्थितत्वाद् भावनां प्रत्याकाङ्क्षा, भावना च भावकं भाव्येनापेक्षते। तत्र तण्डुलानि द्वितीयया पाकभवनाभाव्यत्वेनैवोपस्थितांस्तण्डुलान् विहाय भावकमेव काङ्क्षतीत्युभयाकाङ्क्षावशात् कर्त्रैवान्वयो भावनाया इति संख्यान्वयोऽपि तेनैव समानपदोपात्तत्वप्रत्यासत्तेः। चैत्रेण तण्डुलाः पच्यन्ते इत्यत्र तु तृतीयया चैत्रः कर्तृत्वेनोपस्थापित इति तेनान्वयो, न कर्तृत्वं नास्त्येवातो धात्वर्थेनैवान्वयो भावनाया इत्याक्षेप्ये एव कर्तृकर्मणी, न तु वाच्य इति। ननु द्वितीयान्तेनैव वा न कथं भावनान्वय इत्यत आह **न चेति**।

**प्रकाशः**– युक्त्यन्तरमाह **समवायं प्रतीति**। **तदनुपयोगाद्** व्यापारवदनुपयोगात्। भावनाया इव तत्समवायस्यापि शुद्धप्रातिपदिकार्थापेक्षतया भावनादिविशिष्ट निराकाङ्क्षत्वादित्यर्थः।

यद्वा समवायो मेलकः। यत्समेलकस्य पूर्वापरीभूतभावनावाचकेनाख्यातेनैव बोधितत्वाद् न तदन्वयाय भावनान्तरापेक्षेत्यर्थः। नन्वात्माश्रयानवस्थाभ्यां सजातीयव्यापारवदनाकाङ्क्षेति द्वितीयाद्युपनीतविजातीयव्यापारवत् साकाङ्क्षत्वं स्यादित्यत आह **विजातीयेति**। तथासत्ययोग्यत्वादनन्वयापत्तिः, न हि घटानुकूलव्यापारेण पाककर्तृत्वं दृष्टमित्यर्थः। ननु शुद्धप्रातिपदिकार्थापेक्षिण्यपि भावना कुतो न द्वितीयाद्युपनीतेनान्वेतीत्यत आह **न चेति**।

**मकरन्दः**– **भावनादिविशिष्टेति**। सजातीयव्यापारमभिप्रेत्य। ननु भावनासमवायो न पदार्थः, किन्तु तदन्वय इति तस्यान्वयप्रतियोगित्वाभावान्निराकाङ्क्षत्वेऽप्यदोष इत्यरुचेराह **यद्वेति**। **भावनान्तरेति**। तथा च शुद्धप्रातिपदिकार्थमात्राकाङ्क्षैवेति भावः।

भावनान्वीयते इति तस्यान्वययोग्यतानियमात् सङ्ख्यापि तदनुगामिनी तेनैवान्वीयते इति नातिप्रसङ्गः, नञर्थवत्। यथा हि चैत्रो न ब्राह्मणो न गौरो न स्पन्दते न कुण्डलीत्यादौ विशेषणविशेष्यसमभिव्याहाराविशेषेऽपि नञा तदनभिधानाविशेषेऽपि नञर्थस्य विशेषणांशैरेवान्वयो न विशेष्यांशेन।

ननु बाधात्तत्र तथा। न हि विशेष्येण तदन्वये विशेषणोपादान-मर्थवद्भवेत्; तन्निषेधेनैव विशेषणनिषेधोपलब्धेः। उभयनिषेधे चावृत्तौ वाक्यभेदादनावृत्तौ निराकाङ्क्षत्वादिति चेन्न। तुल्यत्वात्। समानप्रत्ययोपात्तभावनाक्षिप्तान्वयोपपत्तौ बाधकं विना सन्निहितत्यागे व्यवहितपरिग्रहस्य गुरुत्वात्। भावनायाश्च

---

आमोदः- उभयोपस्थितावपि साकाङ्क्षेणैवान्वय इत्यत्र दृष्टान्तमाह नञर्थवदिति। अत एव विशेषणविशेष्योभयसमभिव्याहारेऽपि यथा विशेषणेनैवान्वयो न तु विशेष्येण, तथा प्रकृतेऽपि प्रथमातदन्यविभक्त्यन्तोपस्थितौ प्रथमान्तेनैवान्वय इत्यर्थः। न ब्राह्मण इत्यादिना जातिगुणकर्मद्रव्याणां क्रमेण नञर्थान्वयो दर्शितः। ननु यत्र विशेषणसमभिव्याहारस्तत्र विशेषणमात्रेणैव नञर्थान्वयो न विशेष्येणेति नियमात्तत्र तथास्तु, प्रकृते तु नियामकं न पश्याम इत्याह नन्विति। ननु विशेषणविशेष्याभ्यामेव नञर्थान्वयोऽस्तु इत्यत आह तन्निषेधेनैवेति। नञ्पदानुवृत्तानुभयान्वये वाक्यभेद एव, अनावृत्तौ त्वेकान्वयेनैव निराकांक्षत्वान्नापरान्वय इत्याह-उभयेति। भावनान्वये तावन्नियामकमुक्तमेव, संख्याया अपि तदन्वितेनैवान्वयकल्पने लाघवं, संख्येयान्तरगवेषणायां तु गौरवमित्याह समानेति। भावनान्वयमेव विशदयति भावनाया इति। ननु भावनाया

---

प्रकाशः- उभयोपस्थितावपि साकाङ्क्षेण सहान्वयो भावनाया न निराकाङ्क्षेणेति दृष्टान्तेन स्पष्टयति नञर्थवदिति। न चैत्र इत्यादिना क्रमेण जातिगुणकर्मद्रव्याणां विशेषणानां निषेध्यत्वमुक्तम्। आवृत्ताविति। उभयनिषेधे च सकृदुच्चरितस्य नञोऽन्यतरनिषेधेनैव निराकाङ्क्षत्वात् तदर्थान्वयार्थमावृत्तिकल्पने पदावृत्तिरूपवाक्यभेदापत्तिरित्यर्थः। अनावृत्ताविति। सकृदुच्चरितनञो येन केनचिदेकेनैव चरितार्थत्वाद् निराकाङ्क्षत्वादित्यर्थः।

भावनान्वयिनैव सङ्ख्याऽन्वेतीत्यत्राभिमतं नियामकं स्पष्टयति समानेति। यद्यपि व्यापारात्मिका भावना व्यापारिसामान्यमाकाङ्क्षति आक्षिपति, तथापि

सामान्याक्षेपेऽपि साकाङ्क्षपरित्यागेन निराकाङ्क्षान्वयानुपपत्तेः। न ह्यन्यतराकाङ्क्षा अन्वयहेतुः, अपि तूभयाकाङ्क्षा। प्रातिपदिकार्थो हि फलेनान्वयमलभमानः क्रियासम्बन्धमपेक्षते। भावनापि व्यापारभूता सती व्यापारिणमित्युभयाकाङ्क्षा अन्वयहेतुः। कटं कटेनेत्यादि तु कारकतयैव फलसमन्वितं न व्यापारान्तरमपेक्षते इति निराकाङ्क्षमिति।

अत एवास्यते सुप्यते इत्यादौ नाक्षिप्तेनान्वयः। न हि चैत्रेणेति तृतीयान्तशब्दस्य भावनायामाकाङ्क्षास्ति। भाव्याकाङ्क्षास्तीति चेन्न। फलेन शयनादिधात्वर्थेनान्वयात्। फलसंबन्धिनश्चात्र कर्त्रनतिरेकात्। न हि शयनादयो धात्वर्थाः कर्त्रतिरेकसंबद्धाः। न च फलतत्संबन्धि-व्यतिरेकेणान्यो भाव्यो नाम, यमपेक्षेत।

आमोदः–भाव्यभावकोभयाकाङ्क्षाऽस्त्येवातो न तस्याः सम्बन्धिप्रतिनियम इत्यत आह न हीति। फलेनौदनादिना क्रियासम्बन्धःसन्तापनादिधात्वर्थश्च भावनासम्बन्ध मन्तरेण नोपपद्यत इति भावनामप्यपेक्षत इति विशेषः। भावनापि व्यापारभूता सती व्यापारिणमपेक्षते निराश्रयायास्तस्या अनुपपत्तेरित्यर्थः। साकाङ्क्षमुक्त्वा निराकाङ्क्षमाह कटं कटेनेति। कारकतया कर्तृतया कर्मतया वेत्यर्थः। भाव्यस्य धात्वर्थानतिरेकत्वमाह फलेनेति। तर्हि फलसम्बन्धिना भावनान्वीयतामत आह– फलसम्बन्धिन इति। धात्वर्था इति। स्वापादय इत्यर्थः।

प्रकाशः–साकाङ्क्षेण व्यापारिणा प्रातिपदिकार्थेनान्वीयते, न तु निराकाङ्क्षेण कारकान्तरेणेत्याह सामान्येति। उभयाकाङ्क्षामाह प्रातिपदिकार्थ इति। फलेन धात्वर्थेन, क्रियासम्बन्धं व्यापारसम्बन्धमित्यर्थः। कटं कटेनेति। अत्र द्वितीयातृतीयाभ्यां कारकविभक्तिभ्यां क्रियानुकूलव्यापारसहितस्यैवोपस्थितेर्न भावनाकाङ्क्षेत्यर्थः।

ननु यदि स्वपिति इत्यादावाक्षिप्तेन कर्त्राऽन्वयस्तदा सुप्यते इत्यादावपि तथा स्यादित्यत आह अत एवेति। यत एव उभयाकाङ्क्षानिबन्धनोऽन्वय इत्यर्थः। भाव्यं भावनाजन्यं, फलञ्चेत्तत्राह फलेनेति। अथ फलसम्बन्धि कर्म भाव्यं, तत्राह फलेति। धातूनामकर्मकत्वात् तदाश्रयत्वं कर्तुरेवेत्यर्थः। तस्य च चैत्रेणेति तृतीयया कर्तृत्वोपस्थितेर्न भाव्यत्वेनान्वयान्तरमिति भावः।

मकरन्दः– तृतीययेति। 'कर्तृकरणयोस्तृतीये'ति (पा.सू. २।३।१८।) कर्तृत्वे तृतीयाऽनुशासनादिति भावः।

**प्रकाशः**– ननु चैत्रस्तण्डुलान् पचति इत्यत्र भावनान्वयश्चैत्रे सम्भवत्याश्रयत्वात्। चैत्रेण पच्यन्ते तण्डुला इत्यत्र तण्डुलानां न तावद्विषयत्वेन भावनान्वयः, यत्नस्य विक्लित्त्यनुकूलव्यापारविषयत्वात्। विषयत्वेनान्वये वा चैत्रस्तण्डुलान् पचतीत्यत्र तण्डुलानां विषयत्वेन भावनान्वयापत्तौ सङ्ख्याया अपि तदन्वयापत्तेः। नाप्याश्रयतया, भावनाया अतदाश्रितत्वात्। न च चैत्रेण भावनान्वयः, तृतीयार्थयत्नेनावरुद्धतया भावनायास्तदनन्वयात्। अचेतने वा कथं सङ्ख्याऽन्वयनियमः?। तत्र भावनाया अनन्वयात्। यत्र च पचतीत्येव प्रयुज्यते, तत्र कथं भावनायाः कर्त्रन्वयः?। यत्र वा चैत्रः कर्त्ता पचत्योदनम् इति प्रयोगः, तत्र चैत्रेणेतिवत् कर्तृत्वेनैवोपस्थितावाकाङ्क्षाविरहाद्भावनानन्वये कथं कर्त्तरि सङ्ख्याऽन्वयः?।

उच्यते - यत्र यद्विशेष्यं, तेन सङ्ख्याऽन्वयः। तथा हि चैत्रस्तण्डुलान् पचतीत्यत्र तण्डुलानां कर्मत्वेनान्वयात् तण्डुलवृत्तिफलजनकव्यापार जनकयत्नाश्रयश्चैत्र इति प्रतीतेः स विशेष्यः। चैत्रेण पच्यन्ते तण्डुला इत्यत्र चैत्रवृत्तियत्नजन्यव्यापारजन्यफलाश्रयास्तण्डुलाः प्रतीयन्ते इति यत्नस्य परम्परया तण्डुला विशेष्याः। एवं यद्यप्युभयत्र चैत्रः कर्त्ता तण्डुलाः कर्माणि, तथापि यत्नविशेष्ये सङ्ख्यान्वयः। अचेतनेऽपि रथो ग्रामं गच्छतीत्यत्र ग्रामवृत्तिफल जनकव्यापाराश्रयो रथः प्रतीयते, रथेन गम्यते ग्राम इत्यत्र रथवृत्तिव्यापार जन्यफलाश्रयो ग्राम इति, तत्रापि विशेष्ये सङ्ख्याऽन्वयः।

चैत्रेण सुप्यते इत्यत्र न चैत्रो भावनाविशेष्यः, तृतीयार्थावरुद्धत्वात्, कर्म तत्र नास्त्येव। अतो धात्वर्थ एव भावनाविशेष्यः, फलत्वाद् विषयत्वाद् वेति तत्र सङ्ख्याऽन्वयः। न च प्रातिपदिकार्थे भावनान्वयेऽपि न सङ्ख्याऽन्वयः, प्रथमोपनीतसङ्ख्यान्वयेन च तस्य तदनाकाङ्क्षत्वादिति वाच्यम्। प्रथमाख्याताभ्यामेकस्या एव सङ्ख्याया अभिधानात्। चैत्रो दण्डीत्यत्रेव सामानाधिकरण्यानुरोधात्। अन्यथा *त्वन्मते* प्रथमार्थसङ्ख्याऽन्वयश्चैत्रे न स्यात्, आख्यातेनैव स्ववाच्यकर्तृसङ्ख्याऽभिधानात्। नापि पचतीत्यत्र पाकयत्नवानिति विवरणात् कर्त्ता आख्यातवाच्यः। कर्तुरन्यलभ्यत्वेनावाच्यत्वस्थितौ विवरणस्य

---

**मकरन्दः**– ननु अत्राक्षिप्तेन चैत्रादिना भावनाऽन्वयः, अन्यथा तदनन्वय इष्ट एवेत्यरुचेराह यत्र वेति। यद्विशेष्यमिति। आख्याततात्पर्यविषयीभूतार्थविशेष्ये इत्यर्थः। अत एवाह अचेतनेऽपीति।

स्यादेतत्, किमिति न प्रयुज्यते कटः करोति चैत्रमित्यादि, अभिहितानभिहितव्यवस्थाऽभावादिति चेन्न। चैत्रमिति प्रथमान्तस्यासाधुत्वात् द्वितीयान्तस्य तु कर्मवचनत्वेन तत्संबन्धाद् भाव्यानपेक्षणी भावना भावकमात्रमपेक्षेत। न च कटस्य चैत्रं प्रति भावकत्वं, विपर्ययात्। अनाप्तेन तु विवक्षायां प्रयुज्यत एव। प्रयुज्यतां तर्हि 'कटं करोति चैत्र' इत्यादि।

---

आमोदः- किमितीति। यदि कर्तृकर्मणी नाख्यातवाच्ये, तदा नियामकाभावात् किमितीति फक्किकोत्थानं कथमेवं प्रयुज्यतामत आह अभिहितेति। चैत्रमिति। प्रथमान्तं द्वितीयान्तं वा। आद्य आह प्रथमेति। द्वितीये त्वाह कर्मेति। तत्सम्बन्धात् कर्मत्वसम्बन्धात्। भाव्यश्चैत्र एव स्यात्। तथा च तद्विषयिणी भावना भावकमपेक्षते, स च न कटस्तस्य भाव्यत्वात्। चैत्रस्यैव भावकत्वादित्यर्थः। तथाविवक्षायां कटस्यैव चैत्रं प्रति जनकत्वविवक्षायामित्यर्थः। प्रयुज्यतामिति। आप्तेनेति शेषः। तर्हीति। चैत्रस्य प्रथमान्तोपस्थितत्वेन चेतनत्वेन च भावनान्वययोग्यत्वादित्यर्थः।

---

प्रकाशः- तात्पर्यविषयपरत्वात्, द्वन्द्वादिसमासस्य विग्रहेण विवरणेऽपि तत्र शक्त्यभावाच्च।

*अत्रास्मत्पितृचरणाः* – कृतिरूपकर्तृत्ववत् कर्मत्वमपि लकारवाच्यम्, तद्धर्मिणोरन्यत एव लाभात्। तण्डुलान् पचतीत्यत्र द्वितीयात इव चैत्रेणौदनः पच्यते इत्यत्रान्यतः कर्मत्वालाभादित्याहुः।

कर्तृकर्मकरणादीनामभिहितानभिहितत्वविशेषाभावे कटं करोति चैत्र इत्यत्र बिभक्तिपरिणामे प्रयोगः किं न स्यादित्याह – किमिति। चैत्रशब्दस्य पुंलिङ्गत्वात् प्रथमायां तद्रूपमसाध्वित्याह चैत्रमितीति। भाव्यानपेक्षिणीति। द्वितीयायाः कर्मत्वाभिधायकत्वेन भाव्यानपेक्षिणी भावनेत्यर्थः।

---

मकरन्दः- तद्धर्मिणोरिति। कर्तृत्वकर्मत्वधर्म्मिणोः कर्तृकर्म्मणोरित्यर्थः। इत्याहुरित्यस्वरसोद्भावनम्। तद्बीजन्तु-तथाप्याश्रयत्वमात्रमनन्यलभ्यतया लकारवाच्यं, परसमवेतक्रियाफलशालित्वं हि कर्म्मत्वमिति चैत्रवृत्तियत्नजन्य व्यापारजन्यफलाश्रयत्वमेव तस्य कर्म्मत्वं वाच्यम्। तत्र तृतीयया यत्नस्य धातुना फलावच्छिन्नव्यापारस्याभिधानेऽपरस्यानन्यलभ्यत्वादिति।

द्वितीयाया इति। तथा च भाव्यतया चैत्रस्योपस्थितेस्तथात्वेन कटं नापेक्षते, किन्तु भावकत्वेनैव, तच्च विपर्य्ययादयुक्तमिति भावः।

न, नित्यसन्दिग्धत्वेन वाक्यार्थासमर्पकत्वात्। ततस्तदुपपत्तये विशेषस्य व्यञ्जनीयत्वात्। व्यज्यतां तर्हि तृतीयया चैत्रेणेति, एवं देवदत्तः क्रियते कटमिति व्यज्यतां द्वितीययेति चेन्न। अप्रयोगात्। न ह्यनाप्तेनाऽप्येवंप्रायाणि प्रयुज्यन्ते। लक्षणाविरोधेन कुत एतदेवेति चेत्, लोकस्यापर्यनुयोज्यत्वात्।

न हि गार्गिकयेति पदं साध्विति श्लाघाभिधायिपदसन्निधिमनपेक्ष्य प्रयुज्यते। तस्य तदुपाधिनैव विहितत्वादिति चेत्, एतदेव कुतः?। लोके तथैव प्रयोगदर्शनादिति चेत्, तुल्यम्। करोतीत्यादि कर्मविभक्ति समभिव्याहारेणैव प्रयुज्यते, क्रियते इति कर्तृविभक्तिसमभिव्याहारेणैवेति किमत्र क्रियताम्। इममेव विशेषमुररीकृत्यानभिहिताधिकारानुशासनेन ह्येतावान् परामर्शः सर्वेषां हृदि पदमादधातीत्यभिधानानभिधानविभाग एव व्युत्पादनदशायां पेशल इति।

---

आमोदः- व्यज्यतामिति। कटः करोति चैत्रेण, चैत्रः क्रियते कटमिति तृतीयाद्वितीयाभ्यां विशेषस्याभिव्यक्तत्वेन सन्देहाभावादित्यर्थः। अप्रयोगादिति। *पाणिनिस्मृते*रपि प्रयोगमूलकत्वादिति भावः। लक्षणाविरोधेनेति। अनुशासनविरोधेनेत्यर्थः। अभिहितानभिहितव्यवस्था *तव* नास्त्येवेति भावः। लोकस्येति। अनादेरप्रयोगस्यापर्यनुयोज्यत्वादित्यर्थः। एतदेव दृष्टान्तेनाह न हि गार्गिकयेति। स्वस्य गार्ग्यत्वेन श्लाघते। अत्र वुण्प्रत्ययस्य श्लाघ्यसमभिव्याहारादेव साधुत्वादित्यर्थः। तस्येति वुण् प्रत्ययस्य। तदुपाधिना श्लाघापदसमभिव्याहारेणेत्यर्थः तर्हि कथमीदृशमनुशासनमत आह इममेवेति। लोकप्रयोगाप्रयोगावेव यदि तन्त्रं, तदानुशासनवैयर्थ्यमित्यत आह न ह्येतावानिति। इत्यभिधानेति। अत्र यद्विशेष्यं तेन संख्यान्वयः। तेन चैत्रः तण्डुलान् पचतीत्यत्र फलजनकयत्नाश्रयश्चैत्र एव विशेष्यः, चैत्रेण तण्डुलाः पच्यन्त इत्यत्र चैत्रवृत्तियत्नविषया तण्डुला इति। त एव विशेष्या इति तत्रैव संख्यान्वय इति। रथो गच्छतीत्यत्र रथस्यैव विशेषणं विशेष्यः, तेनैव

---

प्रकाशः-नित्येति। कर्तृकर्मभावे इति शेषः। लोकस्येति। व्याकरणस्याप्यनादि-प्रयोगानुपजीव्यैव शब्दान्वाख्यायकत्वादित्यर्थः। तुल्यमिति। अनादिः प्रयोगोऽस्माकमप्युपजीव्य इत्यर्थः। इममेवेति। बालव्युत्पत्त्यर्थं प्रकृतिप्रत्यय-विभागस्येवाभिहितानभिहितत्वस्यापि व्युत्पादनमित्यर्थः। वस्तुतो यत्पदस्य यत्पदसमभिव्याहारेणैव प्रयोगनियमः, तस्य तत्पदं विना न प्रयोग इत्यर्थः।

स्यादेतत्, भवतु सर्वाख्यातसाधारणी भावना। कालविशेषसंबन्धिनी सा लडाद्यर्थः, कालत्रयापरामृष्टा लिङर्थ इति चेन्न। यत्नपदेन समानार्थत्वप्रसङ्गात्। विषयोपरागानुपरागाभ्यां विशेष इति चेन्न। यागयत्न इत्यनेन पर्यायतापत्तेः। कर्तृसंख्याभिधानानभिधानाभ्यां विशेष इति चेन्न। यागयत्नवानित्यनेन साम्यापत्तेः। इष्ट एवायमर्थ इति चेत्, न। इतो वत्सरशतेनाप्यप्रवृत्तेः। फलसमभिव्याहाराभावान्न प्रवर्तते इति चेन्न। स्वर्गकामो यागयत्नवानित्यतोऽप्यप्रवृत्तेः। तत् कस्य हेतोः?। न हि यत्नो

आमोदः– संख्यान्वयः। रथो गच्छतीत्यत्र रथस्यैव विशेष्यत्वं, रथेन गम्यते ग्राम इत्यत्र तु ग्रामस्येति। तेनैवाचेतनस्थलेऽपि संख्यान्वयश्चैत्रेण सुप्यत इत्यत्र कर्माभावात्। कर्तृव्यापारोपरुद्धतयैवोपस्थितेश्चैत्रवृत्तिव्यापारविषयः स्वाप इति धात्वर्थ एव विशेष्यः, तेनैव संख्यान्वयः। तेन चैत्रः कर्ता पचत्योदनमत्र भावनान्वयं विनापि संख्यान्वयश्चैत्रेणैव, तस्य विशेष्यत्वात्। न च तत्र भावनान्वयादपदार्थता आख्याता, नैवं तृचा एकस्या एव भावनाया अभिधानात्। एवं चैत्रः पचतीत्यत्रापि सुपा तिङा च एकस्या एव संख्याया अभिधानमिति नेयं भावना विशेष्यत्वे सति प्रथमान्तपदोपस्थाप्यत्वमेव कर्तुः कर्मणो व आधेयत्वं न त्वनुमेयत्वमित्यवधेयम्। कर्तृधर्मो यत्नो न लिङर्थः। तस्य सर्वाख्यातसाधारणत्वादिति यदुक्तं तत्राभ्युपगम्य विशेषं शङ्कते– स्यादेतदिति। कालत्रयेति। नहि यजेत स्नायादित्यादौ कश्चित् कालो भासते इत्यर्थः। यत्नपदेनेति तत्रापि कालत्रयापरामृष्टो यत्न एवार्थ इत्यर्थः। ननु यजेतेत्यत्र यागविषयो यत्नः प्रतीयते। यत्नपदात्तु यत्नमात्रमिति न साध्यमिति शङ्कते विषयेति। ननु यजेत स्वर्गकाम इत्यत्र लिङा कर्तृसंख्याभिधीयते, न तु यागप्रयत्न इत्यत्रेति शङ्कते कर्तृसंख्येति। इष्ट एवेति। अयमेव लिङर्थ इत्यर्थः। लिङर्थस्य प्रवर्तकत्वात् अस्य चातथाभूतत्वान्नायं लिङर्थ इत्याह इत इति। अर्थसाम्येऽपि फलसमभिव्याहारविरहान्न प्रवर्तकत्वमस्येत्याह फलेति। अर्थाविशेषेऽपि विनिगमकं पृच्छति तदिति। उत्तरं न हीति। यत्न इति। प्रतीयमानो

प्रकाशः– कर्तृधर्मस्य यत्नस्य विधित्वे सर्वाख्यातसाधारण्येनोक्तातिप्रसङ्गे समाधिं शङ्कते स्यादेतदिति। लडादीनां वर्त्तमानादिकालनियमवल्लिङस्तदभावादिति नातिप्रसङ्ग इत्यर्थः। यत्नज्ञानस्याप्रवर्त्तकतया प्रागुक्ताप्रवृत्तेरिति स्मारणेन परिहरति यत्नपदेनेति।

मकरन्दः–यत्नस्येति। यद्यपि यत्नस्य लिङर्थत्वे तज्ज्ञानं प्रवर्त्तकमिति न स्वात्मनि वृत्तिविरोधो दोषः, तथापि प्रवृत्तिहेतौ सङ्कल्पे शक्तेरित्युक्तत्वात् तद्दूषणे तात्पर्य्यम्।

यत्नस्य हेतुः, यत्नप्रतीतिर्वा यत्नस्य कारणम्, अपि त्विच्छा। न च सापि प्रतीता यत्नजननी येन सैव विध्यर्थ इत्यनुगम्यताम्, अपि तु सत्तया। न च लिङः श्रुतिकाले सा सती। न च लिङेव तां जनयति। अर्थविशेषमप्रत्याययन्त्यास्तस्यास्तज्जनकत्वे व्युत्पत्तिग्रहणवैयर्थ्यात्। अनुपलब्धलिङाञ्चेच्छाऽनुत्पत्तिप्रसङ्गादिति। एतेन वृद्धव्यवहाराद् व्युत्पत्तिर्भवन्ती बालस्यात्मनि प्रवृत्तिहेतुर्योऽवगतस्तमेवाश्रयेत्, स्वयञ्च कुर्यामिति सङ्कल्पादेवायं प्रवृत्तः, ततः स एव लिङर्थ इति निरस्तम्। कुर्यामिति प्रयत्नो वा स्यादिच्छा वा?। नाद्यः, स्वात्मनि वृत्तिविरोधात्।

---

आमोदः– यत्न इत्यर्थः। नन्विच्छा चेद् यत्नं जनयति, तदा सैव लिङर्थः स्यादित्याह न चेति। इच्छायाः प्रवृत्तिहेतुज्ञानविषयत्वाभावादित्यर्थः। इच्छायाः कर्तृधर्मस्य विधित्वेन कारिकयाऽसत्त्वादिति (५।८।) यद्बाधकमुक्तं तद् विवृणोति न च लिङ इति। सा सती येन यत्नं जनयेदिति शेषः। न च लिङः श्रुतिकालेऽपि स्वहेतुबलायाता साऽस्तीति वाच्यम्, तदा प्रवृत्तिं प्रति लिङोऽप्रयोजकत्वेन वैयर्थ्यापत्तेरिति भावः। ननु नाप्रयोजकत्वम् इच्छाजन्यस्यैव प्रयोजनत्वादित्याह न चेति। तस्या इति। लिङ इत्यर्थः। व्युत्पत्तीति। तर्हि लिङ्पदमव्युत् पन्नस्यापीच्छां जनयित्वा प्रवृत्तिं जनयेत् इत्यर्थः। इच्छाया लिङर्थत्वे युक्त्यन्तरमाशङ्क्य निराकरोति एतेनेति। अहं सङ्कल्पात् प्रवृत्तः, अतोऽयमपि वृद्धं पचेतेत्यादिश्रवणसमनन्तरं सङ्कल्पादेव प्रवर्तत इति सङ्कल्प एव लिङर्थ इति व्यवहाराधीनो व्युत्पत्तिग्रह इत्यर्थः। स एवेति। सङ्कल्प एवेत्यर्थः। स्वात्मनीति। न हि यत्न एव यत्नं जनयतीत्यर्थः।

---

प्रकाशः– अथ लिङा न यत्नः क्रियते अपि तु यत्नज्ञानमिति। तत्राह यत्नप्रतीतिर्वेति। अत्रापि न हीति योज्यम्। अस्तु कर्तृधर्म इच्छैव लिङ्वाच्येत्यत आह न चेति। प्रवृत्तिहेतुज्ञानविषयस्य लिङर्थत्वादित्यर्थः।

असत्त्वादिति विवृणोति न च लिङ इति। प्रत्ययत्यागादिति हेतुं व्याचिख्यासुर्भूमिकामारचयति न च लिङेवेति। अथ विषयज्ञानमनुत्पाद्य लिङपि नेच्छां जनयति, अन्यथा व्युत्पन्नस्येवाव्युत्पन्नस्यापि लिङ्श्रवणादिच्छा स्यादित्याह अर्थेति। स्वयञ्चेति। इष्टसाधनं ममेति मत्वा कुर्यामिति यः सङ्कल्पः, तज्ज्ञानादहं प्रवृत्तः। अतः प्रयोज्यवृद्धोऽपि तत एव प्रवृत्तः। ततः सङ्कल्पज्ञानं लिङुच्चारणान्तरं जातमिति लिङेव तत्करणमित्यवगच्छति व्युत्पद्यमानो बाल इत्यर्थः।

न द्वितीयः, सा हि सत्तयैव प्रयत्नोत्पादिनी, न च लिङः श्रुतिकाले सा सतीत्युक्तम्। फलेच्छा तु निसर्गवाहितया सत्यपि न प्रयत्नं प्रति हेतुः। अन्यविषयत्वात्। तदर्थञ्च शास्त्रवैयर्थ्यात्। तस्याः कारणान्तरत एव सिद्धेः। तत्प्रतीत्यर्थमपि शास्त्रानपेक्षणात्। तस्या मनोवेद्यत्वात्। अप्राप्ते च शास्त्रानवकाशात्। तदभिधाने च स्वर्गकाम इति कर्तृविशेषणपौनरुक्त्यात्। तदा हि यजेतेत्यस्यैव यागकर्त्ता स्वर्गकाम इत्यर्थः स्यात्।

---

आमोदः- सा हीति। साधनगोचरेच्छेत्यर्थः। प्रयुक्तमिति। लिङ् च न तदुत्पादिकेत्यप्युक्तमिति भावः। ननु फलेच्छा तदानीं सम्भवत्येवातः सत्त्वात् सैव लिङर्थः स्यादित्यत आह फलेच्छेति। निसर्गवाहित्वं निरुपाधित्वं प्रवृत्तिः साधने न तु फलेऽपि, न च फलेच्छा साधने प्रवर्तयति भिन्नविषयत्वादित्यर्थः। तदर्थं चेति। फलेच्छोत्पादनार्थं ज्ञापनार्थं वा न शास्त्रमर्थवदित्यर्थः। कारणान्तरत इति। फलज्ञानादेवेत्यर्थः। तस्या इति। फलेच्छाया इत्यर्थः। ननु मनोवेद्याऽपि शास्त्रेण बोध्यतामत आह अप्राप्त इति। *विधिरत्यन्तमप्राप्ताविति* वस्तुगतेरित्यर्थः। दोषान्तरमाह तदभिधान इति। लिङा फलेच्छाभिधीयते। स्वर्गकाम पदेन चेति पौनरुक्त्यात्र सा लिङित्यर्थः। पौनरुक्त्यमेव स्पष्टयति तदा हीति। तथा च स्वर्गकाम इति पदं व्यर्थमापद्येतेत्यर्थः।

---

प्रकाशः – स्वात्मनीति। यत्नस्य यत्नहेतुत्वे स्वात्मनि वृत्तिविरोध इत्यर्थः। अनेन विरोधत इति कारिकांशो विवृतः। इच्छा साधनगोचरा प्रवृत्तिहेतुरपि न ज्ञाता सतीति न लिङर्थ इत्याह सा हीति। न चेति। लिङः श्रवणात् प्रागिच्छाहेत्विष्ट साधनताज्ञानाभावादित्यर्थः।

सङ्करादिति कारिकांशं विवरीतुं, सुखादीच्छा लिङः श्रुतिकालेऽप्यस्तीति सा लिङर्थः प्रयत्नहेतुश्च स्यादिति निरस्यति फलेच्छा त्विति। निसर्गवाहित्वं-निरुपाधित्वम्। अन्यविषयत्वादिति। फलसाधने हि पुरुषः प्रवर्त्तते, न फले अन्येच्छायाश्चान्यत्र प्रवृत्तिहेतुत्वेऽतिप्रसङ्ग इत्यर्थः। अपि च फलेच्छां शास्त्रमुत्पादयेत्, ज्ञापयेद्वा? तत्र नाद्य इत्याह तदर्थञ्चेति। फलेच्छायाः फलज्ञानादेवोत्पत्तेः, तस्य स्वविषयेच्छाजनकत्वस्वभावत्वादित्यर्थः। अतएव यज्ज्ञातं स्ववृत्तितयेष्यते,तदेव स्वतः प्रयोजनमिति भावः। द्वितीयमाशङ्क्य निराकरोति तदिति। किमतो यद्येवमित्यत आह अप्राप्ते चेति। अवकाशे वा फलेच्छाया लिङैवोक्तत्वात् स्वर्गकाम इति पुनरुक्तरूपसङ्करापत्तिरित्यत आह तदभिधान इति।

यदि च फलविषयैव साधनविषयं प्रयत्नं जनयेत्, अन्यत्रापि प्रसुवीत, नियामकाभावात्। हेतुफलभाव एव नियामक इति चेन्न। अज्ञातस्य तस्य नियामकत्वे लिङं विनापि स्वर्गेच्छातो यागे प्रवृत्तिप्रसङ्गात्। ज्ञातस्य तु तत्साधनत्वस्य नियामकत्वे तदिच्छैव तत्र प्रवर्त्तयतु। यो यत्कामयते स तत्साधनमपि कामयत एवेति नियमात्। न च सा तदानीं सती। न च तज्ज्ञानमेव प्रयत्नजनकं, तच्च लिङा क्रियत इति युक्तम्। स्वर्गकामो यागचिकीर्षावानित्यतोऽपि प्रवृत्तिप्रसङ्गात्। लिङो वेच्छां प्रतीत्यनिच्छन्नपि

आमोदः- अन्यविषयत्वादिति हेतुं तर्कोपष्टम्भेन स्फुटयति यदि चेति। ननु फलेच्छा हेतौ प्रवर्तयन्तीति कुतोऽतिप्रसङ्ग इति शङ्कते हेत्विति। अज्ञातस्य नियामकत्वे शास्त्रवैयर्थ्यमाह अज्ञातस्येति। भ्रमादसाधने प्रवृत्तिर्न स्यादित्यपि बोध्यम्। तस्येति। हेतुफलभावस्येत्यर्थः। यागस्वर्गयोर्हेतुफलभावो यदि ज्ञातस्तदा हेतुगोचरेच्छैव हेतौ प्रवर्तिकेति कृतं शास्त्रेणेत्याह ज्ञातस्येति। ननु शास्त्रं विना साधनेच्छैव कथं स्यादित्यत आह य इति। इष्टसाधनताज्ञानादेव तत्रेच्छेति भावः। ननु तथापि तत्साधनेच्छैव लिङा बोध्यतामत आह न चेति। तदानीम्। लिङश्रवणकाले। ननु चासत्या एव साधनेच्छाया ज्ञानं लिङ् जन्यतामत आह न चेति। जनितमपि तज्ज्ञानमसत्यामिच्छायां प्रवृत्तिं जनयतीति ज्ञानजननतन्त्रमित्याह स्वर्गेति। इत्यतोऽपीति। एतज्जनितज्ञानादपीत्यर्थः। ननु लिङा जनितमिच्छाज्ञानं प्रवर्तकं न तु तदुदाहृतवाक्यजनितमित्यत आह लिङ् इति। ननु स्वसम्बन्धीच्छाया

प्रकाशः- ननु समानविषयकतयेच्छाप्रवृत्त्योर्हेतुहेतुमद्भाव एव कुतः इत्यत आह - यदि चेति। अन्यत्राप्यसाधनेऽपीत्यर्थः। नियामकमाह हेतुफलेति। फलेच्छा तत्साधन एव प्रयत्नमुत्पादयति नान्यत्रेत्यर्थः। यदि स्वरूपसन्नेव हेतुफलभावः प्रवृत्तिनियामकः, तदा स्वर्गकामो यजेतेत्यादिविधिजन्यज्ञानं विनापि स्वर्गसाधने प्रवृत्त्यापत्तिरित्याह अज्ञातस्येति। भ्रमादसाधनेऽप्रवृत्त्यापत्तेश्चेति भावः। अथ ज्ञातः, तदा फलसाधनेच्छैव तत्साधने प्रवर्त्तयतु समानविषयत्वादित्याह ज्ञातस्य त्विति।

ननु साधनविषया नेच्छा तस्य निसर्गसुन्दरत्वाभावादित्यत आह ये यदिति। अस्तु साधनविषयैवेच्छा प्रयत्नजननी लिङर्थ इत्यत आह न चेति। साधनेच्छा न लिङः श्रुतिकाले सतीत्यर्थः। ननु साधनेच्छायास्तत्कालासत्त्वेऽपि तज्ज्ञानादेव प्रवृत्तिः स्यादित्यत आह न चेति। तच्चेति। साधनविषयेच्छाज्ञानमित्यर्थः। यदि च साधनेच्छाज्ञानादेव प्रवृत्तिः, तदा स्वेच्छानुत्पत्तिदशायामपि ततः प्रवर्त्तेतेत्याह लिङो वेति। यजेतेत्यतः साधनेच्छाज्ञानं जातं न तु स्वसम्बन्धितया। तादृशञ्च

सर्वः प्रवर्त्तेत। स्वसंबन्धितया तदवगमस्तथा, न तु सामान्यत इति चेन्न। प्रथमपुरुषेण तदभिधाने तस्याविध्यर्थत्वप्रसङ्गात्। ओदनकामस्त्वं पाकचिकीर्षावानित्यतोऽपि प्रवृत्त्यापत्तेश्च। अपि च, सङ्कल्पज्ञानात् यदि प्रयत्नो जायेत तथापि सङ्कल्पस्य कुतो जन्म किमर्थञ्च?। सङ्कल्पज्ञानादेव, प्रयत्नार्थञ्चेति चेत्, नन्विच्छाविशेषः सङ्कल्पः, स तावत् सुखे स्वभावतः, तत्साधने चौपाधिकः। सङ्कल्पविषयस्तु कथम्? तत्साधनत्वादेवेति चेत्,

आमोदः–यदा ज्ञानं भवति, तदा प्रवर्तत एवेत्याह स्वेति। तर्हि यजेतेति वाक्यान्न प्रवर्तेत, अनेन स्वसम्बन्धिन्या इच्छाया प्रत्यायनात् इत्याह प्रथमेति। स्वसम्बन्धीच्छा प्रवृत्तावपि न प्रवर्तत एवेति व्यभिचारमाह ओदनेति। सङ्कल्पज्ञानस्य यत्नजनकत्वे सङ्कल्पस्य वैयर्थ्यमाह अपि चेति। कुत इति। इष्टसाधनताज्ञानस्य *त्वया* सङ्कल्पजनकतानभ्युपगमादिति भावः। किमर्थञ्चेति। किं वास्य प्रयोजनमित्यर्थः। लिङा सङ्कल्पविषयकं ज्ञानं जन्यते, तेन च ज्ञानेन सङ्कल्प उत्पाद्यते, उत्पन्नेन च प्रयत्नो जन्यते इत्युभयत्रैव प्रश्ने उत्तरमाह सङ्कल्पेति। इच्छाविशेष इति। कुर्यामिति। चिकीर्षारूपमित्यर्थः। संकल्पे सङ्कल्पज्ञानस्य प्रयोजकत्वमाह सुख इति। स्वभावत इति। फलेच्छाया फलज्ञानमात्रजन्यत्वात् साधनेच्छायास्तु फलेच्छाजन्यत्वादुभयत्रापि सङ्कल्पज्ञानमप्रयोजकमित्यर्थः। सङ्कल्पज्ञानस्य सङ्कल्पातिरिक्तागोचरसङ्कल्पजनकत्वात् सङ्कल्पगोचरमेव सङ्कल्पं जनयेत्, सङ्कल्पस्य च फलतत्साधनेतरत्वात् न सङ्कल्पविषयत्वमित्याह सङ्कल्पेति। सङ्कल्पविषयः सङ्कल्प इत्यर्थः। ननु सङ्कल्पोऽपि प्रवृत्तिद्वारा

प्रकाशः–प्रवर्त्तकम्। अतो नानिच्छन्नपि प्रवर्त्स्यतीत्यत आह स्वसम्बन्धितयेति। एवं यजेतेत्यस्य विध्यर्थत्वं न स्यात्तस्य स्वेच्छाज्ञानाजनकत्वादित्याह प्रथमेति।

किमर्थमिति। इच्छाज्ञानादेव प्रवृत्तौ किमर्थमिच्छोत्पादनमित्यर्थः। कुत इति प्रश्ने सङ्कल्पज्ञानादित्युत्तरं, किमर्थमित्यत्र तु प्रयत्नार्थमिति। इच्छाविशेषः, – कुर्यामित्याकारः। स्वभावतः–सुखज्ञानस्य स्वविषयविषयकेच्छाजनक स्वभावत्वादित्यर्थः। औपाधिकः–तत्साधनताज्ञानजन्य इत्यर्थः। सङ्कल्पस्तु न फलं न वा तत्साधनमिति नेच्छाविषयः, न च सङ्कल्पज्ञानात् फलसाधन एवेच्छा,

मकरन्दः–न वा तत्साधनमिति। यद्यपि परम्परया तत्साधनत्वं वक्ष्यति, तथापि साक्षान्न तथेत्यापातत इदम्। यद्वा कुम्भकारपितृवदन्यथासिद्धतया न साधनमिति भावः। न चेति। तथा च सङ्कल्पविषयः सङ्कल्पो न भवत्येवेति भावः।।११।।

**तर्हि तत्साधनत्वज्ञानात्, न तु सङ्कल्पस्वरूपज्ञानाद्भवितुमर्हतीति। अन्यथेष्टसाधनताज्ञानमप्यनर्थकमापद्येत। तस्मात्, सङ्कल्पः प्रवर्तक इत्यभ्युपेयते, किन्तु सत्तामात्रेण न तु ज्ञात इति नासौ विधिः। ज्ञानञ्च विषयोपहारेणैव व्यवहारयतीति तद्विषय एवावशिष्यते इति कर्तृधर्म्मव्युदासः।११।**

---

**आमोदः**- सुखसाधनं भवत्येवेति तत्र कथं नेच्छा स्यादित्याह **तत्साधनेति।** सुखसाधनत्वादेवेत्यर्थः। तर्हि सङ्कल्पेऽपीष्टसाधनताज्ञानाधीनैवेच्छा न तु सङ्कल्पस्वरूपज्ञानाधीनेत्याह **तर्हीति।** अन्यथा चन्दनादावपि स्वरूपज्ञानादेवेच्छा स्यान्न तु सुखसाधनताज्ञानादित्याह **अन्यथेति।** यद्वा, औपाधिक इष्टसाधनताज्ञानाधीन इत्यर्थः। **सङ्कल्पविषयस्त्विति।** बोध इति शेषः। **कथमिति।** अङ्गीक्रियत इति शेषः। सङ्कल्पोऽपि प्रवृत्तिद्वारा तत्साधनत्वसत्त्वादुपायेच्छार्थमेव सङ्कल्पे सुखसाधनत्वज्ञानमित्याह **तत्साधनत्वादेवेति।** तर्हि इष्टसाधनत्वज्ञानमेव सङ्कल्पहेतुरङ्गीकृतो न तु सङ्कल्पस्वरूपज्ञानम् इत्याह **तर्हीति। अन्यथेति।** चन्दनादिस्वरूपज्ञानादपि इच्छोत्पत्त्यापत्तिरिति भावः। **नासौ विधिरिति।** न सङ्कल्पः प्रवर्तकज्ञानविषय इत्यर्थः। ननु यत्किञ्चिज् ज्ञानं प्रवर्तकमस्तु, किं विषयविवेचनेनेत्यत आह **ज्ञानञ्चेति। अवशिष्यत** इति वक्तुमिति शेषः। **कर्तृधर्मेति।** स्पन्दप्रयत्नेच्छानां कर्तृधर्माणां प्रवर्तकत्व व्युदास इत्यर्थः।११।

---

**प्रकाशः**- ज्ञानस्य स्वसमानविषयकेच्छाजनकत्वनियमादिति भावः। **तत्साधनत्वादेवेति।** परम्परया फलसाधनत्वज्ञानादेवेत्यर्थः। **तर्हीति।** तथा चेष्टसाधनतैव विधिः स्यान्न सङ्कल्पः, तेन रूपेणाप्रवर्त्तकत्वादिति भावः। यद्वा सङ्करादिति विवृणोति **तर्हीति।** एवं लाघवादिष्टसाधनतैव विधिः। सङ्कल्पस्य तु तत्सङ्कीर्णत्वादित्यर्थः।

यदि च नैवं तदा भोजनादाविष्टसाधनताज्ञानमिच्छोत्पादकं न स्यादित्याह **अन्यथेति।** सङ्कल्पस्याप्रवर्त्तकत्वे शास्त्रविरोधं परिहरति **तस्मादिति।** तर्हि ज्ञानमेव कर्तृधर्मो विधिरस्त्वित्यत आह **ज्ञानञ्चेति। तद्विषय एव**-ज्ञानविषय एव। विधिरित्यनुषज्यते। यदि हि विषयविशेषानवच्छिन्नं ज्ञानं प्रयर्त्तयेत्, सर्वत्र प्रवृत्तिप्रसङ्गः। तदवच्छिन्नस्य च तस्य तथात्वे यं विषयमुपनयत्तत् प्रवर्त्तकं स एवार्थो विधिरिति कृतिहेतुचिकीर्षाकारणज्ञानविषयो विधिरित्यर्थः।।११।।

अस्तु तर्हि कर्मधर्मः। नेत्युच्यते,

अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः।
तदलाभान्न कार्यञ्च न क्रियाप्यप्रवृत्तितः।।१२।।

कर्म हि फलं वा स्यात्, तत्कारणमपूर्वं वा, तत्कारणं क्रिया वा?। न प्रथमः, फलेच्छायाः प्रवृत्तिं प्रत्यहेतुत्वात्, अतिप्रसङ्गादित्युक्तत्वात्।

**आमोदः**– कर्मधर्म इति। कार्यत्वमित्यर्थः। विधिरित्यनुषङ्गः। तदेव लिङादि पदजन्यज्ञानविषयोऽस्त्वित्यर्थः। तत्र प्रवृत्तियोग्यं कार्यं विकल्पयति कर्म हीति। फलं स्वर्गादि, तत्कारणं स्वर्गादिकारणं, तत्कारणमपूर्वकारणं, क्रिया यागादिरित्यर्थः। तदेतेषां मध्ये कस्य कार्यत्वं धर्मं ज्ञात्वा पुरुषः प्रवर्तत इत्यभिप्रायः। अत्र कारिका पठितुमुचिता। अतिप्रसङ्गादिति। स्वर्गः कार्य इति ज्ञानात् स्वर्ग एवेच्छा स्यात्। सा च कुत्र प्रवर्तयेदित्यर्थः। अपूर्वं कार्यमिति ज्ञानं यदि लिङा जन्येत, तदा व्युत्पत्तिग्रहदशायामेवापूर्वावगतावपूर्वत्वव्याघातः। शब्देतरप्रमाणगम्यत्वस्य *त्वया*ऽभ्युपगमात् तदलाभात्। अपूर्वस्य पूर्वमलाभात्। अनुपस्थितेः कार्यत्वेनापि प्रवृत्तिनिमित्तेन न तदुपस्थितिः। क्रियाया अपि यागादेः कार्यत्वं लिङा ज्ञात्वा न प्रवर्तते क्रियाया दुःखमयत्वादित्यर्थः। कारिकया तमेव विशदयति फलेच्छाया इति। उक्तत्वादिति। यदि कालविषयैव सा साधनविषयं

**प्रकाशः**– क्रियते इति व्युत्पत्त्या कर्मपदेन यदि फलं स्वर्गाद्युच्यते, तस्य च कार्य्यत्वं ज्ञात्वा प्रवर्त्तते तदा अनुपायेऽपि प्रवर्त्तेतेत्याह अतिप्रसङ्गादिति। अथापूर्वस्य कार्य्यत्वं ज्ञात्वा प्रवर्त्तते, तदा शब्दानुभवात् पूर्वं तदुपस्थितं न वा? आद्ये अपूर्वत्वव्याघातः। तस्य शब्दानुभवैकवेद्यत्वादित्यर्थः। अन्त्ये कथं शक्तिग्रह इति भावः। ननु कार्यत्वेनोपलक्षिते अपूर्वे कार्यत्वेनैव रूपेण शक्तिग्रहः, कार्य्यत्वविशिष्टञ्चोपस्थितमेवेत्याह तदलाभादिति। उपलक्ष्यस्यान्यत्र मानान्तरसिद्धत्वादत्रापि तथात्वे अपूर्वत्वहानिरन्यथा तु तदलाभ इत्यर्थः।

यद्वा कार्य्यत्वविशिष्टे कार्य्ये धर्मिणि शक्तिग्रहः, वाक्यार्थानुभवदशायाम योग्यतया घटादौ निरस्ते च तदतिरिक्तापूर्वलाभः स्यादित्यत आह तदलाभादिति। तथापि नित्यनिषेधापूर्वयोरलाभः स्यादित्यर्थः। न क्रियाऽपीति। क्रियायाः कार्य्यत्वज्ञानात् न प्रवृत्तिरनिष्टसाधनत्वादित्यर्थः।

तत्कारणमपूर्वकारणम्। फलेच्छाया इति। स्वर्गादेः कार्य्यतां जानन्नपि उपायज्ञानं विना न प्रवर्त्तते। कथं वाऽन्यज्ञानादन्यत्र साधने प्रवृत्तिः। यदि च

न द्वितीयोऽव्युत्पत्तेः। लिङो हि प्रवृत्तिनिमित्तमपूर्वत्वं वा स्यात्, कार्यत्वं वा स्यात्, उभयं वा?। न प्रथमः, शब्दप्रवृत्तिनिमित्तस्यापूर्वत्वस्य प्रमाणान्तरादवगताव पूर्वत्वव्याघातात्। अनवगतावव्युत्पत्तेः। संबन्धिनोऽनवगमे संबन्धस्य प्रत्येतुमशक्यत्वात्। तत एवावगतावितरेतराश्रयदोषात्। न च गन्धवत्त्वेनोपनीतायां पृथिव्यां पृथिवीशब्दवत् अपूर्वे प्रवर्त्तते लिङिति युक्तम्। तत्रोभयोरपि प्रतीयमानत्वेन सन्देहे कल्पनागौरवपुरस्कारेण पृथिवीत्व एव सङ्गतिविश्रान्तेरुपपत्तेः। न त्वत्रापूर्वत्वप्रतीतिः।

---

आमोदः- यत्नं जनयेत् अन्यत्रापि प्रमुचीते(?) त्यादिनेत्यर्थः। अव्युत्पत्तेरिति। विवरितुमाह लिङो हीति। उभयमिति। अपूर्वत्वसमानाधिकरणं कार्यमित्यर्थः। अपूर्वत्वेति। शब्देतरप्रमाणविषयत्वस्य *त्वया* ऽनभ्युपगमादित्यर्थः। स्वसम्बन्धिन इति। प्रवृत्तिनिमित्तस्येत्यर्थः सम्बन्धस्य सङ्केतस्येत्यर्थः। ननु व्युत्पत्तिरपि लिङ्पदादेव स्यादित्यत आह तत एवेति। लिङ्पदादर्थं प्रतीत्य व्युत्पन्नः स्यात्, व्युत्पत्तौ च सत्यां तदर्थप्रत्ययः स्यादित्यर्थः। ननु गन्धवत्त्वोपलक्षितं पृथिवीत्वं यथा पृथिवीपदे प्रवृत्तिनिमित्तं, तथा कार्यत्वोपलक्षितमपूर्वत्वमेव प्रवृत्तिनिमित्तम दूरविप्रकर्षात् सामानाधिकरण्यात् उपलक्ष्योपलक्षकभावः स्यादित्याशङ्क्य निराकरोति न चेति। विशेषमाह तत्रेति। तत्रोभयोर्युगपदुपस्थितौ गन्धवत्त्वस्योपाधित्वेन गौरवमिति पृथिवीत्वमेव प्रवृत्तिनिमित्तमित्यवसीयत इत्यर्थः। ननु कार्यत्वेनैव रूपेण कार्यं किञ्चित् स्मारयति। लिङ्पदं प्रथमम् अनन्तरमन्विताभिधानदशायां यागं यत्नं घटादिकञ्च तिरस्कृत्य काम्याव्यवहितमपूर्वमादाय पर्यवस्यतीति

---

प्रकाशः- साध्यसाधनभावो नियामकः, तदा भ्रमादसाधने न प्रवर्त्तेतेत्यर्थः।

प्रमाणान्तरादिति। शब्देतरप्रमाणागोचरत्वस्यापूर्वस्य त्वयाऽभ्युपगमादित्यर्थः। अनवगताविति। मानान्तराच्छक्तिग्रहविषयानुपस्थितौ तदसम्भवादित्यर्थः। तत एवेति। लिङ्पदादेवेत्यर्थः। इतरेति। लिङः शक्तिग्रहे ततोऽपूर्वोपस्थितिस्तदुपस्थितौ च तत्र शक्तिग्रह इत्यर्थः। तत्रेति। पृथिवीत्वगन्धवत्त्वयोः प्रत्यक्षतः सिद्धौ तदन्यतरत्र प्रवृत्तिनिमित्तत्वसंशये गन्धवत्त्वस्योपाधित्वेन सखण्डत्वात् पृथिवीत्वस्य च जातित्वेनाखण्डत्वात् तत्रैव शक्तिः कल्प्यते, प्रकृते त्वपूर्वत्वाप्रतीतौ न तथेत्यर्थः।

स्यादेतत्, कार्यत्वमुपलक्षणीकृत्य तावदेषा लिङ् प्रवृत्ता। तदुपलक्षितश्च यागो वा यत्नो वाऽन्यो वा शब्देतरप्रमाणगोचरो नाधिकारिविशेषणस्वर्गसाधनसमर्थः। न चाकाम्यफले कामी नियोक्तुं शक्यते। ततोऽन्यदेवालौकिकं किञ्चिदनेनोपलक्ष्यते, यो लिङादि प्रवृत्तिगोचर इति किमनुपपन्नमिति चेत्, उपलक्षणं हि स्मरणमनुमानं वा? उभयमप्यनवगतसंबन्धेनाशक्यम्। न हि संस्कारवन्मनोवददृष्टवद्वा कार्यत्वमपूर्वत्वमुपलक्षयति, ज्ञानापेक्षणात्। ततो हस्तीव हस्तिपकं, धूम इव धूमध्वजं, तत्संबन्धज्ञानादुपलक्षयेत्, न त्वन्यथा।

---

आमोदः- शङ्कते स्यादेतदिति। अधिकारिविशेणं यः स्वर्गः तत्साधनसमर्थो न यागादिराहत्येत्यर्थः। ननु यागादि साक्षात् स्वर्गसाधनं मास्तु, किमेतावता इत्यत आह न चेति। अकाम्यफलेति। न काम्यं स्वर्गादिकम् अव्यवधानेन फलं यस्येत्यर्थः। नियोक्तुं प्रवर्तयितुम्। तत इति। अन्यदेव स्वर्गसाधनम् अनेन कार्यत्वेन धर्मितया उपलक्षणीयं तच्चापूर्वमेवेत्यर्थः। कार्यत्वेन धर्मि किञ्चिदुपलक्षणीयमिति यदुक्तं तत्र पृच्छति उपलक्षणमिति। कार्यत्वेन धर्मेणापूर्वस्य धर्मिणः सम्बन्धस्यावगमो नास्तीति नेदमुपलक्षणीयमित्यर्थः। ननु यथा संस्कारादीनामज्ञातमेव ज्ञापकत्वं तथा प्रकृतेऽपि स्यादत आह न हीति। ज्ञानापेक्षणादिति। स्मारकस्यानुमापकस्य वा सम्बन्धज्ञानापेक्षणादित्यर्थः। एतदेव दृष्टान्तेन दर्शयति तत इति।

---

प्रकाशः- कार्य्यत्वमिति। वृद्धव्यवहाराद्व्युत्पद्यमानो बालः आत्मन्यवगतं प्रवृत्तिहेतुं कार्य्यत्वं लिङमवधारयति। ततः कार्य्यशक्तं लिङ्पदं स्वर्गयोः कार्य्यत्वं त्यक्त्वा स्वर्गसाधनतायोग्यं तन्मध्यवर्त्तिकार्य्यत्वोपलक्षितमपूर्वत्वमनुभावयिष्यतीत्यर्थः।

उपलक्षणं हीति। यथा गङ्गापदं स्वार्थान्वयानुपपत्त्या स्वसम्बन्धितया प्रतीतचरं तीरं स्मारयति, यथा वा व्याप्यं व्यापकतयाऽवगतमनुमापयति, न तद्वदपूर्वमप्रतीतचरत्वेन सम्बन्धितया व्यापकतया वाऽनवगतं कार्य्यत्वं स्मारयितुमनुमापयितुं वाऽलमित्यर्थः। न च यथा संस्कारादिरज्ञात एव स्मृत्यादि जनयति, एवं कार्य्यत्वमज्ञातमेवापूर्वं ज्ञापयति, सम्बन्धित्वव्याप्यत्वाभ्यां ज्ञातस्यैव ज्ञापकत्वादित्याह न हीति। तत्सम्बन्धेति। अपूर्वेण सम्बन्धज्ञानादित्यर्थः।

---

मकरन्दः- एवं कार्य्यत्वमिति। स्वभावादिति भावः। तमेवाह सम्बन्धित्वेति। प्रागुक्तेति। उपलक्षितस्येत्यादिना प्रागुक्तेत्यर्थः।

